आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३७



कृष्णयजुर्वेदीयं

# तैत्तिरीय-ब्राह्मणम् ॥

द्वितीयो भागः )।

तृतीया अङ्कनावृत्तिः ।

मूल्यं-पञ्चत्रिंशद्रूप्यकाः । ( रु. ३५-०० )

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३७

कृष्णयजुर्वेदीयं

# तैत्तिरीय-ब्राह्मणम् ॥

( द्वितीयकाण्डगतषष्ठमप्रपाठकादारभ्य तृतीयकाण्डस्य सप्तमप्रपाठकान्तः द्वितीयो भागः )।

एतत्पुस्तकम्

वे० 'गोडबोले' इत्युपाह्वैः नारायणशास्त्रिभिः संशोधितम् ।

तच्च

आनन्दाश्रमस्य कार्यकारीविश्वस्तैः

आश्रममुद्रणालये मुद्रयित्वा तत्रैव प्रकाशितम् ।




तृतीया अङ्कनावृत्तिः ।

खिस्ताब्दाः १९७९

शकाब्दाः १९०१



मूल्यं-पञ्चत्रिंशद्रूप्यकाः । ( रु. ३५-०० )

# अथ द्वितीयकाण्डे षष्ठप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
उपहोमार्थमन्त्राणां पञ्चमे शेष ईरितः ।
षष्ठे प्रपाठके सौत्रामणिः कौकिल्युदीर्यते ॥ २ ॥

तत्र प्रथमानुवाके ग्रहा उच्यन्ते । कल्पः—“ सुरायाः संधानकाले तोक्मैर्मासरेण नग्नहुना च सुरां संसृज्य ” इति । अङ्कुरिता व्रीहयस्तोक्माः । ईषत्पक्वानां यवानां चूर्णं द्विविधं सूक्ष्मं स्थूलं च । तत्र सूक्ष्मं चूर्णं दध्ना तक्रेण वा मिश्रितं दर्भैः प्रच्छन्नं मासरमित्युच्यते । स्थूलचूर्णं तु मन्थेन मिश्रितं दर्भैः प्रच्छन्नं नग्नहुरित्युच्यते । तैस्तोक्ममासरनग्नहुभिः सुरायाः संसर्जनार्थं स्वाद्वीं त्वेति मन्त्रः । तत्पाठस्तु—

स्वाद्वीं त्वां स्वादुनां । तीव्रां तीव्रेणं । अमृतां-मृमृतेन । मधुमतीं मधुमता । सृजामि सꣳ सोमेन । सोमोऽस्यश्विभ्यां पच्यस्व । सरस्वत्यै पच्यस्व । इन्द्राय सुत्राम्णे पच्यस्व, इति ।

हे सुरे स्वाद्वीं त्वा स्वादुना सोमेन संसृजामि । अत्र सोमशब्देन पूर्वोक्तं तोक्ममासरनग्नहुशब्दाभिधेयद्रव्यत्रयमुपलक्ष्यते । सोमस्यौषधिराजत्वेन तदुपलक्षणं कर्तुं शक्यम् । कीदृशीं त्वां तीव्रामुग्रगन्धाममृताममृतवदाप्यायनकरीम् । अत एव बलीवर्दादीनाप्याययितुं पाययन्ति । मधुमतीं माधुर्येणोपेताम् । कीदृशेन सोमेन तीव्रेण वमनाद्युपयुक्तौषधित्वेन सोमस्य तीव्रत्वम् । अमृतेन “ अपाम सोमममृता अभूम ” इति श्रुतेरमृतत्वप्रापकेण । मधुमता माधुर्ययुक्तेन । एवंविधसोमरूपतया भावितैस्तोक्मादिभिर्युक्तत्वात्त्वं सोमोऽसि । तस्माद्देवतात्रयार्थं त्वं पच्यस्व सुत्राम्णे सुष्ठु रक्षकाय ।

कल्प—“ सक्तूनां तृतीयेन परिकीर्य परीतो षिञ्चता सुतमित्येकस्या

---

१ क. ख. “माख्यम”।

गोर्दुग्धेन परिषिच्य" इति । श्यामाकसक्तूंस्त्रेधा विभज्य तृतीयांशं सुरायामुपरि विकीर्य तदुपरि दुग्धपरिषेचनार्थोऽयं मन्त्रः । तत्पाठस्तु—

परीतो षिञ्चता सुतम् । सोमो य उत्तमꣳ हविः (१) । दधन्वा यो नर्यो अप्स्वन्तरा । सुषाव सोममद्रिभिः, इति ।

यः सोमलतात्मकस्तदेवेदमुत्तमं हविस्तदत्र सुतमभिषुतमितोऽस्मात्क्षीरात्परितः सिक्तमभूव । यः सोमो नर्यो नराणां यजमानानां हितः सन्नप्स्वन्तरा द्रवद्रव्येषु मध्य आ समन्ताद्दधन्वा स्वादुत्वं धारयति तं सोममद्रिभिरुपांशुसवनप्रभृतिभिः पाषाणैः सुषाव यजमानोऽभिषुतवान् ।

यदुक्तं सूत्रकारेण—"आज्यमुत्पूय पय उत्पुनाति प्राङ्सोमो अतिद्रुत इति सोमवामिनः, प्रत्यङ्सोमो अतिद्रुत इति सोमातिपावितस्य" इति । तत्र सोमवामिनो मन्त्रमाह—

पुनातु ते परिस्रुतम् । सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना । वायुः पूतः पवित्रेण । प्राङ्सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा, इति ।

हे इन्द्र ते त्वदर्थं सूर्यस्य दुहिता पयः पावयन्ती सूर्यस्य संबन्धिनी दुहितृस्थानीया दीप्तिः स्रुतं द्रवीभूतं सोमं सोमत्वेन भावितं पयोद्रव्यं वारेण वालजन्येन पवित्रेण पुनातु शोधयतु । कीदृशेन वारेण शश्वता शाश्वतेन दृढेन तना विस्तीर्णेन तादृशेनानेन पवित्रेण पूतः सोमः पयोरूपो वायुवच्छीघ्रगामी भूत्वा प्राङूर्ध्वं निर्गतः । कीदृशः सोम इन्द्रस्य युज्यो योग्यः सखा तादृशोऽयं सोमः शुद्धो भवत्वित्यर्थः । यः पूर्वं सोमयागं कृत्वा वान्तिं कृतवांस्तस्येदानीं सौत्रामण्यां पयःशोधनार्थोऽयं मन्त्रः ।

यस्य तु पुरा सोमो जीर्णः सोऽयं सोमातिपावितो यद्वा यस्य सोमोऽधोद्वारेण निर्गतः सोऽयं सोमातिपावितस्तस्य पयःशोधनार्थं मन्त्रमाह—

वायुः पूतः पवित्रेण । प्रत्यङ्सोमो अति-

द्रुतः (२) । इन्द्र॑स्य यु॒ज्यः॑ सखा॑, इति ।

अत्र "पुनातु ते परिस्रुतम्" इति पूर्वभागोऽनुषज्यते । प्रत्यङ्ङतिद्रुतोऽर्थो निर्गतः । अन्यत्पूर्ववद्व्याख्येयम् ।

कल्पः—"ब्रह्म क्षत्रं पवत इति सुरां प्रतिप्रस्थाता" इति । पुनातीत्यनुवर्तते । पाठस्तु—

ब्रह्म॑ क्ष॒त्रं पव॑ते॒ तेज॑ इन्द्रि॒यम् । सुर॑या॒ सोम॑ः

सु॒त आसु॑तो॒ मदा॑य । शु॒क्रेण॑ देव दे॒वता॑ः

पिपृग्धि । र॒सेना॒न्नं यज॑मानाय धेहि, इति ।

ब्राह्मणजातिः क्षत्रियजातिश्च तेजःकारणमिन्द्रियवृद्धिकारणं चेदं द्रव्यं पवते पुनाति । अनया सुरया सह सोमः सुत उत्पादितः । मदाय देवानां मदार्थमासुतः सर्वतोऽभिषुतश्च । हे सोमदेव तव शुक्रेण निर्मलेन र॑ देवताः पिपृग्धि संपृक्ताः कुरु । यजमानाय चान्नं संपादय ।

कल्पः—"अध्वर्युः पयोग्रहान्गृह्णाति कुविदङ्गेति सर्वेषामेका पुरोरुगेका पुरोनुवाक्या, एकः प्रैषः, एका याज्या, उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा यवसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिस्तेजसे त्वेति सादयित्वोपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा गोधूमसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिर्वीर्याय त्वेति सादयित्वोपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वोपवाकसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिर्बलाय त्वेति सादयित्वा" इति । तत्र पुरोरुचमाह—

कु॒विद॒ङ्ग यव॑मन्तो॒ यवं॑ चित् । यथा॑ दान्त्य॑-

नुपू॒र्वं वि॒यूय॑ । इ॒हेहै॑षां कृणुत॒ भोज॑नानि ।

ये ब॒र्हिषो॒ नमो॑वृक्तिं॒ न ज॒ग्मुः, इति ।

अङ्गशब्दः प्रियसंबोधनवाचकः । हे प्रिया अश्विसरस्वतिसुत्रामेन्द्रा ये यज्वानो बर्हिषो यागस्य नमोवृक्तिं नमस्कारविनाशनं न जग्मुर्न प्रापुः । किंत्वत्यन्तश्रद्धालवोऽनुतिष्ठन्ति तेषामेषां यजतां हविर्विषयाणि भोजनानीहेह कृणुत । ग्रहणपात्राणामनेकत्वाद्वीप्सा । तत्रोपमानमुच्यते—कुविच्छब्दो

बहुर्थवाची चिच्छब्दः समुच्चये । यथा लोके यवमन्तो यवादिधान्योपेताः कृषिकाः कुविद्यवं चिद्बहुलं यवमन्यानि च गोधूमप्रियङ्ग्वादिधान्यान्यनुपूर्वं तत्तत्परिपाकानुक्रमेण वियूय विधूय विशेषेणेदं पक्वमिदमपक्वमिति पृथक्कृत्य दान्ति लुनन्ति तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ध्वम् ।

अथ ग्रहणमन्त्रानाह—

उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि

(३) । सरस्वत्या इन्द्राय सुत्राम्णे, इति ।

उपयामशब्दः पृथिवीकार्यदारुपात्रवाची । "इयं वा उपयामः" इति श्रुतेः । पयोरूपद्रव्यविशेष त्वमुपयामेन गृहीतोऽस्यश्विदेवार्थं त्वामिह पात्रे गृह्णामि । सरस्वतीमन्त्रे पूर्वोत्तरभागावनुषञ्जनीयौ तथा सुत्राममन्त्रेऽपि ।

अथ सादनमन्त्रानाह—

एष ते योनिस्तेजसे त्वा ।

वीर्याय त्वा बलाय त्वा, इति ।

ह आश्विनग्रहैष खरप्रदेशस्ते तव स्थानम् । अस्मिन्स्थाने तेजःसिद्ध्यर्थं त्वां सादयामीति शेषः । वीर्यबलमन्त्रयोरप्येष ते योनिरित्यनुवर्तते । हे सारस्वतग्रह वीर्यवृद्धये त्वामिह सादयामि । हे सुत्रामग्रह बलवृद्धये त्वामिह सादयामि ।

कल्पः—"उत्तरैर्यथालिङ्गमुपतिष्ठते" इति । पाठस्तु—

तेजोऽसि तेजो मयि धेहि । वीर्यमसि वीर्यं

मयि धेहि । बलमसि बलं मयि धेहि, इति ।

ग्रहत्रयं क्रमेण संबोध्य योजनीयम् ।

कल्पः—"सुरायां वाल आनीयमानायां धारायाः प्रतिप्रस्थाता सुराग्रहान्गृह्णाति नाना हि वां देवहितं सदः कृतमिति सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्योपयामगृहीतोऽस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्मोदाय त्वेति सादयत्युपयामगृहीतोऽसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा पवि-

त्रेण परिमृज्यैष ते योनिरानन्दाय त्वेति सादयत्युपयामगृहीतोऽस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्महसे त्वेति सादयति" इति। तत्र पुरोरुचमाह—

नाना हि वां देवहितꣳ सदः कृतम्। मा सꣳसृक्षाथां परमे व्योमन्। सुरा त्वमसि शुष्मिणी सोम एषः। मा मा हिꣳसीः स्वां योनिमाविशन्(४), इति।

हे सुरे हे सोम वां युवयोर्नाना पृथग्भूतं सदः स्थानं देवेभ्यो हितं कृतं संपादितं तस्मात्तौ युवां मा संसृक्षाथां परमे व्योमन्नुत्कृष्टे मदीयरक्षणे निमित्तभूते सति परस्परसंसृष्टौ मा भूतम्। हे गृह्यमाणद्रव्यविशेष त्वं शुष्मिणी बलवती सुराऽसि। एष तु सोमः शान्तात्मा ततश्च युवयोः संसर्गो न युज्यते। हे सोम स्वां योनिं मृदूदररूपं स्वस्थानमाविशन्मां सोमस्य पातारं मा हिंसीः।

अथ ग्रहणमन्त्रानाह—

उपयामगृहीतोऽस्याश्विनं तेजः। सारस्वतं वीर्यम्। ऐन्द्रं बलम्, इति।

हे द्रव्यविशेष [*त्वदीयरक्षणे निमित्तभूते सति परस्परसंसृष्टौ मा भूवम्। हे गृह्यमाणद्रव्य, उपयामेन] गृहीतोऽसि। तदिदं तव स्वरूपमश्विसंबन्धि तेजोऽतोऽश्विभ्यां त्वा जुष्टं गृह्णामीति शेषः। एवं सारस्वतमन्त्र ऐन्द्रमन्त्रश्च सूत्रोक्तक्रमेणानुषङ्गशेषपूरणाभ्यां योजनीयः।

अथ सादनमन्त्रानाह—

एष ते योनिर्मोदाय त्वा। आनन्दाय त्वा। महसे त्वा, इति।

सूत्रोक्तक्रमेण ग्रहत्रयं सादने योजनीयम्।

---

* अयं पाठः कखपुस्तकयोर्न दृश्यते।

कल्पः—"षण्णामनुवाकशेषेणाध्वर्युर्यजमानश्चोपतिष्ठते, उत्तरेण चानुवाकेन" इति। तत्रानुवाकशेषे चत्वारि यजूंष्याह—

ओजोऽस्योजो मयि धेहि। मन्युरसि
मन्युं मयि धेहि। महोऽसि महो मयि
धेहि। सहोऽसि सहो मयि धेहि, इति।

ओजो बलं मन्युर्दीप्तिः, महः पूजा सहोऽभिभवितृत्वम्। हे द्रव्यविशेष त्वमुक्तैर्गुणैर्युक्तोऽस्यतो मय्यपि तान्गुणान्संपादय।

अथैकामृचमाह—

या व्याघ्रं विषूचिका। उभौ वृकं च रक्षति।
श्येनं पतत्रिणꣳ सिꣳहम्। सेमं पात्वꣳहसः, इति।

भुक्तान्नजरणविरोधिव्याधिविशेषो विषूचिका। तादृशी या व्याघ्रं वृकं चोभौ रक्षति। वृकोऽरण्यश्वा। व्याघ्रवृकयोर्दीपनपाटवात्कदाचिदप्यजरणदोषो नास्ति। तथा सा विषूचिका श्येनाख्यं पक्षिणं सिंहं च रक्षति। तयोरपि नास्ति सा व्याधिः। सा व्याघ्रादिरक्षिका विषूचिकेमं यजमानमंहसः पापफलाद्व्याधेः पातु।

अथ यजुर्द्वयमाह—

संपृचस्थ सं मा भद्रेण पृङ्क्त। विपृचस्थ
वि मा पाप्मना पृङ्क्त (५), इति।

हविः प्रत्यङ्क्सोमो अतिद्रुतो गृह्णाम्याविशन्विषूचिका पञ्च च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये
प्रथमोऽनुवाकः॥ १॥

====

हे इन्द्रपात्रस्थद्रव्यविशेषा यूयं द्रवत्वेन स्वभावतः संपर्कशीलाः स्थ, अतो मां भद्रेण श्रेयसा संयोजयत। इह तु पृथक्पात्रे धृतत्वाद्विपृचो वियुक्तरूपाः स्थ, अतो मां पाप्मना विपृङ्क्त वियोजयत।

अत्र विनियोगसंग्रहः—

स्वाद्वीं त्वेत्यादिभिर्योज्यं सुरा क्षीरं पुनेत्यतः ।
ऋचां त्रयात्पुनीयात्सुरां ब्रह्मेति शोधयेत् ॥ १ ॥
कुविदङ्गेत्यृचं ब्रूयादुपयामादिभिस्त्रिभिः ।
पयः पात्रत्रये ग्राह्यमेषा सादयते त्रिभिः ॥ २ ॥
तेजस्त्रिभिरुपस्थेयं नानेत्येतां पुरोरुचम् ।
सुराग्रहे पठेन्मन्त्रैरुपयामादिभिस्त्रिभिः ॥ ३ ॥
सुरां गृह्णात्यथैवाद्यैर्मन्त्रैः संसादयेत्त्रिभिः ।
ओजोऽसीत्यादिभिः सप्तमन्त्रैस्तानुपतिष्ठते ।
प्रथमे ह्यनुवाकेऽस्मिन्नेकोनत्रिंशदीरिताः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ षष्ठप्रपाठके द्वितीयोऽनुवाकः ।

---

प्रथमे ग्रहा उक्ताः । द्वितीये तदुपस्थानमुच्यते । तत्र प्रथमामृचमाह—

सोमो राजाऽमृतꣳ सुतः । ऋजीषेणाजहान्मृत्युम् ।
ऋतेन सत्यमिन्द्रियम् । विपानꣳ शुक्रमन्धसः ।
इन्द्रस्येन्द्रियम् । इदं पयोऽमृतं मधु, इति ।

अयमभिषुतः सोमो राजा स्वयममृतं पीयूषसमानो यथा पीयूषं पिब-तोऽपमृत्युर्नास्त्येवं सोमपस्यापि नापमृत्युरित्यर्थः । तत्रायं हेतुः—ऋजी-षेण कीदृक्स्थानीयेन नीरसेन मृत्युमजहात् । ऋजीषे ह्यपमृत्युमजहात् । ऋजी-षमपमृत्युप्रापकं रसनिःसरणेन तस्य परित्यागादपमृत्युहेतुः परित्यक्तः । अतोऽयमृतेन यज्ञनिष्पादनेनेन्द्रियमिन्द्रियवृद्धिहेतुस्तदेतत्सत्यं शपथं करो-मीत्यर्थः । अन्धसोऽन्नरसादपि विपानं विशेषेण पानयोग्यं सोमरसरूपममृ-तमतः शुक्रं शुद्धं योऽयमिन्द्रस्तस्यापीन्द्रियवृद्धिकारणमिदम् । किंचेदं द्रव्यं मधु पयो मधुरं क्षीररूपमन एवामृतरूपम् ।

अथ द्वितीयामाह—

सोममद्भ्यो व्यपिबत् । छन्दसा हꣳसः शुचिषत् ।

ऋतेन॑ स॒त्यमि॑न्द्रि॒यम् । अ॒द्भ्यः क्षी॒रं व्य॑पिबत् (१) । क्रुङ्ङा॑ङ्गिर॒सो धि॒या । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् । अन्ना॑त्परि॒स्रुतो॒ रस॑म् । ब्रह्म॑णा॒ व्य॑पिबत्क्ष॒त्रम् । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्, इति ।

शुचौ शुद्धप्रदेशे स्वर्गे सीदतीति शुचिषद्धंसः सर्वप्राणिहृदि स्थितो जीवात्मा तद्रूपधारीन्द्रश्छन्दसा स्वेच्छया तमिमं सोममद्भ्यः सकाशाद्विश्लिष्याऽपिबत्। ऋतेन यज्ञद्वारेणेन्द्रियवृद्धिहेतुः सोमस्तदेतत्सत्यम्। तत्र दृष्टान्तः— यथा लोके क्रुङ् क्रौञ्चपक्ष्याङ्गिरसः सर्वाङ्गसंबन्धिसारयुक्तः पुष्टशरीर इत्यर्थः। तादृशो धिया स्वबुद्ध्या क्षीरमद्भ्यो विविच्यापिबत्। क्षीरपात्रे स्वमुखे प्रक्षिप्ते सति मुखगताम्लरससंपर्कात्क्षीरांशो जलांशश्चोभौ विविच्येते। तत्र जलभागं परित्यज्य क्षीरभागमेव पिबति। तद्वदयमिन्द्रोऽपि सोमरसं जलभागाद्विविच्य पिबति। अतो यज्ञद्वारेणेन्द्रियवृद्धिहेतुः सोमस्तदेतत्सत्यम्। तत्रैवान्यो दृष्टान्त उच्यते—यथा क्षत्रं क्षत्रियजातिर्ब्रह्मणा प्रौढेन क्षीराज्यादिना योगात्परितः स्रवतीति परिस्रुदन्नं तस्मादन्नात्संपन्नं रसं पिबति। राजादयो हि भोजनकाले प्रभूते क्षीरे वा व्रीह्याद्यन्नं प्रक्षिप्य तदन्नं रसोपेतं क्षीरादिकं पिबति। एवमिन्द्रोऽयमपि सारभूतं रसं पिबति। ऋतेनेति पूर्ववत्।

अथ तृतीयामाह—

रेतो॒ मूत्रं॒ विज॑हाति । योनिं॑ प्रवि॒शदि॑न्द्रि॒यम् । गर्भो॑ ज॒रायु॒णाऽऽवृ॑तः । उल्बं॑ जहाति॒ जन्म॑ना । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् (२) । वेदे॑न रू॒पे व्य॑करोत् । स॒ता॒स॒ती प्र॒जाप॑तिः । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् । इति ।

यथा लोके स्त्रीयोनिं प्रविशत्पुरुषस्येन्द्रियं रेतो मूत्रं च विभज्य परित्यजति। मूत्रस्य बहिस्त्यागः। रेतसो गर्भाशये त्यागः। तद्रेतःपरिणामो जरायुणा वेष्टितो गर्भो [illegible] स्वकीयेन जन्मना तदावरणरूपमुल्बं जहाति। एवमिन्द्रो

ष्यसारं परित्यज्यैकस्मिन्नपि पात्रे सारमेव स्वी करोति । ऋतेनेति पूर्ववत् । यथा प्रजापतिरेकरूपेण वेदेन पर्यालोच्य सतासती पृथिव्यादिसद्रूपं शशविषाणाद्यसद्रूपं च विभज्याकरोत् । तथाऽयमिन्द्रः सारासारविभागं कृतवान् । ऋतेनेति पूर्ववत् ।

अथ चतुर्थीमाह—

सोमेन सोमौ व्यपिबत् । सुतासुतौ प्रजापतिः ।
ऋतेन सत्यमिन्द्रियम् । दृष्ट्वा रूपे व्याकरोत् ।
सत्यानृते प्रजापतिः । अश्रद्धामनृतेऽदधात् । श्रद्धाꣳ
सत्ये प्रजापतिः । ऋतेन सत्यमिन्द्रियम्, इति ।

प्रजापतिरेकरूपेण सोमद्रव्येण युक्तो रसात्मकोऽयं सोमोऽभिषुतो वल्कपात्मकोऽयं सोमो नाभिषुत इति विभज्य तत्र रसात्मकमेवापिबत् । अत्र प्रजापतिशब्देन प्रजापालकत्वादिन्द्रो विवक्षितः । तत्र विभागे दृष्टान्त उच्यते— यथा प्रजापतिः सत्यवदनमनृतवदनं चेत्येवं वचनस्य द्वे रूपे विशेषेण सृष्टवान् । ततोऽनृते प्रजानामश्रद्धामविश्वासं स्थापितवान् । सत्यवचने तु स प्रजापतिर्विश्वासं स्थापितवान् । एवमयमिन्द्रोऽप्यभिषुतमेव पिबति ।

अथ पञ्चमीमाह—

दृष्ट्वा परिस्रुतो रसम् । शुक्रेण शुक्रं व्यपिबत् ।
पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । वि-
पानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोऽ-
मृतं मधु ( ३ ), इति ।

अद्भ्यः क्षीरं व्यपिबज्जन्मनर्तेन सत्यमिन्द्रियꣳ
सत्ये प्रजापतिरष्टौ च ।

सोमो राजा विपानꣳ सोममद्भ्यश्चाऽन्नाद्रेतो मूत्रं वेदेन सतासती सोमेन सुतासुतौ

दृष्ट्वा रूपे दृष्ट्वा परिस्रुतो रसं विपानं दर्श ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये द्वितीयोऽनुवाकः ।

प्रजानां पालकोऽयमिन्द्रः परिस्रुत आलवालस्य परितः स्रवणं कुर्वतो द्रव्यस्य रसं दृष्ट्वा तत्र शुक्रेण शुद्धेन द्रव्यान्तरेण सहितं शुद्धद्रव्यान्तरं पयः सोमं च विशेषेणापिबत् । ऋतेनेत्यादिकं प्रथममन्त्रवद्व्याख्येयम् । एतैः पञ्चभिर्मन्त्रैरुपस्थानं कुर्यात् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अथ षष्ठे तृतीयोऽनुवाकः ।

द्वितीये ग्रहोपस्थानमुक्तम् । तृतीये ग्रहहोमोऽभिधीयते ।

कल्पः—"सुरावन्तमिति पयोग्रहाञ्जुहोति" इति । पाठस्तु—

सुरावन्तं बर्हिषदꣳ सुवीरम् । यज्ञꣳ हिन्वन्ति महिषा नमोभिः । दधानाः सोमं दिवि देवतासु । मदेमेन्द्रं यजमानाः स्वर्काः, इति ।

महिषा महनीयाः पूजनीया यजमाना नमोभिर्नमस्कारैर्मन्त्रैर्यज्ञमिमं सौत्रामण्याख्यं हिन्वन्ति प्रीणयन्ति सम्यगनुतिष्ठन्तीत्यर्थः । कीदृशं यज्ञं सुरावन्तं सुराद्रव्योपेतं बर्हिषदं बर्हिषि दर्भे आसाद्यमानेन हविषा युक्तं सुवीरं शोभनापत्यप्रदम् । दिवि द्युलोके देवतासु सोमं दधानाः संपादयन्तो वयं यजमानाः स्वर्काः शोभनेनार्चनेन युक्ता इन्द्रं मदेम हृष्टं करवाम ।

कल्पः—"यस्ते रसः संभृत इति सुराग्रहान्" इति । जुहोतीत्यनुवर्तते । पाठस्तु—

यस्ते रसः संभृत ओषधीषु । सोमस्य शुष्मः सुरया सुतस्य । तेन जिन्व यजमानं मदेन । सरस्वतीमश्विनाविन्द्रमग्निम्, इति ।

हे सुरे योऽयं ते रस ओषधीषु व्रीह्यादिषु संभृतः संपादितः सुतस्याभिषुतस्य सोमस्य शुष्मो बलमदो रसः सुरया संयोजितस्तेन मदेन तदीयेन हर्षेण यजमानं जिन्व प्रीणय । तथा सरस्वत्यादिदेवांश्च प्रीणय ।

कल्पः—"यमश्विना नमुचेरयाश्विनमध्वर्युर्भक्षयति" इति । पाठस्तु—

यमश्विना नमुचेरासुरादधि । सरस्वत्यसनोदिन्द्रियाय (१) । इमं तꣳ शुक्रं मधुमन्तमिन्दुम् । सोमꣳ राजानमिह भक्षयामि, इति ।

अश्विनौ देवौ यं रसं नमुचिनाम्नोऽसुरादध्याहृतवन्तौ । सरस्वती चेन्द्रियार्थमसनोत्प्रादात् । तमिमं सोमं राजानमिह कर्मणि भक्षयामि । कीदृशं सोमं शुक्रं शुद्धं मधुमन्तं माधुर्योपेतमिन्दुमाह्लादकं परमैश्वर्यप्रदं वा ।

कल्पः—"यदत्र रिप्तमिति सारस्वतं प्रतिप्रस्थाताऽऽग्नीध्रश्च" इति । भक्षयत इति शेषः । पाठस्तु—

यदत्र रिप्तꣳ रसिनः सुतस्य । यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन । सोमꣳ राजानमिह भक्षयामि, इति ।

रसिनो रसयुक्तस्य सुतस्याभिषुतस्य सोमात्मकस्य पयसो यदवशिष्टं पात्रे रिप्तं लिप्तं यच्चेन्द्रः स्वकीयाभिः शचीभिः शक्तिभिः सहापिबत् । अस्य सोमात्मकस्य पयसस्तदवशिष्टं रसरूपं सोमराजत्वेन भाव्यमानमिह कर्मणि शिवेन मनसाऽहं भक्षयामि ।

कल्पः—" दक्षिणेनाऽऽहवनीयं पयःशेषं पितृपितामहप्रपितामहेभ्यो ददाति पितृभ्य [ इति ] " इति । पाठस्तु—

पितृभ्यः स्वधाविभ्यः स्वधा नमः । पितामहेभ्यः स्वधाविभ्यः स्वधा नमः । प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नमः । अक्षन्पितरः (२) ।

अमीमदन्त पितरः । अतीतृपन्त पितरः । अमीमृजन्त पितरः । पितरः शुन्धध्वम्, इति ।

स्वधाकारस्तृप्तिहेतुरेषामस्तीति ते स्वधाविनस्तादृशेभ्यः पितृभ्यः स्वधा पयःशेषोऽयं समर्पितस्तथा तेभ्यो नमस्कारोऽस्तु । एवं पितामहप्रपितामहयोर्योजनीयम् । एते पितरो भुक्तवन्तः । भुक्त्वा चास्मानमीमदन्त संतुष्टान्कुर्वन्तः । अतीतृपन्त तृप्तियुक्तान्कुर्वन्तः । अमीमृजन्त शोधितवन्तः । हे पितरो यूयमपि शुन्धध्वं शुद्धा भवत ।

कल्पः— "पुनन्तु मा पितरः सोम्यास इत्युपतिष्ठते" इति । तत्रोपस्थानसाधनभूतासु दशस्वृक्षु प्रथमामृचमाह—

पुनन्तु मा पितरः सोम्यासः । पुनन्तु मा पितामहाः । पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा, इति ।

सोम्यासोऽनुग्राहकत्वेन सौम्याः पितरः पवित्रेण शुद्धेन शतसंख्याकेनाऽऽयुषा मां पुनन्तु शोधयन्तु । एवं पितामहप्रपितामहाश्च ।

अथ द्वितीयामाह—

पुनन्तु मा पितामहाः । पुनन्तु प्रपितामहाः (३) । पवित्रेण शतायुषा । विश्वमायुर्व्यश्नवै, इति ।

पूर्वमन्त्रोक्तानामपि पुनः कथनमादरार्थम् । एतेषां प्रसादेनाहं सर्वमप्यायुः प्राप्नवानि ।

अथ तृतीयादीनामष्टानामृचां प्रतीकानि दर्शयति—

अग्न आयूंषि पवसेऽग्ने पवस्व । पवमानः सुवर्जनः पुनन्तु मा देवजनाः । जातवेदः पवित्रवयत्ते पवित्रेणार्चिषि । उभाभ्यां देव सवितर्वैश्वदेवी पुनती, इति ।

अत्राऽऽद्यमृग्द्वयं तु "त्वमग्ने रुद्रः" इत्यनुवाके व्याख्यातम् । अवशिष्टं षट्कं "पवमानः सुवर्जन" इत्यनुवाके व्याख्यातम् ।

कल्पः—"अथाऽऽहुतीर्जुहुतो ये समाना इत्यध्वर्युर्ये सजाता इति प्रतिप्रस्थाता" इति । पाठस्तु—

ये स॒माना॒: सम॑नसः । पि॒तरो॑ यमरा॒ज्ये॑ । तेषां॑ लो॒कः स्व॒धा नम॑: । य॒ज्ञो दे॒वेषु॑ कल्पताम् (४), इति ।

यमराज्ये यमलोके वर्तमानाः पितरो मया समानस्वभावाः संगतमनस्काश्च ये सन्ति तेषां पितृणां लोको ममास्त्विति शेषः । तेभ्यः पितृभ्यः स्वधा हविःशेषो दत्तो नमस्कारश्च कृतः । अयं मदीयो यज्ञो देवेषु कल्पतां तृप्तिप्रदो भवतु ।

अथ द्वितीयामाह—

ये स॒जा॒ताः सम॑नसः । जी॒वा जी॒वेषु॑ माम॒काः । तेषा॒ꣳ श्रीर्मयि॑ कल्पताम् । अ॒स्मिँ॒ल्लो॒के श॒तꣳ समा॑:, इति ।

जीवेषु वर्तमानेषु मध्ये मामका मदीया ये जीवाः सजाता भ्रात्रादिरूपेण मया सहोत्पन्नाः संगतमनस्का मयि प्रीतियुक्तास्तेषां सर्वेषां श्रीर्धनादिसंपन्मयि कल्पतां तिष्ठतु मदधीना भवत्वित्यर्थः । अस्मिँल्लोके मम समाः शतसंख्याकाः सन्तु ।

अथ "द्वे स्रुती" इत्यादिमन्त्रो वल्मीकवपायां सुरावपनार्थः । स च पूर्वकाण्डे "युवं सुराम्" इत्यनुवाके राजसूयान्तर्गतसौत्रामण्यर्थमाम्नातः । इह तु कौकिल्यर्थमाम्नायते । पाठस्तु—

द्वे स्रु॒ती अ॑शृणवं पितृ॒णाम् । अ॒हं दे॒वाना॑मु॒त मर्त्या॑नाम् । याभ्या॑मि॒दं विश्व॑मे॒जत्समे॑ति । यद॑न्त॒रा पि॒तरं॑ मा॒तरं॑ च, इति ।

१ क. °वसेकार्थः ।

मरणशीलानां श्रौतमार्गवर्तिनां कर्मानुष्ठायिनामुपासकानां च दक्षिणमार्ग उत्तरमार्गश्चेति स्रुती द्वौ मार्गौ वेदमुखादहं श्रुतवानस्मि । तत्रैकः पितॄणां संबन्धी तल्लोकप्राप्तिहेतुत्वात् । अन्यश्च देवानां संबन्धी ब्रह्मलोकप्राप्तिहेतुत्वात् । एतौ चोभौ मार्गौ छान्दोग्यबृहदारण्यकयोः स्पष्टमाम्नातौ— "ते धूममभिसंभवन्ति । धूमाद्रात्रिम्" इति दक्षिणमार्गः । "तेऽर्चिषमभिसंभवन्ति, अर्चिषोऽहः" इत्यादिरुत्तरमार्गः । एजत्कम्पमानं परलोकगतियुक्तमिदं विश्वं प्राणिजातं याभ्यां मार्गाभ्यां तत्तल्लोकं सम्यक्प्राप्नोति । यन्मार्गद्वयं पितरं मातरं चान्तरा द्यावापृथिव्योर्मध्ये वर्तते तादृशमार्गद्वयमहमशृणवमित्यन्वयः ।

कल्पः—"इदं हविरित्यैन्द्रं ब्रह्मा यजमानश्च" इति । हविःशेषं भक्षयत इति शेषः । पाठस्तु—

इदꣳ हविः प्रजननं मे अस्तु । दशवीरꣳ सर्वगणꣳ स्वस्तये । आत्मसनि प्रजासनि । पशुसन्यभयसनि लोकसनि । अग्निः प्रजां बहुलां मे करोतु । अन्नं पयो रेतो अस्मासु धत्त । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा (५), इति

इन्द्रियाय पितरः शतायुषा पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः कल्पता स्वस्तये पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

इदं भक्ष्यमाणं हविर्मे स्वस्तयेऽस्तु मम क्षेमाय भवतु । कीदृशं हविः, प्रजननं प्रजोत्पादकं दशवीरं दशसंख्याकैः कर्मशूरैः पुत्रैर्युक्तं तथा बन्धुभृत्यादिभिर्बहुभिर्गणैर्युक्तं सर्वगणम्, जीवात्मानमस्मिञ्शरीरे चिरकालावस्थायिनं सनोति ददातीत्यात्मसनि प्रजासनि पशुसनि प्रजां पशून्ददातीति प्रजासनि पशुसनि, अभयसनि भीतिराहित्यं परलोकान्ददातीति । अयमग्निर्मदीयां प्रजां बहुलां करोतु । देवा अन्नादीनस्मासु संपादयत । तथा धनपुष्टयन्नरसानस्मासु धारयत । इदं हविरस्मदुदरे स्वाहा हुतमस्तु ।

अत्र विनियोगसंग्रहः—

'सुरा' 'यस्ते' क्रमात्कार्या द्वाभ्यां क्षीरसुराहुतिः ।
यमाश्विनेत्याश्विनाख्यमध्वर्युर्भक्षयेत्तथा ॥ १ ॥
सारस्वतं प्रतिप्रस्थाताऽऽग्नीध्रश्च यदित्यतः ।
'पितृभ्यः' इत्यादिकेन पयःशेषं ददाति हि ॥ २ ॥
देश आहवनीयस्य दक्षिणेऽथोपतिष्ठते ।
पुनन्तु मेत्यादिकानां मन्त्राणां दशकेन हि ॥ ३ ॥
अध्वर्योश्च प्रतिप्रस्थातुर्थे स द्वयमाहुतौ ।
सुराशेषं तु वल्मीके नयति 'द्वे स्रुती' इति ॥ ४ ॥
इदं भक्षयतो ब्रह्मस्वामिनौ ग्रहमैन्द्रकम् ।
अनुवाके तृतीयेऽस्मिन्मन्त्रा एकोनविंशतिः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ षष्ठे चतुर्थोऽनुवाकः ।

---

तृतीये ग्रहहोमोऽभिहितः । चतुर्थ उपहोमा उच्यन्ते । कल्पः—"मनोताकाले पृथक्पात्रेषु पशूनां यूषाणि निदधाति पुरस्तात्स्विष्टकृतः शृङ्गशफैरुपहोमाञ्जुहोत्यष्टावष्टावेकैकस्य कुष्ठिकशफा आश्विनस्य यूषेण कुष्ठिकां शफं च पूरयित्वा सीसेन तन्त्रमित्यर्धर्चेन प्रतिमन्त्रं द्वाभ्यां द्वाभ्यां कुष्ठिकशफाभ्यां जुहोतीत्युत्तमायाः शृङ्गे अनुषजति हुत्वा स्रेष्वभिषेचनपात्रेषु संपातानवनीयाऽऽहवनीये कुष्ठिकशफान्प्रविध्यन्त्येवमुत्तरेणार्धर्चेन सारस्वतस्य सर्वेणानुवाकेनेन्द्रस्य" इति । अत्र कुष्ठिकशब्देन शफसमीपस्थः क्षुद्ररूपे शफोऽभिधीयते । एकैकशफमेकैकमुपशफं च यूषेण पक्वमांसरसेन पूरयित्वैकैकामाहुतिं जुहुयात् । एतैश्च मन्त्रैर्यजमानेन प्रायणीयो यज्ञावयवो निष्पाद्यो भविष्यन्निन्द्रदेहो निरूप्यते । तत्र प्रथमामृचमाह—

सीसे॑न॒ तन्त्रं॒ मन॑सा मनी॒षिणः॑ । ऊ॒र्णा॒सू॒त्रेण॑ क॒वयो॑ वयन्ति । अ॒श्विना॑ य॒ज्ञꣳ स॑वि॒ता सर॑स्वती । इन्द्र॑स्य रू॒पं वरु॑णो भिष॒ज्यन् । इति ।

---

१ क. ग. °हुतिः । सु° ।

मनीषिणो बुद्धिमन्त ऊहापोहकुशलाः कवयो विद्वांसः शास्त्राभिज्ञा ऋत्विजः स्वमनसा प्रयोगं सर्वं विचार्य सीसद्रव्यक्रीतेन व्रीह्यङ्कुरादिना तन्त्रं सौत्रामणियज्ञविस्तारमूर्णासूत्रेणेव वयन्ति निष्पादयन्ति। यथा लोके केचिदविपालका ऊर्णासूत्रेण कम्बलं वयन्ति। एवमेतेऽप्यृत्विजः सीसक्रीतद्रव्यादिना यज्ञाख्यं दीर्घतन्तुरूपं वयन्ति। अश्विनासरस्वत्याद्या देवता इन्द्रस्य स्वरूपभूतमिमं यज्ञमोषधिसदृशैः पञ्चाङ्गैर्भिषज्यंश्चिकित्सन्ते।

अथ द्वितीयामाह—

तद॑स्य रू॒पम॒मृत॒ꣳ शची॑भिः। ति॒स्रो द॑धुर्दे॒वताः॑ सꣳर॒राणाः। लोमा॑नि॒ शष्पै॑र्बहु॒धा न तोक्म॑भिः। त्वग॑स्य मा॒ꣳसम॑भव॒न्न ला॒जाः, इति।

द्वावश्विनावेका सरस्वतीत्येतास्तिस्रो देवताः शचीभिः स्वकीयशक्तिभिरस्येन्द्रस्य तद्यज्ञात्मकं रूपममृतं विनाशरहितं यथा भवति तथा दधुः संपादयामासुः। कीदृश्यो देवताः संरराणाः संभूय परस्परं रममाणाः। तोक्मशब्देनाङ्कुरिता व्रीहय उच्यन्ते। तदङ्कुररूपं बालतृणं शष्पशब्देनोच्यते। नकार उपमार्थः। तोक्मभिः शष्पैर्बहुधा लोमानीव निष्पादितवन्तः। अङ्कुरप्ररोहाधारभूता बीजविशेषा लाजाशब्देनोच्यन्ते। ते च लाजा अस्य यज्ञरूपस्येन्द्रस्य त्वगिव मांसमिवाभवन्।

अथ तृतीयामाह—

तद॒श्विना॑ भि॒षजा॑ रु॒द्रव॑र्तनी। सर॑स्वती वय॒ति पेशो॒ अन्त॑रः (१)। अ॒स्थि म॒ज्जानं॒ मास॑रैः। का॒रो॒त॒रेण॒ दध॑तो॒ गवां॑ त्व॒चि, इति।

रुद्रस्येव वर्तनिर्मार्गो ययोरश्विनोस्तौ रुद्रवर्तनी। यथा रुद्रः क्रूरो देवो हिंसितुं समर्थ एवमेतावश्विनौ व्याधिं नाशयितुं समर्थावित्यर्थः। तादृशावश्विनौ तत्र यज्ञे भिषजौ चिकित्सकौ। या तु सरस्वत्यन्तरः शरीरमध्ये पेशो वयति रूपं निष्पादयति। मासरशब्देन यवनिष्पन्नाः सूक्ष्मसक्तवो दधिमिश्रा दर्भैः परिवेष्टिता उच्यन्ते। कारोतरशब्देनावटस्थानीयस्तरङ्गदृशो वेणुदलनिर्मितश्चर्मणा सर्वतः परिवेष्टितः सुराश्रव(प)णार्थभाण्डाधारः पदार्थविशेष उच्यते।

गवां त्वच्यवस्थितेन क्षारोतरेण मांसैश्च मज्जानमस्थि च दधतो दधाति सरस्वती संपादयतीत्यर्थः ।

अथ-चतुर्थीमाह—

सरस्वती मनसा पेशलं वसु । नासत्याभ्यां वयति दर्शतं वपुः । रसं परिस्रुता न रोहितम् । नग्नहुर्धीरस्तसरं न वेम, इति ।

इयं सरस्वती नासत्याभ्यामश्विदेवताभ्यां सहिता वपुर्वयति शरीरं मनसा निष्पादयति । कीदृशं वपुः पेशलं वसु देवतात्मनो निवासयोग्यं दर्शतं दर्शनीयं दृष्टिप्रियमित्यर्थः । परिस्रुता न परिस्रुतेव धारया स्रवत्सुराद्रव्यं परिस्रुदित्युच्यते । तया परिस्रुतेव शरीरस्थं रसं जलं रोहितं रक्तं वयति संपादयति स्रवन्स एव रक्तस्थानीय इत्यर्थः । नग्नहुशब्देन यवानां स्थूलचूर्णानि संस्रावेणाभिषिक्तानि कथ्यन्ते । सोऽयं नग्नहुरवयवान्तरस्थानीय इत्यर्थः । धीर इत्यादिदृष्टान्तो लोके धीरो बुद्धिमान्कुविन्दस्तसरं नववस्त्रमिव । वेमशब्देन वस्त्रनिर्माणकाले महारदण्डोऽभिधीयते । यथा कुविन्दः महारदण्डेन वस्त्रं निष्पादयति तद्वदित्यर्थः ।

अथ पञ्चमीमाह—

पयसा शुक्रममृतं जनित्रम् । सुरया मूत्राज्जनयन्ति रेतः । अपामतिं दुर्मतिं बाधमानाः । ऊवध्यं वातꣳ सब्वं तदारात् (२), इति ।

यदेतदत्र पयोद्रव्यं यच्च सुराद्रव्यं तेन द्रव्यद्वयेन मूत्रान्मूत्रद्वारात्सकाशान्निर्गमनयोग्यं रेतो देवता जनयन्ति । कीदृशं रेतः शुक्रं दीप्तिमच्छ्वेतवर्णममृतं विनाशरहितमत एव जनित्रमपत्योत्पादकम् । या देवता रेतो जनयन्ति ताः कीदृश्यः, अमतिं दुर्मतिं चापबाधमानाः । अमतिः कर्तव्यविषयज्ञानाभावः, दुर्मतिर्विपरीतज्ञानम् । किंच ता देवतास्तत्तास्मिन्संपादयितव्ये शरीर आरात्समीप उदरमध्य ऊवध्यं जनयन्ति । अर्धं जीर्णमक्षपपरिपक्वं पुरीषमूवध्यशब्दवाच्यम् । पयःसुराभ्यामेव तज्जनयन्ति । तथा सब्वं वातं जनयन्ति । वातः प्राणवायुः । बुवशब्दः श्वासकालीनं शब्दमनुकरोति । तेन शब्देन सहितमित्यर्थः ।

अथ षष्ठीमाह—

इन्द्रः सुत्रामा हृदयेन सत्यम् । पुरोडाशेन सविता जजान । यकृत्क्लोमानं वरुणो भिषज्यन् । मतस्ने वायव्यैर्न मिनाति पित्तम्, इति ।

शोभनं यथा भवति तथा त्रायत इति सुत्रामा । तादृश इन्द्रः पशोर्हृदयेन सत्यं यथार्थज्ञानशक्तिं जजान । सविता च पुरोडाशेन यकृज्जजान । वरुणश्च पुरोडाशेन क्लोमानं भिषज्यन्वर्तते । यकृत्क्लोमशब्दाभ्यां हृदयस्य पार्श्वद्वयवर्तिनौ मांसखण्डावुच्येते । यकृत्क्लोम्नोः समीपवर्तिनी द्वे मांसे मतस्ने । वायव्यैर्न वायव्यैरिव वायव्यानि ग्रहपात्राणि तैर्मतस्ने इव पित्तमिव मिनात्यवयवजातं संपादयति ।

[अथ] सप्तमीमाह—

आन्त्राणि स्थाली मधु पिन्वमाना । गुदा पात्राणि सुदुघा न धेनुः । श्येनस्य पत्रं न प्लीहा शचीभिः । आसन्दी नाभिरुदरं न माता, इति ।

मधु मधुरं क्षीरादिरसं पिन्वमाना प्रीणयन्ती धारयन्तीत्यर्थः । तादृशी स्थाली या वर्तते सेयमान्त्राण्यान्त्रस्थानीयानि । अन्यानि पिष्टादिद्रव्यस्थापनार्थानि पात्राणि तानि गुदा गुदस्थानीयानि । स्थाल्याः पात्राणां च दृष्टान्तः । सुदुघा न धेनुः शोभनं क्षीरं दोग्धीति सुदुघा । तादृशी धेनुरिव स्थाल्यादिकं वर्तते । प्लीहशब्दो मांसविशेषवाची । स च मांसविशेषः श्येनाख्यस्य पक्षिणः पत्रं न पक्ष इव । तादृशः स मांसविशेषः शचीभिः स्वव्यवहारशक्तिभिः सह पात्रैः संपादित इति शेषः । येयमभिषेकार्थाऽऽसन्दी सेयं नाभिस्थानीया । या तु माता सा भूम्यात्मिका वेदिः सेयमुदरं न, उदरमिव ।

अ[था]ष्टमीमाह—

कुम्भो वनिष्ठुर्जनिता शचीभिः । यस्मिन्नग्रे योन्यां

गर्भो अन्तः (३) । प्लाशीर्व्यक्तः शतधार उत्सः । दुहे न कुम्भीः स्वधां पितृभ्यः, इति ।

उलूकपक्षिसदृशो मांसविशेषो वनिष्ठुः । योऽयमत्र द्रवद्रव्यस्थापनार्थः कुम्भः स वनिष्ठुस्थानीयः । स च शचीभिः स्वशक्तिभिर्जनितोत्पादयिता । यस्मिन्वनिष्ठावग्रे पुरोभागे योन्यामन्तर्यो गर्भो वर्तते । अत्र सुरावनयनार्थं शतच्छिद्रयुक्तः कुम्भो योऽस्ति सोऽयं व्यक्तः स्पष्टः । बहुच्छिद्रोपेतत्वाच्छतधारः । सुरास्रवणयुक्तत्वादुत्सः । तादृशः कुम्भः प्लाशी(शी)र्नासिकाच्छिद्रस्थानीयः । येयं द्रवद्रव्यधारणार्था कुम्भी तां कुम्भीं पितृभ्यः पित्रर्थं स्वधां दुहे नामृतं दोग्धीव । अध्वर्युरिति शेषः ।

[अथ] नवमीमाह—

मुखꣳ सदस्य शिर इत्सदेन । जिह्वा पवित्रमश्विना सꣳसरस्वती । चप्पं न पायुर्भिषगस्य वालः । वस्तिर्न शेपो हरसा तरस्वी, इति ।

सीदन्त्यत्रेति सदो देवयजनस्थानं तेन सदेनास्य निरूप्यमाणशरीरस्य संमुखं समीचीनं मुखं शिर इच्छिरश्च संपन्नमिति शेषः । पवित्रं द्रव्यशोधनार्थं यद्वस्त्रं तज्जिह्वा । एतत्सर्वमश्विनौ सरस्वती च तिस्रः संपादितवत्यः । चप्पं पिष्टपात्रं तत्पायुर्नापानस्थानमिव वर्तते । योऽयं वालो द्रव्यशोधनार्थः सोऽयमस्य शरीरस्य भिषक्, चिकित्सकस्थानीयः । तेन हि व्याधिस्थानीयो द्रव्यदोषोऽपनीयते । योऽयं पशोः शेपः सोऽयं वस्तिर्न मूत्रस्थानमिव । हरसा वह्निज्वालारूपेण तेजसा तरस्वी निरूप्यमाणो देहो वेगवानिव लक्ष्यते ।

अथ दशमीमाह—

अश्विभ्यां चक्षुरमृतं ग्रहाभ्याम् । छागेन तेजो हविषा शृतेन । पक्ष्माणि गोधूमैः कुवलैरुतानि ।

पेशो न शुक्लमसितं वसाते (४), इति।

अश्विभ्यां ग्रहाभ्यामश्विनोः संबन्धिनौ यौ ग्रहावयवौ ताभ्याममृतं विनाशरहितं चक्षुः संपादितम्। घृतेन पक्केन हविःस्वरूपेण च्छागेन चक्षुर्गतं तेजः संपादितम्। सक्तुनिष्पादनार्थं ये गोधूमा ये च कुला बदरफलविशेषास्तैरुभयैः परस्परमुतानि संबद्धानि पक्ष्माणि रोमाणि संपाद्यन्ते। पेशो न रूपमिव यत्पशौ दृश्यते तच्चक्षुर्गतशुक्लमसितं च शुक्लमण्डलं कृष्णमण्डलं च तदुभयं वसाते अश्विनौ देवौ पक्ष्मभिराच्छादयतः।

ए(अथै)कादशीमाह—

अविर्न मेषो नसि वीर्याय। प्राणस्य पन्था अमृतो ग्रहाभ्याम्। सरस्वत्युपवाकैर्व्यानम्। नस्यानि बर्हिर्बदरैर्जजान, इति।

अविर्नाविरिव वर्तमानो यः सारस्वतो मेषः सोऽयं नसि नासिकायां वीर्याय श्वासप्रवृत्तिसामर्थ्याय प्रवर्तते। इयं च नासिका प्राणाख्यस्य वायोरमृतः कदाचिदपि विनाशरहितः पन्था गमनागमनहेतुर्ग्रहाभ्यां पयःसुराभ्यां निष्पादितः। तथेयं सरस्वत्युपवाकैर्हरितयवसक्तुभिर्व्यानवायुं जनयाति। नस्यानि नासिकायां भवानि बर्हिर्बर्हींषि लोमानि बदरैः सक्तुनिष्पादनाय संपादितैर्बदरफलैर्जजानं संपादयामास।

अथ द्वादशीमाह—

इन्द्रस्य रूपमृषभो बलाय। कर्णाभ्या श्रोत्रममृतं ग्रहाभ्याम्। यवा न बर्हिर्भ्रुवि केसराणि। कर्कन्धु जज्ञे मधु सारघं मुखात्, इति।

सोऽयमृषभ इन्द्रस्य रूपमिन्द्रदेवताकत्वेन तत्स्वरूपसदृशः सोऽयमस्य शरीरस्य बलार्थं संपाद्यते। पशुसंबन्धिभ्यां कर्णाभ्यां पयःसुरारूपग्रहाभ्यां चामृतं श्रोत्रं बाधिर्यरहितं श्रोत्रेन्द्रियं संपाद्यते। भु(भ्रु)वि यवा न भूपावुत्पन्ना

---

१ क. ख. °तः। अथै°। २ क. °न निष्पाद°।

यथा इव बर्हिर्वेश्मासादितानि बर्हींषि केसराणि प्रवृद्धतमानि लोमानि । सरघा मधुमक्षिकास्ताभिः संपादितं सारघं मधु तद्रूपं कर्कन्धु जज्ञे । कर्कन्धुशब्देनातिस्थूलबदरफलपिष्टमुच्यते । तच्च मधुसदृशं मुखाज्जज्ञे यज्ञपारक्मे समुत्पन्नमित्यर्थः ।

[अथ, त्रयोदशीमाह—

आत्मन्नुपस्थे न वृकस्य लोम । मुखे श्मश्रूणि न व्याघ्रलोमम् ( ५ ) । केशा न शीर्षन्यशसे श्रियै शिखा । सिꣳहस्य लोम त्विषिरिन्द्रियाणि, इति ।

प्रकृतिभूतायां सौत्रामण्यां त्रयाणि लोमानीति वाक्येन वृकव्याघ्रसिंहानां लोमानि विहितानि तान्यत्र चोदकप्राप्तानि ग्रहत्रये प्रक्षिप्यन्ते । तत्र यद् वृकस्य लोम तदात्मन्संपाद्यमानशरीर उपस्थे न गुह्यप्रदेश इव वर्तते । यत्तु व्याघ्रलोम तन्मुखे वर्तमानानि श्मश्रूणीव । यत्तु सिंहस्य लोम तच्छिरसि केशा इव । केशनिष्पन्ना च शिखा यशसे श्रियै च संपद्यते । अनुष्ठानकाले सशिखत्वेन यशः । लोके व्यवहारे रक्षणीयत्वेन श्रीः । या तु लोमगता त्विषिर्दीप्तिः सा तु संपाद्यस्य शरीरस्येन्द्रियस्थानीया ।

[अथ] चतुर्दशीमाह—

अङ्गान्यात्मन्भिषजा तदश्विना । आत्मानमङ्गैः समधात्सरस्वती । इन्द्रस्य रूपꣳ शतमानमायुः । चन्द्रेण ज्योतिरमृतं दधाना, इति ।

तत्तदानीं यागावसरे भिषजा चिकित्सकावश्विनावात्मन्संपाद्ये शरीरेऽङ्गानि हस्तपादादीनि संपादितवन्तौ । सरस्वती च तैरङ्गैरात्मानं संपूर्णदेहं समधात्सम्यगकार्षीत् । कीदृशी सरस्वती । इन्द्रस्य वर्तमानस्य यद्रूपं तद् दधाना संपादयन्ती । तथा शतमानं शतसंवत्सरप्रमाणमायुः संपादयन्ती । तथा चन्द्रेणाऽऽह्लादकरूपेणामृतं ज्योतिरनश्वरं तेजः संपादयन्ती ।

[अथ] पञ्चदशीमाह—

सरस्वती योन्यां गर्भमन्तः । अश्विभ्यां पत्नी सुकृतं बिभर्ति । अपाꣳ रसेन वरुणो न साम्ना । इन्द्रꣳ श्रियै जनयन्नप्सु राजा, इति ।

अश्विभ्यां देवाभ्यां सुकृतं सुष्ठु संपादितमुत्पादनीयशरीररूपं गर्भं पत्नी पालयित्री सरस्वती योन्यां गर्भाशयेऽन्तर्मध्ये बिभर्ति पोषयति । अपां रसेन सारभूतेन साम्ना परस्परं साम्येन पय सुराग्रहेणाप्सु वरुणो न राजा.१) यथा जलमध्ये वरुणो राजा तस्यामब्देवतायां पुत्रं जनयति तथेमं यजमानमिन्द्रमिन्द्रसमानशरीरं श्रियै संपदनभवार्थमयमनुष्ठीयमानो यागो जनयन्वर्तते ।

[अथ] षोडशीमाह—

तेजः पशूनाꣳ हविरिन्द्रियावत् । परिस्रुता पयसा सारघं मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याम् । अमृतः सोम इन्दुः(६), इति ।

अन्तर आरादन्तर्वसाते व्याघ्रलोमꣳ राजा चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

पशूनां तेजः सारभूतं हविर्भिषजा चिकित्सकाभ्यामश्विभ्यां दुग्धं संपादितमित्यर्थः । केन द्रव्येण परिस्रुता पयसा परितः स्रवतीति परिस्रुत्सुरा तया क्षीरेण च संपादितं हविः । कीदृशं हविरिन्द्रियावदिन्द्रियाभिवृद्धिकरं सारघं मधु सरघाभिः संपादितेन मधुना सदृशं यथाऽश्विभ्यां हविः संपादितं तथा सरस्वत्या तत्फलभूतो यजमानस्येन्द्रसदृशः संपादितः । केन साधनेन सुतासुताभ्यामभिषवसदृशव्यापारेण संपादिता सुरा सुता तादृक्प्रयासरहितक्षीरमसुतं ताभ्यां देहः संपादितः । कीदृशो देहोऽमृतो देवलोके

समुत्पन्नत्वान्मरणरहितः सोमः सोम्यो दृष्टेप्रिय इन्दुश्चन्द्रवदाह्लादकरः परमैश्वर्ययुक्तो वा । एवमेतैः षोडशभिर्मन्त्रैर्यजमानस्य भाविदेहसूचनपरैरुपहोमः कर्तव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ षष्ठे पञ्चमोऽनुवाकः ।

---

चतुर्थ उपहोमा अभिहिताः । पञ्चमेऽभिषेकोऽभिधीयते । कल्पः—"औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभिदघ्नपादा मौञ्जविवाना मित्रोऽसि वरुणोऽसीति तां यजमानायतने प्रतिष्ठापयत्यासादनोपवेशनाभिमन्त्रणानि राजसूयवत् " इति । पाठस्तु—

मित्रोऽसि वरुणोऽसि । समहं विश्वैर्देवैः, इति ।

हे आसन्दीविशेष त्वमिष्टप्रापकत्वान्मित्रोऽसि । अनिष्टनिवारकत्वाद्वरुणोऽसि । अहमत्र त्वद्बलात्सर्वैर्देवैः संगतो भूयासम् ।

कल्पः—'क्षत्रस्य नाभिरसीति तस्यां कृत्य ( २१ ) षीवासमास्तीर्य-" इति । पाठस्तु—

क्षत्रस्य नाभिरसि । क्षत्रस्य योनिरसि, इति ।

हे चर्मपट त्वं क्षत्रस्य बलस्य नाभिर्मध्यस्थानमसि । तथा क्षत्रस्य बलस्य योनिः कारणमसि ।

कल्पः—" स्योना मा सीद सुषदा मा सीदेति तामासाद्य यजमानो मा त्वा हिꣳसीन्मा मा हिꣳसीदित्युपविशति " इति । पाठस्तु—

स्योना मा सीद । सुषदा मा सीद । मा त्वा हिꣳसीत् । मा मा हिꣳसीत्, इति ।

हे आसन्दि त्वं स्योना सुखकरी भूत्वा मां प्रत्यासीद । तथा सुषदा सुष्ठूपवेशनयोग्या सती मां प्रत्यासीद प्राप्नुहि । मदीयो देहस्त्वां मा हिनस्तु । त्वदीयस्वरूपमपि मां मा हिनस्तु ।

कल्पः— " निषसाद धृतव्रत इत्यासीनमनुमन्त्रयते " इति । पाठस्तु—

निषसाद धृतव्रतो वरुणः । पस्त्यास्वा ( १ ) ।

साम्राज्याय सुक्रतुः, इति ।

अयं यजमानो धृतव्रतः स्वीकृतनियमो वरुणः फलप्रतिबन्धकपापनिवारको भूत्वा साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पः सन्पस्त्यासु गृहसमानेष्वासन्दीस्थानेष्वानिषसाद सर्वत्र उपविष्टवान् ।

कल्पः—"तस्यां प्राङ्मुखमासीनं प्रत्यङ्मुखास्तिष्ठन्नश्विनोः संपातैरभिषिञ्चति देवस्य त्वा" इति । पाठस्तु—

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन । तेजसे ब्रह्मवर्चसायाभिषिञ्चामि, इति ।

सवितुर्देवस्य प्रेरणे सत्यश्विसंबन्धिभ्यां बाहुभ्यां पूषसंबन्धिभ्यां हस्ताभ्यामश्विनोः संबन्धिना संपातेनौषधरूपेण कान्तिब्रह्मवर्चससिद्ध्यर्थं यजमानं त्वामभिषिञ्चामि ।

कल्पः—"एवमुत्तरेण मन्त्रेण सारस्वतस्योत्तमेनैन्द्रस्य" इति । संपातेनाभिषिञ्चतीत्युभयत्रानुवर्तते । पाठस्तु—

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । सरस्वत्यै भैषज्येन (२) । वीर्यायान्नाद्यायाभिषिञ्चामि, इति ।

पूर्ववद्व्याख्येयम् ।

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । इन्द्रस्येन्द्रियेण । श्रियै यशसे बलायाभिषिञ्चामि, इति ।

पूर्ववद्व्याख्येयम् ।

कल्पः—"कोऽसि कतमोऽसीति पाणिं संमृश्य" इति । पाठस्तु—

कोऽसि कतमोऽसि । कस्मै त्वा काय त्वा, इति ।

हे यजमान त्वं कोऽसि प्रजापतिरूपोऽसि । अत एव कतमोऽस्यविज्ञातविशेषोऽसि । न हि प्रजापतिरीदृश एवेति केनचिदपि निर्धारयितुं शक्यते । तस्य सर्वात्मकत्वेन विशेषस्य दुर्निरूपत्वात् । अतः कस्मा अविज्ञेयस्वरूपसिद्ध्यर्थं त्वां स्पृशामि । काय प्रजापतिरूपसिद्ध्यर्थं त्वां स्पृशामि । अनेन मन्त्रेण यजमानस्य पाणिद्वयमभिसंस्पृशेत् ।

कल्पः—"अत्र राजसूयवन्मङ्गल्यनाम्न आह्वय" इति । राजसूये त्वेवमुक्तम्—मङ्गल्यनाम्नो राजाऽऽह्वयति सुश्लोकाँ३ इति संग्रहीतारं सुमङ्गलाँ३ इति भागदुघं सत्यराजा३निति क्षत्तारम्" इति । पाठस्तु—

सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न्, इति ।

शोभनः श्लोकः कीर्तिर्यस्यासौ सुश्लोकः । आह्वानार्था सानुनासिका प्लुतिः । सुष्ठु मङ्गलाचरणं यस्यासौ सुमङ्गलः । सत्येन स्वामिव्यापारेण राजत इति सत्यराजः । एतैः संग्रहीत्रादय आह्वातव्याः स्युः । रथस्योपर्यश्वप्रग्रहधारी संग्रहीता । यद्वा संपादितं राजधनं भाण्डागारे सम्यक्संगृह्णातीति संग्रहीता । ग्रामेषु राजभागकरं दुग्धे स्वी करोतीति भागदुघः । क्षत्ता सारथिर्द्वारपालको वा ।

कल्पः—"शिरो मे श्रीरिति यथालिङ्गमङ्गानि संमृशेत्" इति । पाठस्तु—

शिरो मे श्रीः (३) । यशो मुखम् । त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणोऽमृतम् । सम्राट् चक्षुः । विराट्छ्रोत्रम् । जिह्वा मे भद्रम् । वाङ्महः । मनो मन्युः । स्वराड्भामः । मोदाः प्रमोदा अङ्गुलीरङ्गानि (४) । चित्तं मे सहः । बाहू मे बलमिन्द्रियम् । हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम । पृष्टीर्मे राष्ट्रमुदरमंसौ । ग्रीवाश्च श्रोण्यौ । ऊरू

अरत्नी जानुनी । विशो मेऽङ्गानि सर्वतः । नाभिर्मे चित्तं विज्ञानम् । पायुर्मेऽपचितिर्भसत् (५) । आनन्दनन्दावाण्डौ मे । भगः सौभाग्यं पसः, इति ।

मदीयं शिरः श्रियो हेतुत्वेन श्रीरूपमस्तु । मुखं यशोहेतुरस्तु । केशाः श्मश्रूणि च कान्तिहेतवः सन्तु । मदीयः प्राणः सर्वेन्द्रियाणां राजा सन्नमृतहेतुरस्तु । चक्षुरिन्द्रियं दूरसूक्ष्मादिदर्शने सम्यग्राजमानमस्तु । श्रोत्रेन्द्रियं दूरशब्दमन्दध्वनिश्रवणेन विविधं राजमानमस्तु । मदीया जिह्वा विविधरसज्ञानेन कल्याणभोगहेतुरस्तु । वागिन्द्रियं सभारञ्जनेन पूजाहेतुरस्तु । मदीयं मनो धर्मकार्यमननहेतुरस्तु । मदीयो भामः क्रोधो भ्रातृव्यनिराकरणेन स्वयमेव राजाऽस्तु । अङ्गुलयो मोदा हर्षहेतवः सन्तु । अङ्गान्यनुक्तावयवाः प्रमोदाः प्रकृष्टहर्षहेतवः सन्तु । मदीयं चित्तं स्तुतिनिन्दादिसहनहेतुरस्तु । मनश्चित्तयोर्वृत्तिभेदेन भेदः । मदीयौ बाहू मणिबन्धस्य मूलभागौ प्रबलशक्तिहेतू स्ताम् । हस्तौ मणिबन्धस्याग्रभागौ वीर्यवृद्ध्यापारहेतू स्ताम् । मदीय आत्मा मध्यशरीरमुरश्च क्षत्रं बलहेतुरस्तु । पृष्टयादयो जान्वन्ता अवयवा राष्ट्रहेतवः सन्तु । पृष्टयः पायोरुपरिस्थान्यस्थीनि । उदरादयः प्रसिद्धाः । ग्रीवा गलावयवाः । अरत्नी प्रकोष्ठौ । विशो मनुष्याः । ममाङ्गानीव सर्वतो विधेयाः सन्तु । मदीयं(यो) नाभिश्चित्तं चैतन्यहेतुरस्तु । पायुर्विज्ञानं विसर्गज्ञानकुशलोऽस्तु । भसन्मे ममोपस्थेन्द्रियमपचितिर्नियतत्वेन बहुमानहेतुरस्तु । मदीयावाण्डौ वृषणावानन्दनन्दयोर्हेतू स्ताम् । पुंसः सुखमानन्दः । स्त्रियाः सुखं नन्दः । पसः प्रजननं भगसौभाग्यहेतुरस्तु । भग ऐश्वर्यम् । सौभाग्यं देहशोभा ।

कल्पः—"जङ्घाभ्यां पद्भ्यामिति प्रत्यवरुह्य" इति । पाठस्तु—

जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि । विशि राजा प्रतिष्ठितः, इति ।

जानुभ्यामधोभागौ जङ्घे ताभ्यां पादाभ्यां च धर्मो देहस्य धारयिताऽस्मि । विशि प्रजायां प्रतिष्ठितः स्थैर्येणावस्थितो राजाऽस्मि ।

---

१ क. °र्थं स्थूलम्° ।

कल्पः—"प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्र इति जपित्वा" इति । पाठस्तु—

प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् । प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे । प्रतिद्यावापृथिव्योः । प्रतितिष्ठामि यज्ञे ( ६ ), इति ।

क्षत्रादिषु यज्ञान्तेषु प्रतितिष्ठामि स्थैर्येणावस्थितोऽस्मि । क्षत्रं बलं क्षत्रियादिर्वा । राष्ट्रं देशः । अश्वादयः प्रसिद्धाः । आत्मा शरीरम् । पुष्टं शरीरस्य पुष्टिः ।

कल्पः—"त्रया देवा एकादशेत्याहुतीर्जुहोति" इति । तत्र प्रथमामृचमाह—

त्रया देवा एकादश । त्रयस्त्रिंशाः सुराधसः । बृहस्पतिपुरोहिताः । देवस्य सवितुः सवे । देवा देवैरवन्तु मा । प्रथमा द्वितीयैः । द्वितीयास्तृतीयैः । तृतीयाः सत्येन । सत्यं यज्ञेन । यज्ञो यजुर्भिः ( ७ ) । यजूंषि सामभिः । सामान्यृग्भिः । ऋचो याज्याभिः । याज्या वषट्कारैः । वषट्कारा आहुतिभिः । आहुतयो मे कामान्त्समर्धयन्तु, इति ।

एकादशसंख्याका देवतास्त्रयास्त्रिविधा लोकत्रयवर्तित्वात् । तथा चाऽऽम्नातम्—" ये देवा दिव्येकादश स्थ " इत्यादिना । ते चैते त्रयस्त्रिंशत्संख्याका देवाः सुराधसः शोभनस्य कर्मणः साधकाः । बृहस्पतिः पुरोहितो मुख्यो येषां ते बृहस्पतिपुरोहिताः । सवितुर्देवस्य प्रसवे सति ते सर्वे मुख्या देवा इतरैः सह मामवन्तु । तत्र प्रथमगणस्था द्वितीयगणस्थैः सहिताः । द्वितीयगणस्थास्तृतीयगणस्थैः सहिताः । तृतीयगणस्थाः सत्येन सहिताः ।

१ क. ख. °देवा इत्या° । २ क. ख °तीर्हुत्वा " इ° ।

मरवं च यज्ञेन सहितम् । एवं यज्ञादय आहुतिपर्यन्ता उत्तरोत्तरवस्तुभिः सह तिष्ठन्ति । ताश्चाऽऽहुतयो मदीयान्कामान्समर्धयन्तु समृद्धान्कुर्वन्तु ।

अथ द्वितीयं मन्त्रमाह—

भूः स्वाहा, इति ।

येयं भूमिस्तस्यै स्वाहा हुतमस्तु ।

कल्पः—"लोमानि प्रयतिर्ममेति यथालिङ्गमङ्गानि संमृशति" इति ।

पाठस्तु—

लोमानि प्रयतिर्मम । त्वङ्म आनतिरागतिः । माꣳसं म उपनतिः । वस्वस्थि । मज्जा म आनतिः (८), इति ।

पत्न्यांस्वा सरस्वत्यै भैषज्येन श्रीरङ्गानि मसयज्ञे यज्ञो यजुर्भिरुपनतिर्द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

मदीयानि लोमानि प्रयतिः शुद्धिकराणि सन्तु । मदीया त्वगानतिरन्येषां प्रह्वीभावहेतुरस्तु । आगतिरन्येषां पदार्थानामागमनहेतुरस्तु । मदीयं मांसमुपनतिरभिमतसंपत्तिहेतुरस्तु । अस्थि च मदीयं वसु धनहेतुरस्तु । मत्संबन्धिमज्जा चाऽऽनतिरन्येषां वशीकरणहेतुरस्तु ।

अत्र विनियोगसंग्रहः—

आसन्दीं स्थापयेन्मित्रः क्षत्रस्य चर्मसंस्कृतिः ।
स्योनां तस्यामुपविशेन्निषसादेति मन्त्रयेत् ॥
देवत्रयेणाभिषिञ्चेत्कोऽसि पाणी उपस्पृशेत् ।
सुश्लोकयत्रेणाऽऽह्वयेच्छिरः स्वात्माभिमर्शनम् ॥
अवरोहति जङ्घाभ्यां प्रतिक्षत्रादिकं जपेत् ।
त्रया भूराहुतीर्हुत्वा लोमेत्यङ्गान्युपस्पृशेत् ।
अनुवाके पञ्चमेऽस्मिन्मन्त्राः सप्तदश स्मृताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठे षष्ठोऽनुवाकः ।

---

पञ्चमेऽभिषेक उक्तः । षष्ठेऽवभृथ उच्यते ।

कल्पः—"यद्देवा देवहेडनमित्यवभृथे पञ्चाऽऽहुतीर्जुहोति" [इति] । तत्र प्रथमामृचमाह—

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः, इति ।

देवासो द्योतनात्मका हे देवा देवहेडनं देवविषयमनादररूपं यत्पापं वयं सभृत्यपुत्राश्चकृम कृतवन्तः । अंहसोऽभिभवनस्वभावाद्विश्वस्मात्सर्वस्मात्तस्मादेनसः पापादग्निर्मां मां मुञ्चतु मुक्तं करोतु ।

[अथ] द्वितीयामाह—

यदि दिवा यदि नक्तम् । एनाꣳसि चकृमा वयम् । वायुर्मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः, इति ।

कालविशेषे कृतात्पाप्मनो वायुर्मोचकोऽस्तु ।

अथ तृतीयामाह—

यदि जाग्रद्यदि स्वप्ने । एनाꣳसि चकृमा वयम् (१) । सूर्यो मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः, इति ।

अवस्थाविशेषे कृतात्पाप्मनः सूर्यो मोचकोऽस्तु ।

अथ चतुर्थीमाह—

यद्ग्रामे यदरण्ये । यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये । एनश्चकृमा वयम् । यदेकस्याधि धर्मणि ।

तस्यावयजनमसि, इति ।

अर्यः स्वामी वैश्यो वा । अरण्यादिदेशविशेषे चक्षुरादीन्द्रियविशेषे शूद्रादिपुरुषविशेषे च यदेनो वयं चकृम यदप्येकस्यान्यपुरुषस्य धर्मण्यग्निहोत्रादिधर्मकार्येऽधिकं पापं चकृम तस्य सर्वस्य पापस्य हे आहुतिरूप त्वमवयजनं विनाशकमसि ।

अथ पञ्चमीमाह—

यदापो अघ्निया वरुणेति शपामहे । ततो वरुण नो मुञ्च (२), इति ।

हे वरुण या आपः सन्ति याश्चाघ्निया गाव एतद्द्वयं भूम्यादेरुपलक्षणं तेषु सर्वेषु विषयेष्वित्यनेन प्रकारेण शपामहे सत्यत्वेनानृतत्वेन वा शपथं कुर्मः । यत्पापमस्ति हे वरुण ततः शपथकृतात्पापान्नोऽस्मान्मुञ्च मुक्तान्कुरु ।

कल्पः—" अवभृथ निचङ्कुणेत्यवभृथं यजमानोऽभिमन्त्र्य " इति ।

पाठस्तु—

अवभृथ निचङ्कुण निचेरुरसि निचङ्कुण । अव देवैर्देवकृतमेनोऽयाट् । अव मर्त्यैर्मर्त्यकृतम् । उरोरा नो देव रिषस्पाहि, इति ।

हेऽवभृथ कर्माभिमानिन्वरुण निचङ्कुण राक्षसभर्त्सनार्थं नितरां ध्वनिकारिन्निचेरुरस्यस्मरणार्थं निगूढत्वेन चरणशीलोऽसि । हे निचङ्कुणास्माभिर्देवेषु कृतमेनोऽपराधं तैर्देवैः सह त्वमवायाड्विनाशय । मर्त्येष्वृत्विक्षु कृतं तैर्मर्त्यैः सह तदवायाड्विनाशय । हे देवोरोरधिकाद्रिषो देवमर्त्यकृताद्धिंसनान्नोऽस्मान् समन्तात्पाहि ।

कल्पः—"सुमित्रा न आपो द्रुपदादिवेन्मुमुचान इत्याप्लुत्य" इति । तत्र प्रथममन्त्रपाठस्तु—

सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भूयासुः । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः, इति ।

या एता अब्देवता याश्चौषधिदेवतास्ताः सर्वा नोऽस्मान्प्रति सुमित्रा अत्यन्तमनुकूलाः सन्तु । योऽस्मानुदासीनानपि द्वेष्टि यं चान्यमुदासीनमपि वयं द्विष्मस्तस्मै द्विविधाय तादृशपुरुषाय या (ना) आप ओषधयश्च दुर्मित्राः प्रतिकूलाः सन्तु ।

द्वितीयमन्त्रपाठस्तु—

द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव (३) । पूतं पवित्रेणेवाऽऽज्यम् । आपः शुन्धन्तु मैनसः, इति ।

राजानो ह्यपराधिनस्तस्करस्य पादं सच्छिद्रे काष्ठे कीलयन्ति तद्द्रुपदमित्युच्यते । तस्मान्मुमुचान इवैतद्बन्धनान्मुक्तः पुरुषश्चौर्याभियोगं परित्यज्य शुद्ध इत्येव व्यवह्रियते । यथा स्विन्नः पुरुषः स्नात्वी स्नानं कृत्वा मलान्मुमुचानः शुद्ध इत्येव व्यवह्रियते । यथा च कर्मण्याज्यमुत्पवनपवित्रेण पूतं भवति तथेमा आपो मामेनसः पापाच्छुन्धन्तु शुद्धं कुर्वन्तु ।

कल्पः—“ उद्वयं तमसस्परीत्यादित्यमुपस्थाय ” इति । पाठस्तु—

उद्वयं तमसस्परि । पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यम् । अगन्म ज्योतिरुत्तमम्, इति ।

तमसस्पर्यन्धकारस्योपरि वर्तमानमुत्तरं ज्योतिरुत्कृष्टं प्रकाशमुत्पश्यन्त उत्कर्षेण वीक्षमाणा वयं देवत्रा देवेषु मध्ये देवं द्योतमानं सूर्यं सूर्यस्वरूपमुत्तमं ज्योतिरगन्म प्राप्ताः स्मः ।

कल्पः—“ प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यस्यति ” इति । पाठस्तु—

प्रतियुतो वरुणस्य पाशः । प्रत्यस्तो वरुणस्य पाशः, इति ।

योऽयं वरुणस्य पाशो जलमध्यवर्ती सोऽस्माभिर्बहिर्निर्गच्छद्भिः प्रतियुतः परित्यक्तः तथा वरुणस्य पाशः प्रत्यस्तो विनाशितः ।

कल्पः- “ पशुवत्समिध उपस्थानं च ” इति । पशौ त्वेवमुक्तम्—“एधोऽस्ये-

धिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते " इति ।
अथ समिदाधानमन्त्राणां त्रयाणां पाठस्तु—

एधोऽस्येधिषीमहि । समिदसि । ( ४ ) । तेजोऽसि
तेजो मयि धेहि, इति ।

हे समित्त्वमेधोऽस्यभिवृद्धिहेतुरसि । अतस्त्वामाधाय वयमेधिषीमहि वृद्धिं प्राप्नुमः । हे द्वितीयसमित्त्वं समिन्धनसाधनमसि । हे तृतीयसमित्त्वं तेजोहेतुरसि । अतो मयि तेजो धेहि संपादय ।

उपस्थानमन्त्रपाठस्तु—

अपो अन्वचारिषम् । रसेन समसृक्ष्महि । पयस्वाँ
अग्न आगमम् । तं मा सꣳसृज वर्चसा । प्रजया
च धनेन च, इति ।

अहमेता अपोऽनुसृत्याचारिषं कर्मानुष्ठितवानस्मि । रसेन जलगतेन सारेण समसृक्ष्महि संसृष्टा अभूम । हेऽग्ने पयस्वाञ्जलसारयुक्तोऽहमागमं त्वत्समीपे समागतोऽस्मि । तमेतादृशं मा वर्चसा बलेन च प्रजया धनेन च संसृज संयोजय ।

कल्पः—" समाववर्तीत्युपस्थाय " इति । पाठस्तु—

समाववर्ति पृथिवी । समुषाः । समु सूर्यः । समु
विश्वमिदं जगत् । वैश्वानर ज्योतिर्भूयासम् । विभुं
कामं व्यश्नवै, इति ।

येयं पृथिवी सा समाववर्ति सम्यगावृत्ता मया सह समागता । एवमुषःकालः सूर्यः सर्वमिदं जगच्च समाववर्ति । हे वैश्वानराहं ज्योतिःस्वरूपो भूयासम् । त्वत्प्रसादाद्विभुं कामं व्याप्तं फलं व्यश्नवै प्राप्नवानि ।

भूः स्वाहा ॥ ५ ॥

स्वप्न एनाꣳसि चकृमा वयं मुञ्च मलादिव समिदसि जगज्जीर्णि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये
षष्ठोऽनुवाकः ॥ ६ ॥

====

कल्पः—"भूः स्वाहेत्याहुतिं हुत्वा" इति । येयं भूः पृथिवी सा स्वाहा त्वयि स्वाहुता ।

अत्र विनियोगसंग्रहः—

यद्देवाः पञ्चभिर्हुत्वाऽवभृथेत्यनुमन्त्रयेत् ।
सुमित्रा द्रुपदा द्वाभ्यां स्नात्वोद्वेत्युपतिष्ठते ॥
प्रतीत्यापः परित्याज्या एधोस्येधिषीमहि त्रिभिः ।
अपः समेत्युपस्थानं भूः स्वाहेति जुहोति हि ॥
अत्र मन्त्राः षोडशोक्ता अध्वर्योः कृत्यमीरितम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ षष्ठे सप्तमोऽनुवाकः ।

इत्थं षड्भिरनुवाकैरस्यां कौकिलयां सौत्रामण्यामाध्वर्यवमुक्तम् । अथावशिष्टैश्चतुर्दशभिरनुवाकैर्हौ(हौ)त्रमुच्यते । तत्राऽस्मिन्सप्तमेऽनुवाके होतारमुद्दिश्य मैत्रावरुणेन पठनीया एकादश प्रयाजप्रैषा उच्यन्ते । तत्र समिद्भ्यः प्रेष्य इत्यध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषमन्त्रं पठति । तमिमं मन्त्रमाह—

होता॑ यक्षत्स॒मिधेन्द्र॑मि॒डस्प॒दे । नाभा॑ पृथि॒व्या अधि॑ । दि॒वो वर्ष्म॒न्त्समि॑ध्यते । ओजि॑ष्ठश्चर्षणी॒सहा॑न् । वेत्वाज्य॑स्य॒ होत॒र्यज॑, इति ।

योऽयं होता विद्यते सोऽयं समिधेन्द्रं समिन्नामकेनाग्निना युक्तमिन्द्रमिडस्पदे इडाख्याया गोः पदस्थानेऽस्मिन्नाहवनीये यक्षद्यजतु पूजयत्वित्यर्थः। या सोमक्रयि(य)णी गौस्तस्याः पादपांसोः कियानपि भाग आहवनीये प्रक्षिप्त स्तस्मादिडस्पदमित्युच्यते । समिन्नामकः कश्चिदग्निविशेषः प्रथमयाऽऽहुत्या हूयते । अतः समिन्नामकाग्निद्वारा तमिन्द्रं होता यक्षदित्युच्यते । तच्चेडायाः पदमाहवनीयाख्यं पृथिव्या नाभा नाभिस्थानीयायामुत्तरवेद्यामध्युपरि वर्तते । हूयमानोऽयमग्निर्दिवो वर्ष्मन्द्युलोकस्य शरीरस्थानीय इत्यर्थः । तत्र समिध्यते सम्यग्दीप्यते । चर्षणीसहांश्चर्षणयो मनुष्यास्तान्सहन्तेऽभिभवन्तीति चर्षणीसहा देवास्तानुद्दिश्य तेषां देवानां मध्य ओजिष्ठोऽत्यन्तप्रबलस्तादृशोऽग्निराज्यस्य वेत्विदमाज्यमश्नातु पिबत्वित्यर्थः । हे होतर्यज तदर्थं याज्यां पठ ।

अथ द्वितीयं प्रैषमन्त्रमाह—

होता यक्षत्तनूनपातम् । ऊतिभिर्जेतारमपराजितम् । इन्द्रं देवꣳ स्वर्विदम् । पथिभिर्मधुमत्तमैः । नराशꣳसेन तेजसा (१) । वेत्वाज्यस्य होतर्यज, इति ।

अत्र सर्वत्र प्रथमान्तो होतृशब्दो दैव्यं होतारमाचष्टे, संबुद्ध्यन्तो मानुषम् । यथा पूर्वमन्त्रे समिच्छब्दः प्रयाजदेवतारूपमग्निविशेषमाह, एवमत्रापि तनूनपाच्छब्दो द्वितीयप्रयाजदेवतारूपमग्निविशेषमाचष्टे । दैव्यो होता तनूनपान्नामकमग्निं यक्षद्यजतु पूजयतु तद्द्वारेन्द्रं पूजयतु । कीदृशमिन्द्रम्, ऊतिभिरस्मद्रक्षणैर्युक्तम्, जेतारं युद्धे जयशीलं केनाप्यन्येनापराजितम्, देवं द्योतमानम्, सुवर्विदं स्वर्गस्य लम्भारम्, मधुमत्तमैरन्नपानादिपाथेयसंपत्त्याऽत्यन्तं मधुरैः पथिभिर्मार्गैर्युक्तम्, नराशंसेन मनुष्यैः शंसनीयेन तेजसा युक्तम्, तथाविधेन्द्रं पूजार्थं तनूनपादग्निराज्यं पिबतु । तदर्थं हे मानुष होतर्याज्यां पठ ।

[अथ] तृतीया(य)[ मन्त्र]माह—

होता यक्षदिडाभिरिन्द्रमीडितम् । आजुह्वानममर्त्यम् । देवो देवैः सवीर्यः । वज्रहस्तः पुरंदरः । वेत्वाज्यस्य होतर्यज, इति ।

इडाशब्देन प्रयाजदेवतारूपस्तृतीयोऽग्निरुच्यते । बहुवचनं पूजार्थम् । तदग्निद्वारा दैव्यो होतेन्द्रं पूजयतु । कीदृशमिन्द्रम्, ईडितं नानाविधैर्मन्त्रैः स्तुतम्, आजुह्वानं सर्वेषु यज्ञेषु होममाजमाह्वानभाजं वा, अमर्त्यं मरणरहितम् । स चेन्द्रो देवो देवैः सह सवीर्यो बहुसामर्थ्ययुक्तः शत्रूनभिभवितुं वज्रहस्त आसुरीं पुरीं दारयति विनाशयतीति पुरंदरः । तथाविधेन्द्रस्य प्रीतये पूर्वोक्तो वह्निराज्यं पिबतु । हे मानुष होतर्याज्यां पठ ।

[अथ] चतुर्थमन्त्रमाह—

होता यक्षद्बर्हिषीन्द्रं निषद्वरम् । वृषभं नर्यापसम् । वसुभी रुद्रैरादित्यैः । सयुग्भिर्बर्हिरा-

संदत् (२)। वेत्वाज्यस्य होतर्यज, इति।

बर्हिःशब्दश्चतुर्थप्रयाजदेवतारूपमग्निमाचष्टे । तस्मिन्बर्हिषि पूजिते सति तद्द्वारेणेन्द्रं दैव्यो होता पूजयतु। कीदृशमिन्द्रं निषद्वरं नितरां यज्ञे सीदन्त्युपविशन्तीति निषदा(दो) देवास्तेषां श्रेष्ठम् वृषभं कामानां वर्षयितारम्, नरेभ्यो हितं नर्यं तथाविधं कर्म यस्यासौ नर्यापास्तथाविधम् । स चेन्द्रो वस्वादिभिः सयुग्भिः स्वेन सह वर्तमानैर्युक्तो बर्हिरासदद्यज्ञं माप्नोतु । वेत्वित्यादि पूर्ववत् ।

अथ पञ्चममन्त्रमाह —

होता यक्षदोजो न वीर्यम्। सहो द्वार इन्द्रमवर्धयन् । सुप्रायणा विश्रयन्तामृतावृधः । द्वार इन्द्राय मीढुषे। वियन्त्वाज्यस्य होतर्यज, इति।

द्वारशब्दः पञ्चमप्रयाजदेवतारूपमग्निमाह। पूजार्थं बहुवचनम्। तमग्निं दैव्यो होता पूजयतु। ताश्च द्वारशब्दाभिधेया देवता इन्द्रं वर्धयन्तु। ओजआदयो दृष्टान्ताः। यथाऽष्टमधातोरोजसो वीर्यस्य चक्षुरादीन्द्रियसामर्थ्यस्य च सहसः शरीरबलस्य च वृद्धिस्तथेन्द्रस्याभिवृद्धिरित्यर्थः। ताश्च द्वारदेवताः सुप्रायणाः शोभनगतय ऋतावृधो यज्ञस्य वर्धयित्र्यस्तथाविधा विश्रयन्तां विशेषेण यज्ञमाश्रयन्तु। मीढुषे वृष्ट्यादिना सेचकायेन्द्रायेन्द्रार्थं द्वारो देवता वियन्तु पिबन्तु ।

[अथ] षष्ठमन्त्रमाह—

होता यक्षदुषे इन्द्रस्य धेनू। सुदुघे मातरौ मही। सवातरौ न तेजसी। वत्समिन्द्रमवर्धताम् (३)। वीतामाज्यस्य होतर्यज, इति।

उषाशब्दः षष्ठप्रयाजाग्निमूर्तिद्वयमाह। तादृश्यावुषे द्वे दैव्यो होता पूजयतु। कीदृश्यावुषे, इन्द्रस्य धेनू धेनुवत्प्रीणयित्र्यौ, सुदुघे सुखेन दोग्धुं शक्ये, मातरौ पयःप्रदानेन मातृवदृश्यौ, मही महत्यौ पूज्ये वा। वातृशब्दो गमनस्वभावं वत्समाचष्टे। समानो वातो वत्सो ययोस्ते सवातरौ। नकार उपमार्थः। इन्द्रस्य वत्सस्थानीयत्वादेकवत्से इव ते उभे वर्तेते । तेजसी

तेजस्विन्यौ, तादृश्यौ मूर्ती वत्सस्थानीयमिन्द्रमवर्धतां वृद्धिं प्रापयताम् । ते मूर्ती आज्यं वीतां पिबताम् ।

[अथ] सप्तममन्त्रमाह—

होता यक्षद्दैव्या होतारा । भिषजा सखाया ।
हविषेन्द्रं भिषज्यतः । कवी देवौ प्रचेतसौ । इन्द्राय
धत्त इन्द्रियम् । वीतामाज्यस्य होतर्यज, इति ।

दैव्यहोतृशब्देन सप्तमप्रयाजदेवतारूपस्याग्नेर्द्वौ देहावुच्येते । तावुभौ होता पूजयतु । कीदृशौ, भिषजावनिष्टव्याधिचिकित्सकौ, सखाया परस्परं स्निग्धौ, तावुभावन्नेन हविषा तमिन्द्रं भिषज्यतोऽनिष्टपरिहारेण चिकित्सां कुरुतः । तावुभौ कवी विद्वांसौ, देवौ द्योतमानौ, प्रचेतसौ प्रकृष्टज्ञानौ, ताविन्द्रार्थमिन्द्रियं धत्तः शक्तिं पोषयतः । तावुभावाज्यं वीतां पिबताम् ।

अ[था]ष्टममन्त्रमाह—

होता यक्षत्तिस्रो देवीः । नयस्त्रिधातवोऽपसः । इडा
सरस्वती भारती (४) । महीन्द्रपत्नीर्हविष्मतीः ।
वियन्त्वाज्यस्य होतर्यज, इति ।

अष्टमप्रयाजदेवतारूपस्याग्नेस्त्रिमूर्तयस्तिस्रस्ताः पूजयतु । कीदृश्यस्ता देवी-द्योतनात्मिकाः, अपसः कर्मनिमित्तं त्रिधातवस्त्रीणि शरीराणि धारयित्र्यः, अत एव नयास्त्रिलोकात्मिकाः । इडादीनि तासां नामधेयानि, ताश्च मही महत्यः पूज्या इन्द्रपत्नीरिन्द्रस्य पालयित्र्यः, हविष्मतीरस्मदत्तेन हविषा युक्ताः । तादृश्य एता आज्यं वियन्तु पिबन्तु ।

अथ नवममन्त्रमाह—

होता यक्षत्त्वष्टारमिन्द्रं देवम् । भिष-
जं सुयजं घृतश्रियम् । पुरुरूप॰

सुरेतसं मघोनिम् । इन्द्राय त्वष्टा दधदिन्द्रियाणि ।
वेत्वाज्यस्य होतर्यज, इति ।

त्वष्टृशब्देन नवमप्रयाजदेवतारूपोऽग्निरुच्यते, तं होता पूजयतु तद्द्वारेणेन्द्रं पूजयतु । कीदृशमिन्द्रं देवं शोभनात्मकं भिषजमनिष्टव्याधिचिकित्सकं सुयजं सुखेन यष्टुं शक्यं गृभश्रियं गृहसेविनं पुरुरूपं बहुरूपधारिणं सुरेतसं शोभनापत्ययुक्तं मघोनिमन्नवन्तम् । ईदृशायेन्द्राय स त्वष्टेन्द्रियाणि क्रियासामर्थ्यानि दधत्पोषयतु । आज्यं वेतु पिबतु ।

[अथ] दशममन्त्रमाह—

होता यक्षद्वनस्पतिम् । शमितारं शतक्रतुम् ।
धियो जोष्टारमिन्द्रियम् (५) । मध्वा समञ्जन्प-
थिभिः सुगेभिः । स्वदाति हव्यं मधुना घृतेन ।
वेत्वाज्यस्य होतर्यज, इति ।

वनस्पतिशब्देन दशमप्रयाजदेवतारूपोऽग्निरुच्यते । तं होता यक्षत्तद्द्वारेणेन्द्रं पूजयतु । कीदृशमिन्द्रं शमितारं सर्वानिष्टशमनहेतुं शतक्रतुं शतसंख्याकाश्वमेधयुतं धियो जोष्टारं बुद्धेः सेवितारमुपासकानां बुद्ध्या ध्यातव्यमित्यर्थः । इन्द्रियं सामर्थ्योपेतम् । तादृश इन्द्रः सुगेभिः पथिभिः सुखेन गन्तुं शक्यैर्मार्गैरागत्य मध्वा मधुरद्रव्येण समञ्जन्हवींषि स्निग्धीकुर्वन्वर्तते । स च मधुना मधुरेण घृतेन हव्यं स्वदाति स्वादू करोति । तथाविधेन्द्रमीश्वर्यं वनस्पतिर्देव आज्यं पिबतु ।

ए(अथै)कादशमन्त्रमाह—

होता यक्षदिन्द्रं स्वाहाऽऽज्यस्य । स्वाहा मेदसः ।
स्वाहा स्तोकानाम् । स्वाहा स्वाहाकृतीनाम् ।
स्वाहा हव्यसूक्तीनाम् । स्वाहा देवां आज्यपान् ।
स्वाहेन्द्रं होत्राज्जुषाणाः । इन्द्र आज्यस्य वि-

यन्तु । होतर्यज (६), इति ।

तेजसा सद्वर्धतां भारतीन्द्रियं जुषाणा द्वे. चं ।

समिधेन्द्रं तनूनपातमिडाभिर्बर्हिष्योजे उष देव्या तिस्रस्त्वष्टारं वनस्पतिमिन्द्रम् ॥२॥

समिधेन्द्रं चतुर्वेत्वेको वियन्तु द्विर्वीतामेको वियन्तु द्विर्वेत्वेको वियन्तु होतर्यज ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

उक्तेषु सर्वेषु प्रयाजेष्वनुगतमिन्द्रं होता यक्षद्यजतु पूजयतु । तदिन्द्रस्य प्रीत्यर्थमाज्यस्य स्वाहुतिरस्तु । मेदसो द्रव्यस्य स्वाहुतिरस्तु । स्तोकानां विदु(न्दू)नां स्वाहुतिरस्तु । स्वाहाकृतीनां स्वाहाकारेण दीयमानानां सर्वाहुतिद्रव्याणां स्वाहुतिरस्तु । हव्यसूक्तीनां हवि स्तावकमन्त्राभिमानिदेवतानामर्थं स्वाहुतिरस्तु । ये स्वाज्यं पिबन्तो देवास्तान्सर्वानुद्दिश्य स्वाहुतिरस्तु । होत्राद्धोमनिमित्तभूतादिन्द्रं जुषाणाः सेवमाना ये देवास्तेषां स्वाहुतिरस्तु । अयमिन्द्रोऽन्ये च सर्वे देवा आज्यं पिबन्तु । हे मानुष होतस्त्वदर्थं याज्यां पठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथ षष्ठेऽष्टमोऽनुवाकः ।

सप्तमे प्रयाजानां मैत्रावरुणप्रैषा एकादशाभिहिताः । अष्टमे तेषामेव प्रयाजानामेकादश पुरोरुचोऽभिधीयन्ते । तत्र प्रथमामृचमाह—

समिद्ध इन्द्र उषसामनीके । पुरोरुचा पूर्वकृद्वावृधानः । त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुः । जघान वृत्रं वि दुरो ववार, इति ।

समिन्नामको योऽयं प्रथमप्रयाजदेवोऽग्निः स एवायमिन्द्रस्वरूपः, स चोषसां प्रातःकालानामनीके मुखे वर्तते । किं कुर्वन्, पुरः पूर्वस्यां दिशि रोचत इति पुरोरुगाहवनीयस्तेन पूर्वकृत्पूर्वाणि कर्माण्यग्निहोत्रादीनि कुर्वन् । वावृधानोऽतिशयेन वर्धमानः । स च त्रिसंख्याकैस्त्रिंशत्संख्याकैश्च हविर्भागिभिर्देवैः

सहितो वज्रबाहुः सन्वृत्रं वैरिणं जघान हतवान् । दुरः स्वर्गस्य द्वाराणि विववार विवृत्तानि चकार ।

[अथ] द्वितीयामाह—

नराशꣳसः प्रति शूरो मिमानः । तनूनपात्प्रति यज्ञस्य धाम । गोभिर्वपावान्मधुना समञ्जन् । हिरण्यैश्चन्द्री यजति प्रचेताः, इति ।

तनूनपात्संज्ञको द्वितीयप्रयाजदेवः । स च नराशंस ऋत्विग्भिर्नरैरा समन्ताच्छंसनीयो युद्धेषु शूरः सन्प्रतिमिमानो वैरिणां बलमियत्तया परिच्छिन्दन्वर्तते । तथा यज्ञस्य धाम फलभूतं स्थानं प्रतिमिमानो वर्तते । तथा गोभिः स्वकीयै रश्मिभिर्वपावाञ्शरीरपुष्टिमान्वर्तते । तथा मधुना मधुरेण घृतेन समञ्जन्पुरोडाशादिहवींषि श्लक्ष्णीकुर्वन्वर्तते । तथा प्रक्षेभ्यो दीयमानैर्हिरण्यैश्चन्द्रयाह्लादक(का)री सन्प्रचेताः प्रकृष्टज्ञानयुक्तो यजति देवान्पूजयति ।

[अथ] तृतीयामाह—

ईडितो देवैर्हरिवाꣳ अभिष्टिः । आजुह्वानो हविषा शर्धमानः (१) । पुरंदरो मघवान्वज्रबाहुः । आयातु यज्ञमुप नो जुषाणः, इति ।

ईडितशब्देन तृतीयप्रयाजदेव उच्यते । स च देवैरीडितः स्तुत इन्द्राभिन्नत्वात् । हरिवान्हरिशब्दाभिधेयाभ्यामश्वाभ्यां युक्तः । अभिष्टिरभितः क्रियमाणेष्टिर्यागो यस्य सोऽयमभिष्टिर्यागनिष्पादक इत्यर्थः । आजुह्वानः संग्रामे प्रतिभटानामाह्वानकारी । हविषा शर्धमानोऽस्माभिर्हुतेनार्धकं बलं प्राप्नुवन् । वैरिणां पुराणि दारयतीति पुरंदरः । मघवान्धनवान् । वज्रबाहुरिन्द्ररूपेण वज्रस्य धारयिता । तादृशोऽयं जुषाणः प्रीयमाणो नोऽस्माकं यज्ञमुपयातु समीप एवाऽऽगच्छतु ।

[अथ] चतुर्थीमाह—

जुषाणो बर्हिर्हरिवान्न इन्द्रः । प्राचीनꣳ सीदत्प्रदिशा पृथिव्याः । उरुव्यचाः प्रथमानꣳ स्योनम् ।

आदित्यैरक्तं वसुभिः सजोषाः, इति ।

बर्हिर्नामकश्च(श्च)तुर्थप्रयाजदेवः । स चेन्द्ररूपः । हरिवानश्वयुक्तो जुषाणः प्रीतियुक्तः सम्पृचिन्त्या संबन्धिन्या प्रदिशा प्रकृष्टया पूर्वया दिशा युक्तं प्राचीनमाहवनीयस्थानं सीदत्प्राप्नोतु । उरुव्यचा अत्यन्तं व्याप्तः सम्प्रथमानं विस्तृतं स्योनं सुखकरं हविः प्राप्नोतीति शेषः । कीदृशः स आदित्यैर्वसुभिश्च सजोषाः समानप्रीतिः । कीदृशं हविरक्तं श्लक्ष्णम् ।

[ अथ ] पञ्चमीमाह—

इन्द्रं दुरः कवष्यो धावमानाः । वृषाणं यन्तु जनयः सुपत्नीः । द्वारो देवीरभितो विश्रयन्ताम् । सुवीरा वीरं प्रथमाना महोभिः (२), इति ।

द्वारशब्दाभिधेया देव्यः पञ्चमप्रयाजदेवस्य मूर्तयस्ताश्चेन्द्रमभितो विश्रयन्तां विशेषेण सेवन्ताम् । कीदृश्यो द्वारः । दुरश्छिद्रयुक्ता महावकाशा इत्यर्थः । कवष्यः कवाटवत्यः, धावमानाः प्रवेशनिर्गमनरूपगतिमत्यः शुद्धमत्यो वा, जनयो यज्ञानां जनयित्र्यः, सुपत्नीः सुष्ठु पालयित्र्यः, तादृश्यो देव्यो वृषाणं कामानां वर्षयितारं यन्तु प्राप्नुवन्तु । पुनरपि कीदृश्यः । सुवीराः शोभनवीरपुरुषाधिष्ठिताः, महोभिः कीर्तिभिः प्रथमाना लोकेषु प्रख्याताः । कीदृशमिन्द्रं वीरं युद्धेषु शूरम् ।

अथ षष्ठीमाह—

उषासा नक्ता बृहती बृहन्तम् । पयस्वती सुदुघे शूरमिन्द्रम् । पेशस्वती तन्तुना संव्ययन्ती । देवानां देवं यजतः सुरुक्मे, इति ।

उषःशब्देन नक्तशब्देन चाभिधेये षष्ठप्रयाजदेवस्य द्वे मूर्ती । ते उभे इन्द्रं यजतः पूजयतः । कीदृश्यौ । महती महत्यौ, पयस्वती क्षीरवत्यौ, सुदुघे सुखेन दोग्धुं शक्ये, पेशस्वती रूपवत्यौ, तन्तुना संव्ययन्ती वस्त्रेणैवालंकुर्वाणे, सुरुक्मे शोभनाभरणे । कीदृशमिन्द्रं बृहन्तं महान्तं तथा युद्धेषु शूरं देवानामपि देवं स्तावितम् ।

[अथ] सप्तमीमाह—

दैव्या मिमाना मनसा पुरुत्रा। होताराविन्द्रं प्रथमा सुवाचा। मूर्धन्यज्ञस्य मधुना दधाना । प्राचीनं ज्योतिर्हविषा वृधातः, इति ।

दैव्या होताराविति सप्तमप्रयाजदेवस्य द्वौ पुरुषदेहावुच्येते । तावुभाविन्द्रं हविषा वृधातो वर्धयतः । कीदृशौ तौ । पुरुत्रा बहुषु स्थानेषु मनसा मिमाना स्वचित्तेनोत्पादयन्तौ श्रद्धया ध्यायन्तावित्यर्थः । प्रथमा मुख्यभूतौ सुवाचा शोभनवाच्यौ कल्याणस्तुतियुक्तौ । यज्ञस्य मूर्धन्मूर्धस्थानीय आहवनीये प्राचीनं ज्योतिर्दधानोच्चयां ज्वालामुत्पादयन्तौ । कीदृशेन हविषा मधुना मधुरेण ।

अ[था]ष्टमीमाह—

तिस्रो देवीर्हविषा वर्धमानाः । इन्द्रं जुषाणा वृषणं न पत्नीः(३)। अच्छिन्नं तन्तुं पयसा सरस्वती । इडा देवी भारती विश्वतूर्तिः(१),इति ।

सरस्वतीडा भारती चेत्यष्टमप्रयाजदेवस्य तिस्रो मूर्तयः । ताश्च देवीर्हविषा वर्धमानाः सत्य इन्द्रं जुषाणाः सेवमाना वर्तन्ते । तत्र दृष्टान्तः—वृषणं न पत्नीर्यथा पत्न्यः सेक्तारं सेवन्ते तद्वत् । कीदृशमिन्द्रम् । अच्छिन्नं तन्तुमविच्छिन्नं पुत्रपौत्रादिसंघं तन्वानम् । कीदृशेन हविषा पयसा क्षीरसदृशेन । कीदृशी भारती देवी द्योतमाना विश्वतूर्तिः स्वेच्छागृहीतबहुशरीरयुक्ता ।

[अथ] नवमीमाह—

त्वष्टा दधदिन्द्राय शुष्मम् । अपाकोऽचिष्टुर्यशसे पुरूणि । वृषा यजन्वृषणं भूरिरेताः । मूर्धन्यज्ञस्य समनक्तु देवान् , इति ।

नवमप्रयाजदेवस्त्वष्टृशब्देनोच्यते । सोऽयमिन्द्रार्थं शुष्मं बलं दधत्संपादयतु । कीदृशस्त्वष्टा । अपाको वाक्यो न भवतीत्यर्थः । यशसे यशसोऽर्थे (र्थे) पुरूणि बहूनि कार्याण्यचिष्टुरचेष्टीत्संपादितवानित्यर्थः । स्वयं वृषा

सेचनसमर्थो भूरिरेता बह्वपत्यबीजयुक्तो वृषणं सेचनसमर्थमिन्द्रं यजन्पूजयतु। यज्ञस्य मूर्धन्नाहवनीये देवान्समनक्तु सम्यग्घविः प्रापयतु।

[अथ] दशमीमाह—

वनस्पतिरवसृष्टो न पाशैः। त्मन्या समञ्जञ्छमिता न देवः। इन्द्रस्य हव्यैर्जठरं पृणानः। स्वदाति हव्यं मधुना घृतेन, इति।

दशमप्रयाजदेवो वनस्पतिः। स च मधुना मधुरेण घृतेन हव्यं स्वदाति स्वादू करोति। तत्र दृष्टान्तः—पाशैरवसृष्टो न यथा कारागृहे बद्धः पुरुषः पाशैर्मुक्तः सन्स्वगृहे गत्वा विस्रम्भेण व्यापारं करोति तद्वत्। किं कुर्वन्। त्मन्या समञ्जन्नात्मनैव सम्यग्गच्छन्स्वतन्त्रः सन्नित्यर्थः। स्वातन्त्र्ये दृष्टान्तः शमिता न देवो यथा पशोर्विशसनकर्ता विशसने स्वतन्त्रस्तद्वत्। पुनः किं कुर्वन्, हव्यैरिन्द्रस्य जठरमुदरं पृणानः पूरयन्।

ए(अथै)कादशीमाह—

स्तोकानामिन्दुं प्रति शूर इन्द्रः। वृषायमाणो वृषभस्तुराषाट्। घृतप्रुषा मधुना हव्यमुन्दन्। मूर्धन्यज्ञस्य जुषताꣳ स्वाहा (४), इति।

शर्धमानो महोभिः पत्नीर्घृतेन चत्वारि च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्यायेऽष्टमोऽनुवाकः॥ ८॥

=====

इन्द्रशब्दः सर्वप्रयाजसाधारणदेवतावाची। सोऽयमिन्द्रो यज्ञस्य मूर्धन्नाहवनीये स्वाहा हुतं हविर्जुषताम्। कीदृश इन्द्रः। स्तोकानामिन्दुं प्रति शूरः स्तोकानां हविर्लेशानां मध्ये योऽयमिन्दुरतिस्वल्पोंऽशस्तं प्रति शूर आदरवानल्पमपि हविर्भागं नावजानातीत्यर्थः। वृषायमाणो वृषवदाचरन्। यथा वृषो गोषु बहून्वत्सानुत्पादयति तद्वदयं बहुप्रजोत्पादक इत्यर्थः। वृषभः

१ ग. °त्मन्यैव।

कामानां वर्षयिता । तुराषाट्, तूर्णं सहते शत्रूनभिभवतीत्यर्थः । किं कुर्वन्, घृतप्रुषा घृतसंगतेन मधुना मधुरेण रसेन हव्यमुन्दन्पुरोडाशादिरूपं हविर्द्रवी कुर्वन् । ता एताः पुरोरुगाख्या एकादशसंख्याका ऋचः प्रयाजानां याज्या आप्रिय इति चोच्यन्ते । हविष्प्रक्षेपात्पूर्वपाठत्वात्पुरोरुचः । ई(इ)ज्यन्ते प्रयाजा आभिरिति याज्याः । देवताः सर्वतः प्रीणयन्तीत्याप्रियः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

=====

अथ षष्ठे नवमोऽनुवाकः ।

---

अष्टमे प्रयाजयाज्या अभिहिताः । अथ नवम ऐन्द्रस्य पशोर्वपापुरोडाशह-विषां द्वे द्वे याज्यापुरोनुवाक्ये क्रमेणोच्येते । तत्र वपामन्त्रयोः प्रतीके दर्शयति—

आचर्षणि प्रा विवेष यन्मा, इति ।

“ आचर्षणि प्रा वृषभो जनानाम् ” इति पुरोनुवाक्या । सा च “ जुष्टी नरः ” इत्यत्र व्याख्याता । “ विवेष यन्मा धिषणा ” इति याज्या । सा च “ इन्द्रं वो विश्वतस्परि ” इत्यत्र व्याख्याता ।

अथ पुरोडाशे पुरोनुवाक्यायाः प्रतीकं दर्शयति—

तꣳ सध्रीचीः, इति ।

तं सध्रीचीरूतयो वृष्णियानीत्येषा “वृषासो अंशुः” इत्यत्र व्याख्याता । अथ तत्रैव याज्यामाह—

सत्यमित्तन्न त्वावाꣳ अन्यो अस्ति । इन्द्र देवो न

मर्त्यो ज्यायान् । अहन्नहिं परिशयानमर्णः ।

अवासृजोऽपो अच्छा समुद्रम्, इति ।

हे इन्द्र तन्मयोच्यमानं वचः सत्यमित्सत्यमेव । कीदृशं वच इति तदु-

---

१ ग. °नीति “ म्रु° ।

च्यसे—अन्यः कश्चिद्देवो मर्त्यो वा त्वावांस्त्वत्सदृशो नास्ति। ज्यायानधिको नास्ति। अर्णं उदकमुद्दिश्य त्वं परिशयानं परितो व्याप्य वर्तमानमहिं मेघमहन्हतवानसि मेघं भित्त्वा जलं वर्षयसीत्यर्थः। ततः समुद्रमच्छा समुद्राभिमुख्येनापो जलान्यवासृजोऽवाङ्मुखत्वेन सृष्टवानसि।

अथ हविषः पुरोनुवाक्यामाह—

ससाहिषे पुरुहूत॒ शत्रू॑न् । ज्येष्ठ॑स्ते॒ शुष्म॑ इ॒ह रा॒तिर॑स्तु । इन्द्राऽऽभ॑र॒ दक्षि॑णेना॒ वसू॑नि । पति॒ः सिन्धू॑नामसि रे॒वती॑नाम्, इति।

हे पुरुहूत बहुषु यज्ञेष्वाहूयमानेन्द्र शत्रून्प्रकर्षेण ससाहिषेऽभिभूतवानसि। ते शुष्मो बलं ज्येष्ठोऽत्यन्तप्रवृद्धः। इहाऽस्मिन्कर्मणि रातिस्त्वदीयं धनमस्तु। हे इन्द्र दक्षिणेन हस्तेन वसूनि धनान्याभर। त्वं तु रेवतीनां धनयुक्तानां संपदां सिन्धूनां रत्नाधाराणां समुद्राणां पतिः पालकोऽसि।

तत्रैव याज्यामाह—

स शे॑वृ॒धमधि॑ धा द्यु॒म्नम॒स्मे । महि॑ क्ष॒त्रं ज॑ना॒षाडि॑न्द्र॒ तव्य॑म् । रक्षा॑ च नो म॒घोन॑ः पा॒हि सू॒रीन् । रा॒ये च॑ नः स्वप॒त्या इ॒षे धाः ( १ ), इति।

रेवती॒नां च॒त्वारि॑ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये नवमोऽनुवाकः ॥ ९ ॥

=====

हे इन्द्र स त्वं शेवृधं सुखवर्धकं द्युम्नं धनमस्मे अस्मास्वधिधा अधिकं संपादय। जनाषाड्विरोधिजनानामभिभावि तव्यं त्वदीयं क्षत्रं बलं महि महत्सोऽस्मान्मघोनो धनवतः कृत्वा रक्ष। तथा सूरीन्विदुषश्च कृत्वा पाहि। नोऽस्मान्राये धनाय स्वपत्यै शोभनापत्यत्वायेषेऽन्नाय च धा धारयास्मभ्यं धनादीन्देहीत्यर्थः।

अत्र विनियोगसंग्रहः—

ऐन्द्रे पशौ वपायां द्वे ऋचौ याज्यानुवाक्यके ।
आचर्षणि विवेषेति पुरोडाशे पुनर्द्वयम् ॥
तं सध्रीचीः सत्यमित्थ हविषस्तु तथा द्वयम् ।
प्रससाहि स शे मन्त्रा अनुवाके षडीरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

====

अथ षष्ठे दशमोऽनुवाकः ।

---

नवमे वपादीनां याज्यानुवाक्या उक्ताः । दशमेऽनूयाजानामेकादश मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथममन्त्रमाह—

देवं बर्हिरिन्द्रꣳ सुदेवं देवैः । वीरवत्स्तीर्णं वेद्याम-
वर्धयत् । वस्तोर्वृतं प्राक्तोर्भृतम् । राया बर्हिष्म-
तोऽत्यगात् । वसुवने वसुधेयस्य वेतु यज, इति ।

बर्हिःशब्देन दर्भाभिमानिप्रथमानुयाजदेवतास्वरूपमुच्यते । तद्बर्हिरिन्द्रं देवमवर्धयत् । कीदृशं बर्हिः । सुदेवं शोभना देवता यस्य तत्सुदेवं सर्वे देवा बर्हिषि सीदन्ति । तथा देवैर्देवसदृशैर्ऋत्विग्भिर्वेद्यां स्तीर्णं प्रसारितम् । तथा वीरः कर्मशूरो यजमानोऽस्यास्तीति वीरवत् । वस्तोरक्तोरित्येतदव्ययद्वयमहोरात्रवाचकम् । इदं बर्हिर्वस्तोरहनि वृतं संपादितम् । अक्तो रात्रौ प्रभृतं प्रकर्षेणोन्नतदेशे स्थापितम् । तादृशं बर्हीं राया धनेन बर्हिष्मतो बर्हिर्युक्तानन्यान्यागानत्यगादतीत्य गत ।तरयागेभ्योऽधिकं धनं प्रयच्छतीत्यर्थः । वसुधेयस्य वसु धनमेव धेयं संपादनीयं यस्य कुबेरादेः सोऽयं वसुधेयस्तस्य वसुवने धनदाननिमित्तं तदीयं धनमस्मभ्यं दातुमित्यर्थः । वेतु बर्हिर्देव आज्यं पिबतु । तदर्थं हे होतर्यज याज्यां पठ ।

अथ द्वितीयमन्त्रमाह—

देवीर्द्वार इन्द्रꣳ संघाते । विड्वीर्यामन्नवर्धयन् ।

आ व॒त्सेन॑ त॒रुणे॑न कुमा॒रेण॑ च मीव॒ता अपार्वा-
णम्। रे॒णुक॑काटं नुदन्ताम् । व॒सु॒वने॑ व॒सु॒धेय॑स्य
वियन्तु यज (१), इति।

द्वारशब्दाभिधेयाः स्त्रीमूर्तयो द्वितीयानुयाजदेवतास्ता देव्य इन्द्रमवर्धयन्। कीदृश्यः। संघाते विद्वीर्द्वाराभिमानित्वात्कपाटद्वयमेलने दृढय-क्षयः। कुत्र वर्धितवत्यो यामन्त्रियमरूपयागे। वत्सोऽत्यन्तवालस्तरुणो युवा तयोर्मध्ये वर्तमानः कुमारः। चकारस्तेषां समुच्चये। आकारः कारकोऽर्थवाची, सर्वैरपत्यैः सहितामिन्द्रामित्यर्थः। किंचैता द्वार्देवता मीविता बलाधिक्येन स्थौल्यमापन्नाः सत्यो रेणुककाटमपनुदन्ताम्। कट्यां भवं काटं लिङ्गं रेणुकं रमणशीलं काटं यस्य राक्षसादेस्तं स्वैरचारिणं निरा-कुर्वन्तु। दृष्टान्तार्थोऽर्वञ्श(श)ब्दः। दुर्दान्ताश्वो यथा विषयव्यसनेन यत्र क्वापि वडवामारोहति तादृशमित्यर्थः। ता देव्यो वियन्त्वाज्यं पिबन्तु। वसुवन इत्यादि पूर्ववत्।

अथ तृतीयमन्त्रमाह—

दे॒वी उ॒षासा॒ नक्ता॑ । इन्द्रं॑ य॒ज्ञे प्र॑य॒त्य॑ह्वेताम्।
दैवी॒र्विशः॒ प्राया॑सिष्टाम्। सुप्री॑ते सु॒धि॑ते अभूताम्।
व॒सु॒वने॑ व॒सु॒धेय॑स्य वीतां यज, इति।

उषासानक्तशब्दवाच्ये अहोरात्राभिमानिन्यौ तृतीयानुयाजदेव्यौ। ते उभे प्रयति प्रकर्षेण गच्छति वर्तमाने यज्ञ इन्द्रमह्वेतामिन्द्रस्याऽऽह्वानमकुरुताम्। दैवीर्विशो देवसंबन्धिनीः प्रजाः प्रायासिष्टां प्रकर्षेण प्रापितवत्यौ। स्वयं च सुप्रीते अत्यन्ततुष्टे सुधिते सुखप्राप्तियुक्ते अभूताम्। सुप्रीतसुधितशब्दौ सुखप्राप्तिवाचकौ। तादृशौ देव्यौ वीतां पिबताम्।

अथ चतुर्थमन्त्रमाह—

दे॒वी जोष्ट्री॒ वसु॑धिती । दे॒वमिन्द्र॑मवर्धताम्।

---

१ क. उद्धताश्वो। २ ग. "यत्याहूवे"। ३ ग. "न्द्रमाहूवे"।

अयाव्यन्याऽघा द्वेषाꣳसि । आऽन्याऽवाक्षीद्वसु वार्याणि । यजमानाय शिक्षिते (२) । वसुवने वसुधेयस्य वीतां यज, इति ।

यथा तृतीयानुयाजदेवस्योषासानक्तशब्दवाच्ये द्वे स्त्रीमूर्ती तथा चतुर्थानुयाजदेवस्य जोष्ट्रीशब्दवाच्ये द्वे स्त्रीमूर्ती । ते च वसुधिती सुखप्राप्तियुक्ते । तादृश्यावुभे इन्द्रं देवमवर्धतां वर्धितवत्यौ । तयोरुभयोर्मध्येऽन्या काचिद्देव्यघा द्वेषांसि द्वेष्याणि पापान्ययाव्यपमत्तः पृथक्कृतवती । अन्येतरा देवता वार्याणि वसु वरणीयानि धनान्य(न्या)वाक्षीत्सर्वतः प्रापितवती । किमर्थं यजमानाय । कीदृश्यौ देव्यौ शिक्षिते कुशले ।

अथ पञ्चममन्त्रमाह—

देवी ऊर्जाहुती दुघे सुदुघे । पयसेन्द्रमवर्धताम् । इषमूर्जमन्याऽवाक्षीत् । सग्धिꣳ सपीतिमन्या । नवेन पूर्वं दयमाने । पुराणेन नवम् । अधातामूर्जमूर्जाहुती वसु वार्याणि । यजमानाय शिक्षिते । वसुवने वसुधेयस्य वीतां यज (३), इति ।

ऊर्जाहुतिशब्दवाच्ये पञ्चमानुयाजदेवते स्त्रीमूर्ती । ते च दुघे अपेक्षितस्य फलस्य दोहयित्र्यौ, सुदुघे सुष्ठु दोग्धुं शक्ये, तादृश्यावुभे पयसा क्षीरविकारेण हविषेन्द्रमवर्धतां वर्धितवत्यौ । तयोरन्या काचिदिषमन्नमूर्जं रसं चावाक्षीत्प्रापितवती । इतरा तु सग्धिं सहभोजनं सपीतिं सहपानं चोभयोः प्रापितवती । ते चोभे नवेनेदानीं क्रियमाणेन हविषा पुरा कदाचिदनुष्ठितं हविर्दयमाने रक्षयित्र्यौ पुराणेन च हविषा नवं हविः पालयन्त्यौ हविर्द्वैयेनात्यन्ततुष्टे इत्यर्थः । ते चोर्जाहुती देव्यावूर्जं क्षीरादिरसमधातां संपादितवत्यौ । शेषं पूर्ववत् ।

अथ षष्ठमन्त्रमाह—

देवा दैव्या होतारा । देवमिन्द्रमवर्धताम् । हताघ-

शश्वत्सावाभार्ष्टां वसु वार्याणि। यजमानाय शिक्षिते ।

वसुवने वसुधेयस्य वीतां यज, इति ।

षष्ठ्याहोतृशब्दवाच्यौ षष्ठानुयाजदेवस्य द्वौ देवौ । तथाविधौ देवाविन्द्रं देवमवर्धतां वर्धितवन्तौ । कीदृशौ देवौ । हताघशंसावघमस्मद्विषयं द्रोहं शंसतीत्यघशंसो वैरी । स च हतो याभ्यां तौ हताघशंसौ । तादृशौ देवौ यजमानार्थं वरणीयानि वसून्याभार्ष्टामाहृतवन्तौ । शिक्षितौ कुशलौ ।

अथ सप्तममन्त्रमाह—

देवीस्तिस्रस्तिस्रो देवीः । पतिमिन्द्रमवर्धयन् । अस्पृक्षद्भारती दिवम् । रुद्रैर्यज्ञꣳ सरस्वती । इडा वसुमती गृहान् ( ४ ) । वसुवने वसुधेयस्य वियन्तु यज, इति ।

इडा सरस्वती भारतीत्येतास्तिस्रो देव्यः सप्तमानुयाजदेवताः । परस्परवियोगः कदाचिदपि नास्तीति विवक्षया पुनरपि तिस्रो देवीरित्युक्तम् । तास्तिस्रः पतिं पालकमिन्द्रमवर्धयन्वर्धितवत्यः । तासां मध्ये भारती देवी दिवं द्युलोकमस्पृक्षत्स्पृष्टवती द्युलोके वर्तत इत्यर्थः । सरस्वती देवी रुद्रैर्देवैः सहिता यज्ञमस्पृक्षदपालयदित्यर्थः । इडा देवी वसुमती धनयुक्ता भूत्वा गृहानस्पृक्षदपालयत् । तास्तिस्रो देव्यो वियन्तु पिबन्तु ।

अथाष्टममन्त्रमाह—

देव इन्द्रो नराशꣳसः । त्रिवरूथस्त्रिवन्धुरः । देवमिन्द्रमवर्धयत् । शतेन शितिपृष्ठानामाहितः । सहस्रेण प्रवर्तते । मित्रावरुणेदस्य होत्रमर्हतः । बृहस्पतिः स्तोत्रम् । अश्विनाऽऽध्वर्यवम् । वसुवने वसुधेयस्य वेतु यज ( ५ ), इति ।

नराशंसशब्देनाष्टमानुयाजदेव उच्यते । स च परमैश्वर्ययोगादिन्द्रः ।

स च त्रिवरूथस्त्रिविधसेनायुक्तः । त्रिवन्धुरस्त्रिविधोन्नतावनतभावयुक्तः। समीपवर्तिनी काचित्सेनाऽत्युन्नता, ततो बहिर्भूता मध्यमा काचिदानता, ततोऽपि बहिर्भूताऽधमाऽत्यन्तमानता । तादृशो देवः प्रसिद्धमिन्द्रं देवं वर्धितवान् । स च नराशंसः शितिपृष्ठानां श्वेतपृष्ठानां गवां शतेन सहस्रेण चाऽऽहितः सर्वतो व्याप्तः प्रवर्तते । मित्रावरुणेन्मित्रावरुणावेवास्य नराशंसस्य होत्रं होतृत्वमर्हतः । बृहस्पतिः स्तोत्रं स्तोतृत्वमुद्गातृत्वमर्हति । अश्विनौ चाऽऽध्वर्यवमध्वर्युत्वमर्हतः ।

अथ नवममन्त्रमाह—

देव इन्द्रो वनस्पतिः । हिरण्यपर्णो मधुशाखः सुपिप्पलः । देवमिन्द्रमवर्धयत् । दिवमग्रेणाऽऽप्रात् । आऽन्तरिक्षं पृथिवीमदृꣳहीत । वसुवने वसुधेयस्य वेतु यज, इति ।

नवमानुयाजदेवो वनस्पतिशब्दवाच्यः । स च परमैश्वर्ययोगादिन्द्रः । वृक्षाभिमानित्वेन तदाकारत्वाद्धिरण्यपर्णः सुवर्णमयपत्रयुक्तः, मधुशाखो मधुराभिः कोमलाभिः शाखाभिर्युक्तः, सुपिप्पलः शोभनेन फलेन युक्तः । सोऽयं वनस्पतिर्देवं इन्द्रं देवं वर्धितवान् । स्वकीयेन वृक्षाग्रेण दिवं द्युलोकमामात्पूरितवान् । तथाऽन्तरिक्षमामान्मध्यभागेन पूरितवान् । पृथिवीमदृंहीन्मूलैर्दृढीकृतवान् ।

अथ दशममन्त्रमाह—

देवं बर्हिर्वारितीनाम् । देवमिन्द्रमवर्धयत् । स्वासस्थमिन्द्रेणाऽऽसन्नम् । अन्या बर्हीꣳष्यभ्यभूत् । वसुवने वसुधेयस्य वेतु यज, इति ।

दशमानुयाजदेवो दर्भाभिमानी बर्हिःशब्दवाच्यः । तच्च बर्हिर्वारितीनां वारां जलानामितयः प्राप्तयो वारितयस्तासां वारितीनां देवं द्योतकं दर्भेषु मरुदेषु भूमौ जलप्राप्तिर्जातेत्यनुगातुं शक्यते, तादृशं बर्हिरिन्द्रमवर्धयद्वर्धितवत् । कीदृशं बर्हिः, इन्द्रेण स्वासस्थं शोभनमासनं स्वासस्तस्मिन्स्थातुं

१ ग. °तवञ्चभा° ।

योग्यं स्वासस्थम् । इन्द्रो हि बर्हिषि सुखेनोपविशति । अत एवाऽऽसन्द्यभि-न्द्रस्य समीपवर्ति भूम्यान्यानि लौकिकानि बर्हींष्यभ्युक्तिरस्कृतवत् । न हि लौकिकानि बर्हींषि मन्त्ररहितानीन्द्रेण स्थातुं योग्यानि ।

अथैकादशमन्त्रमाह—

देवो अग्निः स्विष्टकृत् । देवमिन्द्रमवर्धयत् । स्विष्टं कुर्वन्त्स्विष्टकृत् । स्विष्टमद्य करोतु नः । वसुवने वसुधेयस्य वेतु यज (६), इति ।

वियन्तु यज शिक्षिते शिक्षिते वसुवने वसुधेयस्य वीतां यज गृहान्वेतु यजा-मून् षट् च ।

देवं बर्हिर्देवीर्द्वारो देवी उषासा नक्ता देवी जोष्ट्री देवी ऊर्जाहुती देवा दैव्या होतारा शिक्षितौ देवीस्तिस्रस्तिस्रो देवीः पतिं देव इन्द्रो नराशꣳसो देव इन्द्रो वन-स्पतिर्देवं बर्हिर्वारितीनां देवो अग्निः स्विष्टकृद्देवम् ।

वेतु वियन्तु चतुर्वीतामेको वियन्तु चतुर्वेतु । अवर्धयदवर्धयन्नित्रिरवर्धतामेकोऽवर्ध-यन्त्यतुरवर्धयत् । वस्तोरा वत्सेन दैवीरयावीषꣳ हतास्पृक्षच्छतेन दिवमिन्द्रꣳ स्वास-स्थꣳ स्विष्टम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये दशमोऽनुवाकः ॥१०॥

=====

स्विष्टकृन्नामकोऽग्निरेकादशानुयाजदेवः । स इन्द्रं देवं वर्धितवान् । अत्र सर्वत्राऽऽशंसार्थत्वाद्भूतवन्निर्देशः । यत्पूर्वमिष्टं तत्सर्वं सुष्ठु कुर्वन्वर्तत इति व्युत्पत्त्या स्विष्टकृदिति नाम संपन्नम् । तादृशो देवो नोऽस्मदर्थमद्यास्मि-न्यज्ञे स्विष्टं करोतु । वसुधेयस्य धनस्वामिनो वसुवने धनदानायेमित्तं पेतव्यं देव आज्यं पिबतु । हे होतस्तदर्थं याज्यां पठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-यब्राह्मणभाष्ये षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अथ षष्ठ एकादशोऽनुवाकः ।

---

निर्वापकालीनो योऽयमैन्द्रः पशुः सूत्रकारेणोक्तः "निर्वपणकाल ऐन्द्रं पशुमालभते" इति । तत्रानुयाजार्था मैत्रावरुणप्रैषा दशमेऽनुवाकेऽभिहिताः । अथैकादशे चोदकप्राप्तपशुत्रये प्रयाजार्था मैत्रावरुणप्रैषा उच्यन्ते । अस्याः कौकिल्याः प्रकृतिभूतायां सौत्रामण्यां पशुत्रयं विहितम्—"आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभम्" इति । तदेतत्त्रयमत्र चोदकप्राप्तं तदीयेषु प्रयाजप्रैषेषु प्रथममन्त्रमाह—

होता॑ यक्षत्स॒मिधा॒ऽग्निमि॒डस्प॒दे । अ॒श्विनेन्द्र॑ꣳ सर॑स्वतीम् । अ॒जो धू॒म्रो न गो॒धू॒मैः कुलै॑र्भेष॒जम् । मधु॒शष्पै॒र्न तेज॑ इ॒न्द्रियम् । प॒यः सोमः॑ परि॒स्रुता॑ घृ॒तं मधु॑ । वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑, इति ।

सर्वप्रयाजसाधारणो देवोऽग्निस्तस्य विशेषमूर्तयः समिदादयः । योऽयं दैव्यो होता सोऽयमिडस्पदे सोमक्रयणीपदपांसुयुक्त आहवनीये समिधाऽग्निं यक्षत्समिन्मूर्तिरूपेण वर्तमानमग्निं यक्षत्पूजयतु । तद्द्वारेणाश्विनौ द्वाविन्द्रं सरस्वतीं च देवतात्रयं पूजयतु । योऽयमजो धूम्रवर्णः "आश्विनं धूम्रललाममालभेत" इति विहितः सोऽयमत्र सक्तवर्थैर्गोधूमैः कुलैर्बदरफलैश्च सह भेषजमौषधमनिष्टनिवारकमित्यर्थः । अत्राजो धूम्रो न गोधूमैरित्युक्तो नकारः साहित्यार्थः । एवमुत्तरत्रापि यथोचितं साहित्यार्थ उपमार्थो वा योजनीयः । यानि शष्पाणि व्रीह्यङ्कुराणि तैः सहितं मधुरमिदं द्रव्यं तेजस इन्द्रियस्य च कारणत्वेन तद्रूपम् । येयं परिस्रुता धारया स्रवन्ती सुरा यच्च पयः क्षीरं तदुभयमत्र सोमः सोमसदृशं मधु घृतं मधुरघृतसदृशम्, अवस्तदीयं कर्म निष्पादयितुं योऽयं समिदारूपोऽग्निर्येऽश्वीन्द्रसरस्वत्याख्या देवास्ते सर्वेऽप्याज्यस्य वियन्त्विदमाज्यं पिबन्तु । तदर्थं हे मानुष होतर्यज याज्यां पठ ।

अथ द्वितीयमन्त्रमाह—

होता॑ यक्ष॒त्तनू॒नपा॒त्सर॑स्वती । अवि॒र्मे॒षो न भे॒ष॒-

जम् । पथा मधुमताऽऽभरन् । अश्विनेन्द्राय वीर्यम् ( १ ) । बदरैरुपवाकाभिर्भेषजं तोक्मभिः । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज, इति ।

योऽयं द्वितीयप्रयाजदेवस्तनूनपान्नामको या च सरस्वती यौ च सरस्वत्युपलक्षितावश्विनौ यश्च सरस्वत्युपलक्षित इन्द्रस्तान्सर्वान्देवानयं दैव्यो होता यक्षत्पूजयतु । योऽयमश्वाविजातीयो मेषः "सारस्वतं मेषम्" इतिवाक्यविहितः सोऽयं मधुमता पथा सह भेषजमनिष्टनिवारकम्, कर्मानुष्ठानमेवात्र मधुरः पन्थाः, अत्राश्विना तदुपलक्षिताः सर्वे देवा इन्द्राय वीर्यमाभरन् । कीदृशं वीर्यं बदरैः सक्तुहेतुभिर्बदरफलैरुपवाकाभिर्हरितयवैस्तोक्मभिरङ्कुरितव्रीहिभिश्च निष्पन्नं भेषजमनिष्टनिवारकम् । 'पयः सोमः' इत्यादि पूर्ववत् ।

अथ तृतीयमन्त्रमाह—

होता यक्षन्नराशꣳसं न नग्नहुम् । पतिꣳसुरायै भेषजम् । मेषः सरस्वती भिषक् । रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम् । बदरैरुपवाकाभिर्भेषजं तोक्मभिः । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज ( २ ), इति ।

तृतीयप्रयाजदेवो नराशंसस्तमग्न्यादिदेवसंयुक्तं होता पूजयतु । साहित्यवाचिना नकारेण देवतान्तरयोगोऽवगम्यते । नग्नहुशब्दः स्थूलयवनिष्पन्नसक्तुवाची । स च द्रव्यविशेषमेलनेन सुरायाः पतिः पालकस्तादृशसुरापतिं नग्नहुं भेषजमनिष्टनिवारकं कर्तुं दैव्यो होता पूजयत्वित्यन्वयः । योऽयं विहितो मेषरूपः पशुर्या च तद्देवता सरस्वती तदुभयं भिषक्चिकित्सकसदृशं सर्वारिष्टनिवारकमित्यर्थः । येयं वपा सेयमश्विनोर्देवयो रथो न चन्द्री चन्द्रवद् ह्लादकारी, इन्द्रस्य तु वीर्यं सामर्थ्यहेतुः । बदरैरित्यादिपूर्ववत् ।

अथ चतुर्थमन्त्रमाह—

होता यक्षदिडेडित आजुह्वानः सरस्वतीम्। इन्द्रं बलेन वर्धयन्। ऋषभेण गवेन्द्रियम्। अश्विनेन्द्राय वीर्यम्। यवैः कर्कन्धुभिः। मधुलाजैर्न मासरम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज, इति।

इट्शब्देन चतुर्थप्रयाजदेव उच्यते। इडा देवेन सहाश्विसरस्वतीन्द्रदेवान्होता यजतु। कीदृश इन्द्रः, ईडितो मन्त्रैः स्तुतः, सरस्वतीमाजुह्वान इह कर्मण्याह्वयन्वर्तते। इन्द्रं बलेन वर्धयन्वर्तते। ऐन्द्रमृषभमिति विहितेन गोजातीयेनर्षभेणेन्द्रियं वर्धयन्वर्तते। अश्विसहितायेन्द्राय वीर्यं वर्धयन्वर्तते। ये सक्तवर्था यवा ये च कर्कन्धवः स्थूलबदरफलविशेषा ये च लाजसदृशा व्रीहिबीजविशेषास्तैः सर्वैर्युक्तं मधु मधुरं मासरं मासरद्रव्यं वर्धयन्वर्तते। मासरं तक्रमिश्रितं सूक्ष्मयवचूर्णम्।

अथ पञ्चममन्त्रमाह—

होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदाः। भिषङ्नासत्या (३)। भिषजाऽश्विनाऽश्वा शिशुमती। भिषग्धेनुः सरस्वती। भिषग्दुह इन्द्राय भेषजम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज, इति।

दर्भाभिमानी बर्हिःशब्दवाच्यः पञ्चमप्रयाजदेवस्तं देवं होता यजतु। कीदृशो देवः, सुष्टरीमा शोभनस्तरीमा वेद्यामास्तरणं यस्यासौ सुष्टरीमा, ऊर्णम्रदाः कम्बलवन्मृदुः। इह कर्मणि नासत्या भिषगश्विदेवौ चिकित्सकौ विघ्नरूपानिष्टनिवारकौ। न केवलमत्रैव किंतु सर्वत्र। भिषजाऽश्विना तौ देवौ चिकित्सकौ। कीदृशावश्वाऽश्ववन्तौ व्यापिनौ वा। शिशुमती निशितबुद्धिर्येयं सरस्वती साऽपि धेनुः प्रीणयित्री सती भिषक्चिकि-

रसकसदृशी । योऽयमश्विरूपः सरस्वतीरूपश्च भिषक्सोऽयमिन्द्रार्थं भेषजमौषधसदृशमिदं कर्म दुहे दोग्धि निष्पादयतीत्यर्थः ।

अथ षष्ठमन्त्रमाह—

होता यक्षद्दुरो दिशः । कवष्यो न व्यचस्वतीः ।
अश्विभ्यां न दुरो दिशः । इन्द्रो न रोदसी दुघे ।
दुहे कामान्त्सरस्वती ( ४ ) । अश्विनेन्द्राय भेषजम् । शुक्रं न ज्योतिरिन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज, इति ।

दुरःशब्दाभिधेया द्वाराभिमानिन्यः षष्ठप्रयाजदेवतास्ता होता यजतु । ताः कीदृश्यः, दिशो दिगात्मिकाः कवष्यो न कवाटयुक्ता इव वर्तन्ते । व्यचस्वतीर्व्याप्तिमत्यः । ईदृश्यो दिगात्मिका दुराख्या देवता अश्विभ्यां नाश्विदेवाभ्यां सह वर्तन्ते । इन्द्रो नेन्द्रस्तु रोदसी द्यावापृथिव्यौ दुघे दोग्धि तत्रत्यं सारं संपादयतीत्यर्थः । सरस्वती काम दुहे दोग्धि संपादयति । अश्विनेन्द्रायाश्विभ्यां सहितायेन्द्राय भेषजमौषधसदृशमिदं कर्म शुक्रं न शुद्धमिव ज्योतिः प्रकाशकमिन्द्रियं संपाद्यत[1] इति शेषः ।

अथ सप्तममन्त्रमाह—

होता यक्षत्सुपेशसोषे नक्तंदिवा । अश्विना संजानाने । समञ्जाते सरस्वत्या । त्विषिमिन्द्रे न भेषजम् । श्येनो न रजसा हृदा । पयः सोमः परिस्रुता घृतं मधु (५) । वियन्त्वाज्यस्य होतर्यज, इति ।

उषाशब्देन सप्तमप्रयाजदेवस्य मूर्तिद्वयमहोरात्राभिमानिरूपमुच्यते । हे उषे होता यजतु । कीदृशे उषे, सुपेशसे शोभनरूपयुक्ते नक्तंदिवाऽहोरात्ररूपे अश्विना संजानाने अश्विदेवाभ्यां संयुज्य सर्वं जानत्यौ । तथा सरस्वत्या

1 क. °संपद्यत ।

सह भिषज्यांते सम्यग्गच्छन्त्यौ, तादृश्यौ देव्याविन्द्रे भेषजं औषधमिव स्थिरं दीर्घं कृतवत्यावित्ति शेषः । श्येनो न मधलपक्षीव रजसा रञ्जकेन हृदा हृदयेन संयुक्ते इति शेषः । यथा श्येनस्तीव्रवेगेन(ण) मनुष्याणां हृदयं रञ्जयति तद्वदिमे अपि स्वकार्यनिष्पादनेन रञ्जयत इत्यर्थः ।

अथाष्टममन्त्रमाह—

होता यक्षद्दैव्या होतारा भिषजाऽश्विना । इन्द्रं न जागृवी दिवा नक्तं न भेषजैः । शूषꣳ सरस्वती भिषक् । सीसेन दुह इन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज, इति ।

दैव्याहोतृशब्देनाष्टमयाजदेवस्य द्वौ देहावुच्येते । तौ होता यजतु । भिषजाऽश्विना भिषग्रूपावश्विनावपि यजतु । इन्द्रं चेन्द्रमपि यजतु । नकारः समुच्चयार्थः । कीदृशौ होतारौ, दिवा नक्तं न दिवसे रात्रौ च भेषजैरौषधैर्जागृवी जागरूकावनिष्टपरिहारेण निरन्तरं सावधानावित्यर्थः । येयं सरस्वती सा भिषक्समाना सती सीसेन सीसकाख्येन धातुद्रव्येण शूषं बलमिन्द्रियं चक्षुरादिपाटवं च दुहे दोग्धि संपादयतीत्यर्थः ।

अथ नवममन्त्रमाह—

होता यक्षत्तिस्रो देवीर्न भेषजम् । त्रयस्त्रिधातवोऽपसः । रूपमिन्द्रे हिरण्ययम् । (६) । अश्विनेडा न भारती । वाचा सरस्वती । मह इन्द्राय दधुरिन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज, इति ।

इडा सरस्वती भारतीत्येतास्तिस्रो देव्यो नवमयाजदेवतास्तास्तिस्रो देवीर्होता यजतु । ताश्च देव्य ई(इ)ज्यमानास्त्रयो लोकत्रयात्मिकास्त्रिधातवस्त्रीणि शरीराणि धारयित्र्यस्तत्तल्लोकप्राप्तिरूपत्रिविधफलधारिण्यः सत्योऽपसोऽस्मा-

त्कर्मण इन्द्रे हिरण्मयं हिरण्मयं रूपं दधुः । किमिव भेषजं न, औषधमिव । यथा सर्वोपद्रवशमनहेतुरौषधमेवमिन्द्रे संपाद्यमानमिदं रूपमित्यर्थः । यावेता वश्विनौ न याश्चैता इडाद्यास्तिस्रो देव्यस्ते सर्वे मिलित्वेन्द्रार्थं पश इन्द्रियमत्यधिकं बलं दधुः संपादितवन्तः ।

[अथ] दशमपन्त्रमाह—

होता यक्षत्त्वष्टारमिन्द्रमश्विना । भिषजं न सरस्वतीम् । ओजो न जूतिरिन्द्रियम् । वृको न रभसो भिषक् । यशः सुरया भेषजम् (७) । श्रिया न मासरम् ।। पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज, इति ।

दशमप्रयाजदेवस्त्वष्टा । तमिन्द्रमश्विनौ सरस्वतीं च होता यजतु । देवतानामेव दृष्टान्तः । भिषजं न, यथा भेषजमनिष्टनिवारकं तद्वदेते देवा इत्यर्थः । एतद्देवप्रसादादोजआदि त्रयं संपद्यते । ओजः कर्मानुष्ठान उत्साहः, जूतिर्जवो वेगस्तत्राऽऽलस्यराहित्यम्, इन्द्रियं करणपाटवम्, त्रितयसमुच्चयार्थो नकारः । योऽयमस्मिन्कर्मणि वृकोऽस्ति तल्लोभ्नामत्र संपादितत्वाल्लोमोपलक्षको वृकशब्दः । स च वृको रभसो भिषङ्न तीव्रश्चिकित्सक इव हितकारीत्यर्थः । यत्तु मासरं यवसक्तुरूपं द्रव्यं तच्छ्रिया न संपदा समभित्यर्थः ।

ए(अथै)का(द)शमन्त्रमाह—

होता यक्षद्वनस्पतिम् । शमितारꣳ शतक्रतुम् । भीमं न मन्युꣳ राजानं व्याघ्रं नमसाऽश्विना भामम् । सरस्वती भिषक् । इन्द्राय दुह इन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज (८), इति ।

एकादशप्रयाजदेवो वनस्पतिस्तं होता यजतु । कीदृशम्, शमितारं सर्वोपद्रवशमनहेतुम्, शतक्रतुं शतसंख्याकक्रतुनिष्पादकम्, भीमं भयंकरम्, मन्युं क्रोधवन्तम्, राजानं मृगराजं सिंहं, भामं क्रोधवन्तम्, व्याघ्रं न व्याघ्रमपि यजत्वित्यन्वयः । सिंहलोम्नां व्याघ्रलोम्नां चात्र हविषि प्रक्षिप्तत्वात्तद्योगोपन्यासः । यावेतावश्विनौ ताभ्यां सहिता सरस्वतीन्द्रार्थमिन्द्रियं दुहे दुग्धे ।

[ अथ ] द्वादशमन्त्रमाह—

होता यक्षदग्निꣳ स्वाहाऽऽज्यस्य स्तोकानाम् । स्वाहा मेदसां पृथक् । स्वाहा छागमश्विभ्याम् । स्वाहा मेषꣳ सरस्वत्यै । स्वाहर्षभमिन्द्राय सिꣳहाय सहस इन्द्रियम् । स्वाहाऽग्निं न भेषजम् । स्वाहा सोममिन्द्रियम् । स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणं भिषजां पतिम् । स्वाहा वनस्पतिं प्रियं पाथो न भेषजम् । स्वाहा देवाँ आज्यपान् (९) । स्वाहाऽग्निꣳ होत्राज्जुषाणो अग्निर्भेषजम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज, इति ।

स्वाहाशब्देन द्वादशप्रयाजाभिमानी देवोऽभिधीयते । यद्यप्येकादशैव प्रयाजा अनुष्ठेयास्तथाऽपि द्वितीयप्रयाजे तनूनपान्नराशंसमन्त्रयोरधिकारिभेदेन विकल्पितत्वाद्द्वादश मन्त्रा अत्राऽऽम्नाताः । अतोऽयं द्वादशमन्त्रप्रतिपाद्यो देवस्तं स्वाहाशब्देन विवक्षितमग्निं देवं होता यजतु । आज्यस्य स्तोकानां स्तोकाभिबिन्दून्स्वाहा सुष्ठु जुहुयात्, मेदसां मेदांसि पृथग्विभज्य स्वाहा सुष्ठु जुहुयात्, छागमश्विभ्यां स्वाहा सुष्ठु जुहुयात्, मेषं सरस्वत्यै जुहुयात्, ऋषभमिन्द्राय जुहुयात्, सिंहाय लोमहेतवे सहसा बलेन सहेन्द्रियं स्वाहा जुहुयात्, उद्दिश्य त्यजेदित्यर्थः । भेषजं नौपाधि(धी?)मिव

वर्तमानमग्निं प्रथमाज्यभागदेवं स्वाहा होमेन तर्पयेत्। इन्द्रियमिन्द्रियाभिवृद्धिहेतुं सोमं द्वितीयाज्यभागदेवं होमेन तर्पयेत्। य एतेऽत्र पुरोडाशा विहिताः "ऐन्द्रमेकादशकपालं निर्वपेत्सावित्रं द्वादशकपालं वारुणं दशकपालम्" इति। तानेतानिन्द्रसवितृवरुणान्होमेन तर्पयेत्। तत्रेन्द्रः सुष्ठु रक्षकत्वात्सू(त्सु)त्रामेति विशेष्यते। वरुणोऽनिष्टनिवारकत्वाद्भिषजां पतिरित्युच्यते। वनस्पतिं यूपदेवं होमेन तर्पयेत्। स विशेष्यते प्रियं पाथो न भेषजमिति। यथा प्रियमुदकं तृषाया औषधमेवमयं वनस्पतिरप्यनिष्टनिवारकत्वेनौषधरूपः। ये चाऽऽज्यपाः प्रयाजदेवता(स्ता)स्ता हो(न्हो)मेन तर्पयेत्। योऽयं स्विष्टकृद्देवोऽग्निस्तं होमेन तर्पयेत्। होत्राद्धोमाज्जुषाणः प्रीतः स्विष्टकृदग्निर्भेषजं क्रतुवैकल्यनिवारणेनौषधस्वरूपः।

अथ प्रधानदेवार्थः प्रैषस्तमेतं त्रयोदशमन्त्रमाह—

होता यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणम्।
इमे सोमाः सुरामाणः। छागैर्न मेषैर्ऋषभैः सुताः।
शष्पैर्न तोक्मभिः। लाजैर्महस्वन्तः। मदा मासरेण
परिष्कृताः। शुक्राः पयस्वन्तोऽमृताः। प्रस्थिता
वो मधुश्चुतः[1]। तानश्विना सरस्वतीन्द्रः सुत्रामा
वृत्रहा जुषन्ताꣳ सोम्यं मधु। पिबन्तु मदन्तु
वियन्तु सोमम्। होतर्यज (१०), इति।

वीर्यं वियन्त्वाज्यस्य होतर्यज नासत्या सरस्वती मधु हिरण्ययं भेषजं
वियन्त्वाज्यस्य होतर्यजाऽऽज्यपानमृताः पञ्च च॥

समिधाऽग्निꣳ षट्। तनूनपात्सप्त। नराशꣳसमृषिः। इडोडितो यवैरष्टौ। बर्हिः सप्त
दुरो नव। सुपेशसोषे नक्तमृषिः। दैव्या होतारा रसः। तिस्रस्त्वष्टारमष्टावष्टौ।

---

१ ग. °धुश्च्युतः।

वनस्पतिमृषिः । अग्निं त्रयोदश । अश्विना द्वादश त्रयोदश । समिधाऽग्निं बर्हिरैर्वर्दैरैर्यर्वैरश्विना त्विषिमश्विना न मेषजः रूपमश्विना भीमं मार्मम् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये एकादशोऽनुवाकः ॥ ११ ॥

यौ देवावश्विनौ या च सरस्वती यश्च सुत्रामेन्द्रस्तानेतान्मनुष्यदेवान्दैव्यो होता यजतु पूजयतु । ये चाऽऽश्विनसारस्वतैन्द्रग्रहास्त इमे सोमाः सोमसदृशाः सुरामाणः सुष्ठु रमणीयाः, मेषैः सारस्वतमेषावयवैर्ऋषभैरैन्द्रर्षभावयवैश्छागैर्नाऽऽश्विनच्छागावयवैरपि हविर्विशेषैर्निमित्तभूतैः सुता उत्पादिताः । यानि व्रीह्यङ्कुरजन्याणि शष्पाणि बालतृणानि यानि चाङ्कुरावस्थापन्नानि तोक्मानि ये च बीजावस्था लाजास्तैस्त्रिभिरपि द्रव्यैरेते यागा महस्वन्तस्तेजस्विनो भासन्ते, मदा मदहेतुना मासरेण यवसक्तुद्रव्येण परिष्कृता अलंकृताः शुक्रा निर्मलाः पयस्वन्तः पयसा युक्ता अमृताः स्वादुत्वेनामृतसमाना हेऽश्विसरस्वतीसुत्रामेन्द्ररूपा देवा वो युष्मदर्थं मधुश्चुतो माधुर्यरसस्राविणो ग्रहाः प्रस्थिताः संपादिताः, तान्ग्रहानश्व्यादय एते देवा जुषन्तां सेवन्तां, सत्यं सौम्यं रमणीयं मधु मधुरं रसं पिबन्तु । ततो मदन्तु हृष्यन्तु । ततः सोमं वियन्तु सोमत्वेन स्वी कुर्वन्तु । तदर्थं हे मानुष होतर्यज याज्यां पठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

अथ षष्ठे द्वादशोऽनुवाकः ।

एकादशे प्रयाजप्रैषा उक्ताः । अथ द्वादशे प्रयाजयाज्या आप्रियोऽभिधीयन्ते । तत्र प्रथमामाह—

समिद्धो अग्निरश्विना । तप्तो घर्मो विराट्सुतः ।
दुहे धेनुः सरस्वती । सोमꣳ शुक्रमिहेन्द्रियम् , इति ।

---

१ ग. °धुश्च्युतो ।

हेऽश्विनौ समिद्धः संदीप्तः समिन्नामकः प्रथमप्रयाजदेवोऽग्निस्तप्तो घर्मः संतप्तप्रवर्ग्यसदृशो विराड्विशेषेण राजमानः सुत उत्पन्नः। तथा धेनुः प्रीणयित्री सरस्वती शुक्रं शुद्धमिन्द्रियमिन्द्रियवृद्धिहेतुं सोमं सोमसदृशं हविर्दुहे दोग्धि संपादयति।

[अथ] द्वितीयामाह—

तनूपा भिषजा सुते। । अश्विनोभा सरस्वती। मध्वा रजांसीन्द्रियम्। इन्द्राय पथिभिर्वहान्, इति।

तनूपा द्वितीयप्रयाजदेवो भिषजौ चिकित्सकावश्विनावुभौ सरस्वतीत्येते देवाः सुते प्रवृत्ते कर्मणि मध्वा मधुना रसेन युक्तानि रजांसि रञ्जकानि हवींषि विविधमिन्द्रियं हविर्जन्यं सामर्थ्यं चेन्द्रार्थं पथिभिरनुष्ठानरूपैर्मार्गैर्वहान्वहन्तु संपादयन्तु।

[अथ] तृतीयामाह—

इन्द्रायेन्दुꣳ सरस्वती। नराशꣳसेन नग्नहुः (१)। अधातामश्विना मधु। भेषजं भिषजा सुते, इति।

नराशंसो मन्त्रपाठक्रमेण तृतीयप्रयाजदेवस्तेन सहिता सरस्वतीन्द्रार्थमिन्दुमैश्वर्यकरं हविःसारं नग्नहुरेतच्छब्दवाच्यं स्थूलयवपिष्टसक्तुरूपं संपादयतीति शेषः। अश्विना भिषजा चिकित्सकावश्विनौ सुते प्रवृत्तेऽस्मिन्कर्माणि मधु भेषजं मधुरमौषधरूपं हविरधातां संपादितवन्तौ।

अथ चतुर्थीमाह—

आजुह्वाना सरस्वती। इन्द्रायेन्द्रियाणि वीर्यम्। इडाभिरश्विनाविषम्। समूर्जꣳ सꣳ रयिं दधुः, इति।

चतुर्थप्रयाजदेवता इडास्ताभिः सहिता सरस्वत्याजुह्वाना स्वयं कर्मण्याहूयमानेन्द्रार्थमिन्द्रियाणि वीर्यं च संपादयितुं योग्यं हविर्दधातीति शेषः।

अश्विनौ देवौ ताभिरिडाभिः सहेषमन्नं दधुः संपादितवन्तः । ऊर्जं क्षीरादिरसं संपादितवन्तः । रयिं धनं संपादितवन्तः ।

[अथ] पञ्चमीमाह—

अश्विना नमुचेः सुतम् । सोमꣳ शुक्रं परिस्रुता । सरस्वती तमाभरत् । बर्हिषेन्द्राय पातवे (२), इति ।

बर्हिःशब्दाभिधेयः पञ्चमप्रयाजदेवः । हेऽश्विनौ तेन बर्हिषा युक्ता सरस्वती सुतमभिषुतं शुक्रं निर्मलं सोमं सोमत्वेन भावितं रसं नमुचेः सकाशादाभरदाहरत् किमर्थमिन्द्रार्थं पातवे पातुम् ।

अथ षष्ठीमाह—

कवष्यो न व्यचस्वतीः । अश्विभ्यां न दुरो दिशः । इन्द्रो न रोदसी दुघे । दुहे कामान्त्सरस्वती, इति ।

दुरःशब्दाभिधेया या द्वाराभिमानिन्यः षष्ठप्रयाजदेवताः कवष्यो न कवाटवत्य इव व्यचस्वतीरवकाशवत्योऽश्विभ्यां नाश्विभ्यामपि सह वर्तन्त इति शेषः । इन्द्रो नेन्द्रोऽपि रोदसी दुघे द्यावापृथिव्यौ दोग्धि । सरस्वती कामान्दुहे दोग्धि ।

[अथ] सप्तमीमाह—

उषासा नक्तमश्विना । दिवेन्द्रꣳ सायमिन्द्रियैः । संजानाने सुपेशसा । समञ्जाते सरस्वत्या, इति ।

हेऽश्विनावुषासानक्तशब्दवाच्ये अहोरात्राभिमानिन्यौ सप्तमप्रयाजदेवते इन्द्रं दिवेन्द्रियैः संजानाने संयोजयेते । सायं सुपेशसा शोभनरूपेण संजानाने संयोजयेते । तथा सरस्वत्या समञ्जाते संयोजयेते ।

अथाष्टमीमाह—

पातं नो अश्विना दिवा । पाहि नक्तꣳ सरस्वति (३) । दैव्या होतारा भिषजा । पातमिन्द्रꣳ सचा

सुते, इति ।

हेऽश्विनौ दिवा नोऽस्मान्पातम् । हे सरस्वति नक्तमस्मान्पाहि । हेऽध्वर्यो-र्नृत्वद्वाच्यौ हेऽष्टमप्रयाजदेवौ युवां भिषजौ चिकित्सकौ सचा परस्परं संयुक्तौ सुते मधुत्ते ऽस्मिन्कर्मणीन्द्रं पातम् ।

[अथ] नवमीमाह—

तिस्रस्त्रेधा सरस्वती । अश्विना भारतीडा । तीव्रं
परिस्रुता सोमम् । इन्द्राय सुषवुर्मदम्, इति ।

हेऽश्विनौ सरस्वती भारतीडेत्येतास्तिस्रो नवमप्रयाजदेवतास्त्रेधा लोकत्रय-रूपेण वर्तमानाः परिस्रुता परिस्रवन्त्या सुरया सहितं तीव्रं तीव्रगन्धोपेतं सोमं सोमसदृशं मदं मदकरं हविरिन्द्राय सुषवुरिन्द्रार्थं संपादितवत्यः ।

[अथ] दशमीमाह—

अश्विना भेषजं मधु । भेषजं नः सरस्वती । इन्द्रे
त्वष्टा यशः श्रियम् । रूपꣳ रूपमधुः सुते, इति ।

यावेतावाश्विनौ या च सरस्वती योऽपि त्वष्टा दशमप्रयाजदेवस्ते सर्वे मिलित्वा भेषजं सर्वेषामौषधरूपं मधु मधुरं नो भेषजमस्माकं विशेषत औषधरूपं यशः श्रियं यशःप्रदं श्रीपदं रूपं रूपं बहुरूपकरमिदं हविः सुते मधुत्तेऽस्मिन्कर्मणीन्द्रेऽस्मिन्नधुः स्थापितवन्तः ।

अथैकादशीमाह—

ऋतुथेन्द्रो वनस्पतिः । शशमानः परिस्रुता ।
कीलालमश्विभ्यां मधु । दुहे धेनुः सरस्वती, इति ।

योऽयं वनस्पतिरेकादशप्रयाजरूपो देवः सोऽयमृतुथा तस्मिंस्तस्मिन्नृता-विन्द्र इन्द्रेणाभिन्नः सन्परिस्रुता परितः स्रवन्त्या सुरया सह शशमानः प्रश्वद्वर्तते । अश्विभ्यां युक्ता सरस्वती धेनुः प्रीणयित्री सती कीलालमुद-कसदृशं मधु मधुरं हविर्दुहे दोग्धि ।

[ अथ ] द्वादशीमाह—

गोभिर्न सोममश्विना । मासरेण परिष्कृता । सम-
धाताꣳ सरस्वत्या । स्वाहेन्द्रे सुतं मधु (४), इति ।

नग्नहुः पातवे सरस्वत्यधुः सुतेऽष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठा-
ध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

हेऽश्विनौ गोभिर्न गवादिभिर्ऋषभच्छागमेषैरपि सहितं मासरेण परिष्कृता यवसक्तुद्रव्येणालंकृतं सोमं सोमसदृशं मधु मधुरमिदं हविः सरस्वत्या चरमप्रयाजदेवेन स्वाहाशब्दवाच्येन च सहितौ युवामिन्द्रे समधातां सम्यक्स्थापितवन्तौ । तदेवं विकल्पितेन द्वितीयप्रयाजेन सहितानां प्रयाजानां याज्यारूपा द्वादश मन्त्रा अभिहिताः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ षष्ठे त्रयोदशोऽनुवाकः ।

---

द्वादशे प्रयाजयाज्या आप्रियोऽभिहिताः । त्रयोदशे वपादीनां याज्यानुवाक्या उच्यन्ते । त्रिपशुके वपापुरोडाशहविर्यागानां(णां) पुरोनुवाक्यास्ता एव याज्याः । तत्र तिसृणां वपानां तिस्र ऋचस्तासां चैकैका कस्यांचिद्वपायां पुरोनुवाक्या कस्यांचिद्याज्येत्येवं द्विरूपा । तत्र प्रथमायां पुरोनुवाक्यां तृतीयायां याज्यामृचमाह—

अश्विना हविरिन्द्रियम् । नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु । मघमिन्द्राय जभ्रिरे, इति ।

यावेतावश्विनौ या च सरस्वती ते त्रयो मिलित्वा धिया स्वबुद्ध्येन्द्रार्थं

नमुचिनाम्नोऽसुराद्धविराजह्रिर आहृतवन्तः। कीदृशं हविः, इन्द्रियमिन्द्रियवर्धकं शुक्रं निर्मलं वसु निवासकारणं मघं महनीयम्।

अथ प्रथमायां याज्यां द्वितीयस्यां पुरोनुवाक्यामृचमाह—

यमश्विना सरस्वती। हविषेन्द्रमवर्धयन्। स बिभेद

वलं मघम्। नमुचावासुरे सचा, इति।

अश्विनावुभौ सरस्वती चेत्येते त्रयो हविषा यमिन्द्रमवर्धयन्सोऽयमिन्द्रो नमुचिनामासुरे सचा संबद्धं मघं महनीयं वलं बलनामानमसुरं बिभेद विदारितवान्।

अथ द्वितीयस्यां याज्यां तृतीयस्यां पुरोनुवाक्यामाह—

तमिन्द्रं पशवः सचा। अश्विनोभा सरस्वती (१)।

दधाना अभ्यनूषत। हविषा यज्ञमिन्द्रियम्; इति।

छागमेषऋषभा य एते पशवो यावुभावश्विनौ या च सरस्वती ते सर्वे सचा परस्परं संबद्धा इन्द्रियमिन्द्रियवृद्धिहेतुं यज्ञं हविषा दधानास्तमिन्द्रमभ्यनूषत।

अथ त्रिषु पुरोडाशेषु पूर्ववत्तिस्र ऋच आम्नाताः। तत्र प्रथमस्य पुरोडाशस्य पुरोनुवाक्या तृतीयस्य याज्यामृचमाह—

य इन्द्र इन्द्रियं दधुः। सविता वरुणो भगः। स

सुत्रामा हविष्पतिः। यजमानाय सश्चत, इति।

इन्द्रसवितृवरुणाः पुरोडाशदेवता भगोऽपि तत्सहचारी कश्चित्। ये यस्मिन्निन्द्रे सवितृवरुणभगा इन्द्रियं दधुः संपादितवन्तः सोऽयमिन्द्रः सुत्रामा सुष्ठु रक्षको हविष्पतिर्हविषां पालको यजमानार्थं सश्चत संबद्धोऽभूत्।

अथ प्रथमस्य याज्यां द्वितीयस्य पुरोनुवाक्यामृचमाह—

सविता वरुणो दधत्। यजमानाय

---

१ ग. वलं। २ क. °नाम्न्यासु°। ३ ग. वलं।

दाशुषे । आदत्त नमुचेर्वसु । सुत्रामा बलमिन्द्रियम् (२), इति ।।

यः सविता सोऽयं दाशुषे हविर्दत्तवते यजमानाय दधदपेक्षितं संपादयतु । तथा च वरुणोऽपि संपादयतु । सुत्रामेन्द्रो बलमिन्द्रियं बलेन्द्रिययोः कारणं वसु हविःस्वरूपं धनं नमुचेः सकाशादादत्त ।

अथ द्वितीयस्य याज्यां तृतीयस्य पुरोनुवाक्यामृचमाह—

वरुणः क्षत्रमिन्द्रियम् । भगेन सविता श्रियम् । सुत्रामा यशसा बलम् । दधाना यज्ञमाशत, इति ।

योऽयं वरुणः सोऽयं क्षत्रं बलमिन्द्रियं च दधाति । भगेन सह सविता श्रियं दधाति । सूत्रामेन्द्रो यशसा सह बलं दधाति । त एते त्रयो देवास्त्रिविधं दधाना यजमानस्य यज्ञमाश(स)त प्राप्नुवन्तः ।

अथ हविषस्त्रिस्र आम्नाताः । तत्र प्रथमस्य पुरोनुवाक्यां तृतीयस्य याज्यामाह—

अश्विना गोभिरिन्द्रियम् । अश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती । यजमानमवर्धयन्, इति ।

अश्विनौ सरस्वती चेत्येते त्रयो देवा गोभिरिन्द्रियं संपाद्याश्वैर्वीर्यं बलं च संपाद्यानेनैन हविषेन्द्रं यजमानं चावर्धयन् । हविर्भोक्तृत्वमिन्द्रस्य वृद्धिः । हविर्दातृत्वं यजमानस्य वृद्धिः ।

अथ प्रथमस्य याज्यां द्वितीयस्य पुरोनुवाक्यामृचमाह—

ता नासत्या सुपेशसा । हिरण्यवर्तनी नरा । सरस्वती हविष्मती । इन्द्र कर्मसु नोऽवत, इति ।

ता नासत्या तावश्विनौ सुपेशसा सुरूपौ हिरण्यवर्तनी आभरणैः सह वर्तमानौ नरा जगद्व्यवहारस्य नेतारौ सरस्वती चात्र हविष्मती हविर्युक्ता । हे इन्द्र त्वं च सरस्वती चाश्विनौ चेत्येते यूयमनुष्ठीयमानेष्वेतेषु कर्मसु नोऽस्मानवत रक्षत ।

अथ द्वितीयस्य याज्यां तृतीयस्य पुरोनुवाक्यामृचमाह—

ता भिषजा सुकर्मणा । सा सुदुघा सरस्वती । सं

वृत्रहा शतक्रतुः । इन्द्राय दधुरिन्द्रियम् (३), इति ।

उभा सरस्वती बलमिन्द्रियं नरा षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये त्रयोदशोऽनुवाकः ॥ १३ ॥

---

ता भिषजा तौ चिकित्सकावश्विनौ सुकर्मणा शोभनकर्मयुक्तौ सा सरस्वती सुदुघा सुष्ठु दोहनयुक्ता स च वृत्रहेन्द्रः शतक्रतुः शतसंख्याकक्रतुयुक्तस्ते सर्वेऽपीन्द्रार्थमिन्द्रियं संपादितवन्तः । इन्द्रोऽपि स्वार्थं प्रवर्तत इति भावः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

===

अथ षष्ठे चतुर्दशोऽनुवाकः ।

---

त्रयोदशे वपापुरोडाशहविषां याज्यानुवाक्या उक्ताः । अथ चतुर्दशेऽनुयाजानां मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथममन्त्रमाह—

देवं बर्हिः सरस्वती । सुदेवमिन्द्रे अश्विना । तेजो

न चक्षुरक्ष्योः । बर्हिषा दधुरिन्द्रियम् । वसुवने

वसुधेयस्य वियन्तु यज, इति ।

बर्हिःशब्दवाच्यं प्रथमानुयाजदेवतास्वरूपं, तच्च देवं द्योतमानं सुदेवं शोभना देवा यस्य सर्वदेवप्रियमित्यर्थः । तादृशं यद्बर्हिर्या च सरस्वती यौ चाश्विनौ देवौ ते सर्वेऽप्यक्ष्योरक्षिगोलकयोस्तेजश्चक्षुर्न तेजोरूपं चक्षुरिन्द्रियं यथा स्थापयन्ति तथा बर्हिषा बर्हिर्देवतामुखेनेन्द्र इन्द्रियं दधुः स्थापितवन्तः । वसुधेयस्य द्रव्याधारकस्य देवस्य वसुवने धनदाननिमित्तं बर्हिरादयो देवा वियन्त्वाज्यं पिबन्तु । तदर्थं हे होतर्यज याज्यां पठ ।

अथ द्वितीयमन्त्रमाह—

देवीर्द्वारो अश्विना । भिषजेन्द्रे सरस्वती । प्राणं न वीर्यं नसि । द्वारो दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज (१), इति ।

द्वारशब्दवाच्या द्वितीयानुयाजदेवतास्ता देवीर्द्योतमाना अश्विनौ भिषजौ चिकित्सकौ सरस्वती चेत्येते देवा नासि नासिकायां वीर्यं वीर्यहेतुं प्राणं न प्राणमिव यथा प्राणवायुं नासिकायां स्थापयन्ति तथा द्वारो द्वार्देवता इतरैः सहिता इन्द्र इन्द्रियं दधुः ।

[अथ] तृतीयमन्त्रमाह—

देवी उषासावश्विना । भिषजेन्द्रे सरस्वती । बलं न वाचमास्ये । उषाभ्यां दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज, इति ।

उषःशब्दवाच्ये तृतीयानुयाजदेवते देवी द्योतनात्मिके उभे भिषजावश्विनौ सरस्वती चाऽऽस्ये मुखे वाचं वागिन्द्रियं बलं न बलमिव यथा मुखे वागिन्द्रियसामर्थ्यं स्थापितवन्तस्तथैव सर्वे देवा उषाभ्यामुषादेवतामुखेनेन्द्र इन्द्रियं दधुः ।

[अथ] चतुर्थमन्त्रमाह—

देवी जोष्ट्री अश्विना । सुत्रामेन्द्रे सरस्वती । श्रोत्रं न कर्णयोर्यशः । जोष्ट्रीभ्यां दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज (२), इति ।

जोष्ट्रीशब्दवाच्ये चतुर्थानुयाजदेवते । ते च देवी देव्यौ द्योतमानात्मिके उभे अश्विनौ द्वौ सुत्रामाख्य इन्द्रः सरस्वती चेत्येता देवताः कर्णयोः कर्णगोलकयोर्यशो यशःकारणं श्रोत्रं न श्रोत्रेन्द्रियमिव यथा श्रोत्रेन्द्रियं कर्णगोलकयोः स्थापयन्ति तथा जोष्ट्रीभ्यां जोष्ट्रीदेवतामुखेन सदिन्द्र इन्द्रियं दधुः ।

[अथ] पञ्चममन्त्रमाह—

देवी ऊर्जाहुती दुघे सुदुघे। पयसेन्द्रꣳ सरस्वत्यश्विना भिषजाऽवत। शुक्रं न ज्योतिः स्तनयोराहुती धत्त इन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज, इति।

ऊर्जाहुतिशब्दवाच्ये पञ्चमानुयाजदेवते देवी द्योतनात्मिके दुघे अभीष्टफलस्य दोग्ध्र्यौ सुदुघे सुष्ठु दोग्धुं शक्ये तथाविधे उभे देव्यौ सरस्वती भिषजावश्विनौ चेत्येते यूयं पयसा हविषेन्द्रमवत रक्षत। आहुतिदेव्यौ स्तनयोरुभयोः शुक्रं शुद्धं ज्योतिर्न ज्योतिरिव यथा स्त्रीस्तनयोर्ज्योतीरूपं क्षीरं स्थापयन्ति तद्वदिन्द्रियं धत्तः।

[अथ] षष्ठमन्त्रमाह—

देवा देवानां भिषजा। होताराविन्द्रमश्विना। वषट्कारैः सरस्वती। त्विषिं न हृदये मतिम्। होतृभ्यां दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज (३), इति।

होतृशब्दवाच्यौ षष्ठानुयाजदेवौ देवा द्योतनात्मकौ यौ विद्येते यौ च देवानां भिषजावश्विनौ या च सरस्वती वषट्कारदेवैः सहिता ते सर्वेऽपि यूयमिन्द्रमवतेति शेषः। पुनरपि ते सर्वे हृदये हृदयकमले मतिं बुद्धिरूपां त्विषिं न दीप्तिमिव यथा बुद्धिरूपां दीप्तिं हृदये स्थापयन्ति तथा होतृभ्यां होतृदेवमुखेनेन्द्र इन्द्रियं दधुः।

अथ सप्तममन्त्रमाह—

देवीस्तिस्रस्तिस्रो देवीः। सरस्वत्यश्विना भारतीडा शूषं न मध्ये नाभ्याम्। इन्द्राय दधुरिन्द्रियम्। वसु

वने वसुधेयस्य वियन्तु यज, इति ।

सरस्वती भारतीडेत्येतास्तिस्रः सप्तमानुयाजदेवताः । [ताश्च] परस्परं कदाचिदप्यवियुक्ता इति वक्तुं पुनस्तिस्रो देवीरित्युक्तम् । अथवैकैकस्या देवताया मूर्तित्रयविवक्षया तदुक्तिः । ता एता देवताः सरस्वत्यश्विनौ चेत्येते सर्वे शरीरस्य मध्ये नाभ्यां शूषं न बलमिव यथा बलं स्थापयन्ति तथेन्द्रार्थमिन्द्रियं दधुः ।

अथाष्टममन्त्रमाह—

देव इन्द्रो नराशꣳसः । त्रिवरूथः सरस्वत्याऽश्वि-
भ्यामीयते रथः । रेतो न रूपममृतं जनित्रम् ।
इन्द्राय त्वष्टा दधदिन्द्रियाणि । वसुवने वसुधेयस्य
वियन्तु यज (४), इति ।

नराशंसाख्योऽष्टमानुयाजदेवः । स च देवो द्योतनात्मक इन्द्रः परमैश्वर्ययुक्तस्त्रिवरूथः सेनात्रययुक्तो रथो रथयुक्तः । स च सरस्वत्याऽश्विभ्यां च सहेयते व्याप्रियते, रूपं रूपसंपादकममृतं सुखकारणं जनित्रं प्रजोत्पादकं रेतो न रेत इव यथा रेतः स्वस्थाने प्रापयन्ति तथेन्द्रायेन्द्रार्थमयं त्वष्टा नराशंसाख्यो देव इन्द्रियाणि दधत्संपादयतु ।

[अथ] नवममन्त्रमाह—

देव इन्द्रो वनस्पतिः । हिरण्यपर्णो अश्विभ्याम् ।
सरस्वत्याः सुपिप्पलः । इन्द्राय पच्यते मधु ।
ओजो न जूतिर्ऋषभो न भामम् । वनस्पतिर्नो
दधदिन्द्रियाणि । वसुवने वसुधेयस्य वियन्तु यज,
इति ।

नवमानुयाजदेवो वनस्पतिशब्दवाच्यः । स च देवो द्योतनात्मक इन्द्र इन्द्रेण सहितो हिरण्यपर्णः सुवर्णपत्रोऽश्विभ्यां देवाभ्यां च युक्तः सरस्व-

स्याश्च संबन्धी सुपिप्पलः शोभनफलोपेत इन्द्रार्थमश्विभ्यां मधु मधुरं हविः पच्यते । ओजो न जूतिं यथा शरीरमध्ये बलशक्तिवेगमुत्पादयति, ऋषभो न भामं यथा लोके कश्चिदृषभो दृप्तः क्रोधमुत्पादयति तद्वदयं वनस्पतिर्नोऽस्मदर्थमिन्द्रियाणि दधत्संपादयतु ।

[अथ] दशममन्त्रमाह—

देवं बर्हिर्वारितीनाम् । अध्वरे स्तीर्णमश्विभ्याम् ।
ऊर्णम्रदाः सरस्वत्याः (५) । स्योनमिन्द्र ते
सदः । ईशायै मन्युꣳ राजानं बर्हिषा दधुरिन्द्रि-
यम् । वसुवने वसुधेयस्य वियन्तु यज, इति ।

दशमानुयाजदेवस्वरूपं बर्हिर्नामकं, तच्च देवं द्योतनात्मकं वारितीनां जलवासीनां संबन्धि । यत्र भूमिर्जलेन सिच्यते तत्र बर्हिर्जायते । तच्चाश्विभ्यामध्वरे यागे स्तीर्णं प्रसारितमूर्णम्रदाः कम्बलवन्मृदु सरस्वत्याः संबन्धि । हे इन्द्र तादृशं बर्हिस्ते तव स्योनं सुखकरं सद उपनिवेशनस्थानमीशायै जगदीश्वररूपेन्द्रदेवतायै मन्युं वैरिविषयं क्रोधं राजानं शरीरदीप्तिमिन्द्रियं चक्षुरादिपाटवं च बर्हिषा बर्हिर्देवतामुखेन दधुः सरस्वत्यादयः संपादितवत्यः ।

ए[अथै]कादशमन्त्रमाह—

देवो अग्निः स्विष्टकृत् । देवान्यक्षद्यथायथम् ।
होताराविन्द्रमश्विना । वाचा वाचꣳ सरस्वतीम् ।
अग्निꣳ सोमꣳ स्विष्टकृत् । स्विष्ट इन्द्रः सुत्रामा
सविता वरुणो भिषक् । इष्टो देवो वनस्पतिः ।
स्विष्टा देवा आज्यपाः । इष्टो अग्निरग्निना ।
होता होत्रे स्विष्टकृत् । यशो न दधदिन्द्रियम् ।
ऊर्जमपचितिꣳ स्वधाम् । वसुवने वसुधेयस्य

वियन्तु यर्ज( ६ ), इति ।

द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य वियन्तु यज जोष्ट्रीभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य वियन्तु यज होतृभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य वियन्तु यजेन्द्रियाणि वसुवने वसुधेयस्य वियन्तु यज सरस्वत्या वनस्पतिः षट् च ।

देवं बर्हिर्देवीर्द्वारो देवी उषासावश्विना देवी जोष्ट्री देवी ऊर्जाहुती देवा देवानां भिषजा देवीस्तिस्रस्तिस्रो देवीः सरस्वती देव इन्द्रो नराशꣳसो देव इन्द्रो वनस्पतिर्देवं बर्हिर्वारितीनां देवो अग्निः स्विष्टकृद्देवान् ।

समिधाऽग्निम् । सौत्रामण्याꣳ सुतासुती । अञ्जन्त्ययं यजमानः । देवं बर्हिः सरस्वती सर्वं वियन्तु । द्वारस्तिस्रः सर्वं वियन्तु । अज इन्द्रमोजोऽग्निं परः सरस्वतीम् । अन्यत्र सरस्वती । भिषक्पूर्वं दुहं इन्द्रियम् । अन्यत्र दधुरिन्द्रियम् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये चतुर्दशोऽनुवाकः ॥ १४ ॥

---

एकादशोऽ(शा)नुयाजदेवः स्विष्टकृच्छन्दबाच्योऽग्निः । सोऽयं[1] द्योतनात्मकोऽन्यान्देवान्यथायथं यक्ष्यद्यस्य योग्यं तं तेन पूजितवान् । कं कं पूजितवानिति तदुच्यते । होतारौ दैव्यमानुषरूपौ देवौ स्वयं देहं धृत्वा वाचा मन्त्रेणेन्द्रं देवम्, अश्विनौ द्वौ देवौ वाचं सरस्वतीं वाग्रूपां सरस्वत्याख्यां देवतां पूजितवान् । तथा स्विष्टकृदयमग्निं सोमं चोभावाज्यभागदेवौ पूजितवान् । सुत्रामेन्द्रः स्विष्टः सुष्ठु पूजितः । सविता च स्विष्टः । भिषग्रूपो वरुणोऽपि स्विष्टः । तथा यूपदेवो वनस्पतिरिष्टः । आज्यपाः प्रयाजानुयाजदेवाः स्विष्टाः । दैव्यो होता योऽयमग्निः सोऽयमनेनाग्निनेष्टः । स्विष्टकृदाख्योऽयमग्निर्होत्रे होमकर्त्रे यजमानाय यशो न यश इवेन्द्रियं दधत्संपादयति । तथोर्जं क्षीरादिरसं संपादयति । तथाऽपचितिं पूजां संपादयति । तथा स्वधामन्नं च संपादयति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

[1] क. 'यं देवो यो' ।

अथ षष्ठे पञ्चदशोऽनुवाकः ।

चतुर्दशे प्रधानपशुत्रयार्था अनूयाजप्रैषा उक्ताः । अथ पञ्चदशे सूक्तवाकप्रैषोऽभिधीयते—

अग्निमद्य होतारमवृणीत । अयꣳ सुतासुती यजमानः । पचन्पक्तीः । पचन्पुरोडाशान् । गृह्णन्ग्रहान् । बध्नन्नश्विभ्यां छागꣳ सरस्वत्या इन्द्राय । बध्नन्त्सरस्वत्यै मेषमिन्द्रायाश्विभ्याम् । बध्नन्निन्द्रायर्षभमश्विभ्याꣳ सरस्वत्यै । सूपस्था अद्य देवो वनस्पतिरभवत् । अश्विभ्यां छागेन सरस्वत्या इन्द्राय (१) । सरस्वत्यै मेषेणेन्द्रायाश्विभ्याम् । इन्द्रायर्षभेणाश्विभ्याꣳ सरस्वत्यै । अक्षꣳस्तान्मेदस्तः प्रति पचताऽग्रभीषुः । अवीवृधन्त ग्रहैः । अपातामश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा । सोमान्त्सुरामणः । उपो उक्थामदाः श्रौद्मिदा अदन् । अवीवृधन्ताऽऽङ्गूषैः । त्वामद्य आर्षेयर्षीणां नपादवृणीत । अयꣳ सुतासुती यजमानः । बहुभ्य आसंगतेभ्यः । एष मे देवेषु वसुवार्या यक्ष्यत इति । ता या देवा देवदानान्यदुः । तान्यस्मा आ च शास्स्व । आ च गुरस्व । इषितश्च होतरसि

भ॒द्र॒वा॒च्या॑य॒ प्रेषि॑तो॒ मानु॑षः । सू॒क्त॒वा॒काय॑ सू॒क्ता ब्रू॑हि ( २ ), इति ।

इन्द्रा॑य॒ यज॑मानः स॒प्त च॑ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथास्मिन्कर्मण्ययं यजमानोऽग्निरूपं देवं होतारं होमनिष्पादकं पुरुषमवृणीत वृतवान् । कीदृशो यजमानः, सुत्वासुती, सुतमभिषुतं सोमसुरादि, असुतमभिषवरहितं पयःप्रभृति तदुभयमस्यास्तीति सुतासुती । किं कुर्वन्पक्तीः पक्तव्यानि द्रव्याणि पचन्पक्तानि कुर्वंस्तथा पुरोडाशानैन्द्रसावित्रादीन्पचन्पक्वान्कुर्वन्ग्रहानाश्विनादीन्गृह्णन्पात्रेषु स्वीकुर्वन्योऽयं छागस्तं सरस्वतीन्द्रयुक्ताभ्यामाश्विभ्यां सर्वदेवार्थे यूपे बध्नंस्तथा यो मेषस्तमिन्द्राश्वियुक्तायै मुख्यायै सरस्वत्यै बध्नंस्तथा यो वृषभस्तमश्विसरस्वतीयुक्ताय मुख्यायेन्द्राय बध्नन्नथास्मिन्दिने वनस्पतिर्देवो यूपात्मकः सूपस्था अमवः रज्जु स्थिरावस्थानयुक्तोऽभवत् । सरस्वतीन्द्रयुक्ताभ्यां मुख्याभ्यामश्विभ्यां छागेन पशुना यजमानः परिचरति । इन्द्राश्वियुक्तायै मुख्यायै सरस्वत्यै मेषेण पशुना परिचरति । अश्विसरस्वतीयुक्तायेन्द्राय वृषभेण पशुना परिचरति । तान्पशूनिन्द्रादयो देवा अक्षन्नशितवन्तः । मेदस्तो मेदांसि पचता पक्वानि हवींषि मत्यग्रभीषुः प्रतिगृहीतवन्तः । अग्रैरनुष्ठितैरवीवृधन्त वर्धितवन्तः । अश्विनौ देवौ सोमान्सुराम्णः सुरासदृशानि सोमद्रव्याण्यपातां पीतवन्तौ । सरस्वती च पीतवती । सुत्रामा वृत्रहेन्द्रश्च पीतवान् । उपो समीप उक्थामदाः शस्त्रवद्धर्षहेतुमन्त्राञ्श्रौदश्रौषुः । विमदा विशेषेण हर्षयुक्ता अदन्भक्षितवन्तः । आङ्गूषैरङ्गविशेषैरवीवृधन्त सम्यग्वर्धितवन्तः । अथास्मिन्कर्मणि हे ऋषेऽतीन्द्रियार्थदर्शिन्हे होतस्त्वामयं यजमानोऽवृणीत वृतवान् । आर्षेय हे ऋषिकुलोत्पन्न ऋषीणां नपाद्धे ऋषिनप्तर्गोत्रप्रवर्तकमृषिं प्राप्ति चतुर्थं इत्यर्थः । एतदुभयमप्यृषिविशेषणम् । कीदृशो यजमानः सुतासुत्यभिषुतानभिषुतद्रव्यद्वयवान् । किमर्थं वृतवानिति तदुच्यते— आसंगतेभ्यो बहुभ्य आगत्यास्मिन्कर्मणि संबद्धानां बहूनां देवानामर्थे ।

---

१ क. ख. अथास्मि॰ ।

केनाभिप्रायेण वृतवानिति सोऽभिप्राय उच्यते- एष होता मे वसुवारि पुरोडाशरूपं वसु पयःसुरारूपं वारि च देवेष्वायक्ष्यते सम्यक्प्रयागं करिष्यतीति । ता या देवा देवदानानि यानि तानि देवेभ्यो दत्तानि हवींषि देवा अदुर्ऋत्विजो दत्तवन्तस्तानि सर्वाणि हविष्फलान्यस्मै यजमानायाऽऽ-शास्स्व च सिध्यन्त्वित्येवमाशिषं च कुरु । आगुरस्व च तत्सिद्धयर्थमुद्यमं च कुरु । हे होतरिषितो मयाऽभिलषितः प्रेषितश्चासि । अद्भवाच्याय कल्याणवचनाय प्रेषितो मानुषो होता त्वं सूक्तस्य वचनं वाक्रो यस्य देवस्य सोऽयं देवः सूक्तवाकस्तस्मै सूक्तवाकदेवाय सूक्ता ब्रूहि "इदं द्यावापृथिवी" इत्येतान्यनुवाकोक्तानि शोभनानि वचनानि कथय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

अथ षष्ठे षोडशोऽनुवाकः ।

पञ्चदशे सूक्तवाकप्रैषोऽभिहितः । षोडशे पितृयज्ञविषया मन्त्रा उच्यन्ते । पितृयज्ञश्च सूत्रकारेण निर्दिष्टः—"पूर्ववत्पितृयज्ञः" इति । स च राजसूयप्रकरणे चातुर्मास्येषु "सोमाय पितृमते" इत्यनुवाके व्याख्यातः । तदर्थानां मन्त्राणां दशानां प्रतीकानि दर्शयति—

उशन्तस्त्वा हवामह आ नो अग्ने सुकेतुना । त्वꣳ सोम महे भगं त्वꣳ सोम प्रचिकितो मनीषा । त्वया हि नः पितरः सोम पूर्वे त्वꣳ सोम पितृभिः संविदानः । बर्हिषदः पितर आऽहं पितॄन् । उपहूताः पितरोऽग्निष्वात्ताः पितरः, इति ।

एतास्वृक्षु "उशन्तस्त्वा हवामहे" एषा सामिधेनी, सेयं संहितायां द्वितीयकाण्डे व्याख्याता । "आ नो अग्ने" "त्वं सोम महे," इत्युभे आज्यभागयोः पुरोनुवाक्ये, ते च "वृषा सोमो अंशुः पवते" इत्यनुवाके व्याख्याते । "सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति" इत्यस्मिन्कर्मणि "त्वं सोम प्रचिकितः" "त्वया हि नः पितरः" इत्येते पुरोनुवाक्ये । तत्रैव 'त्वं सोम

पितृभिः" इति याज्या । "पितृभ्यो बर्हिषद्भ्यो धानाः" इत्यस्मिन्कर्मणि "बर्हिषदः पितर ऊत्यर्वाक्" "आऽहं पितॄन्सुविदत्रान्" इत्येते पुरोनुवाक्ये । "उपहूताः पितरः" इत्येषा याज्या । "पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्" इत्यत्र "अग्निष्वात्ताः पितरः सोम्यासः" इत्येषा पुरोनुवाक्या । या एतास्त्वं सोम प्रचिकित इत्याद्याः सप्त संहितायाम् "उशन्तस्त्वा" इत्यनुवाके व्याख्याताः ।

अथ द्वितीयां पुरोनुवाक्यामाह—

अग्निष्वात्तानृतुमतो हवामहे । नराशꣳसे सोमपीथं य आशुः । ते नो अर्वन्तः सुहवा भवन्तु । शं नो भवन्तु द्विपदे शं चतुष्पदे, इति ।

अग्निष्वात्ता अग्निष्वात्तनामकाः पितरः पितृविशेषाः । ते च चातुर्मास्यगतपितृयज्ञब्राह्मणे स्पष्टमभिहिता.—"ये वा अयज्वानो गृहमेधिनः । ते पितरोऽग्निष्वात्ता." इति । मनुष्यजन्मन्यग्निष्टोमादियागमकृत्वा स्मार्तकर्मनिष्ठाः सन्तो मृत्वा च पितृत्वं गतास्तानग्निष्वात्तानृतुमत ऋतुरूपेण यज्ञकालेन युक्तान्हवामह आह्वयामः । ये पितरो नराशंसे नरैः शंसनीये यज्ञे सोमादिरूपेण सोमपीथं सोमपानमाशुः प्राप्तवन्तस्ते पितरो नोऽस्माकं सुहवाः सुखेनाऽऽह्वातुं शक्या अर्वन्त शीघ्रगामिन्तो भवन्तु । नोऽस्माकं द्विपदे मनुष्याय शं सुखकरा भवन्तु । चतुष्पदे पशवे च शं भवन्तु ।

अथ विकल्पितामन्यां द्वितीयां पुरोनुवाक्यामाह—

ये अग्निष्वात्ता येऽनग्निष्वात्ताः (१) । अꣳहो मुचः पितरः सोम्यासः । परेऽवरेऽमृतासो भवन्तः । अधिब्रुवन्तु ते अवन्त्वस्मान्, इति ।

अग्निष्वात्ताः पूर्वोक्तलक्षणाः पितरो ये सन्ति ये च यागं कृत्वा पितृलोकं प्राप्ता अनग्निष्वात्ताः पितरस्ते सर्वेऽꣳहोमुचः पापान्मोचयितारः सोम्यासः सोमपानार्हाः परे कृतयागा अवरे यागरहिता द्विधा अप्यमृतासो

ऽनुष्ठानदृच्छीघ्रमरणरहितास्ते भवन्तः पितरोऽधिब्रुवन्तु देवानां समीपे यजमानमधिकं ब्रुवन्तु । यजमानानस्मानवन्तु ।

अथ तत्रैव याज्यामाह—

यान्याये दुग्धे जुषमाणाः करम्भम् । उदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदानाः । इन्द्रवन्तो हविरिदं जुषन्ताम्, इति ।

अग्निष्वात्तनामकाः पितरो मदीयमिदं हविर्जुषन्ताम् । कीदृशा अग्निष्वात्ता यान्याये मृतवत्साया धेनोर्दुग्धे प्रक्षिप्तं करम्भं यवपिष्टरूपं मन्थं जुषमाणाः । तेषु मध्ये ये पर उत्कृष्टा ये चावरे निकृष्टास्ते सर्वेऽप्युदीराणा अस्मिन्कर्मण्युत्कर्षेण प्राप्ता ऋतुभिर्यज्ञकालाभिमानिदेवैः सह संविदाना ऐकमत्यं गता इन्द्रवन्तः परमैश्वर्ययुक्तेन पितृराजेन यमेन संयुक्ताः ।

अत्र शाखान्तरानुसारेण हविरन्तरं सूत्रकार उदाजहार—" अग्नये कव्यवाहनाय यमाय वा मन्थम् " इति । तत्र द्वयोः पुरोनुवाक्ययोरेकस्या याज्यायाश्च प्रतीकानि दर्शयति—

यदग्ने कव्यवाहन त्वमग्न ईडितो जातवेदः । मातली कव्यैः, इति ।

एतास्तिस्रः " उशन्तस्त्वा हवामहे" इत्यनुवाक्ये संहितायां व्याख्याताः ।

अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—

ये तातृपुर्देवत्रा जेहमानाः । होत्रावृधः स्तोमतष्टासो अर्कैः । आऽग्ने याहि सुविदत्रेभिरर्वाङ् । सत्यैः कव्यैः पितृभिर्घर्मसद्भिः, इति ।

ये पितरो देवत्रा देवेषु मध्ये जेहमानाः प्रयतमाना होत्रावृधो होमकर्तॄन्वर्धयन्तः स्तोमतष्टासः स्तोत्ररूपैर्मन्त्रैः संस्कृताः सन्तोऽर्कैरर्चनीयैर्हविर्भिस्तातृपुस्तृप्तिं गताः । हेऽग्ने तैः पितृभिः सार्धमर्वाङायाह्यस्मदभिमुख आगच्छ । कीदृशैः पितृभिः सुविदत्रेभिः सम्यगभिज्ञैः सत्यैः सत्यवादिभिः कव्यैः कव्याख्येन पितृणामन्नेन युक्तैर्घर्मसद्भिर्घर्मे दीप्यमानेऽस्मिन्कर्मणि निवसद्भिः ।

अथ तत्रैव याज्यामाह—

हव्यवाहमजरं पुरुप्रियम् । अग्निं घृतेन हविषा सपर्यन् । उपासदं कव्यवाहं पितृणाम् । स नः प्रजां वीरवतीꣳ समृण्वतु ( २ ), इति ।

अनग्निष्वात्ता जेहमानाः सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये षोडशोऽनुवाकः ॥ १६ ॥

---

अहं स्विष्टकृदाख्यमिममग्निमुपासदमुपसन्नोऽस्मि । किं कुर्वन्घृतेन हविषा सपर्यन्पूजयन् । कीदृशमग्निं हव्यवाहं देवार्थे हव्यस्य वोढारमजरं जरारहितं पुरुप्रियं पुरूणां बहूनां यजमानानां प्रियं पितृणामर्थे कव्यवाहं कव्याख्यस्य हविषो वोढारम् । स तादृशोऽग्निर्नोऽस्माकं वीरवतीं वीरैर्भृत्यैर्युक्तां प्रजां पुत्रपौत्रादिरूपां समृण्वतु सम्यक्प्रापयतु[1] ।

अथ विनियोगसंग्रहः—

पितृयज्ञे सामिधेनी ह्युशन्तस्त्वेति वर्णिता ।
आ नस्त्वं सोम इत्याज्यभागयोर्द्वे पुरोरुचौ ॥
पितृमत्सोमयागे तु त्वं सोम प्रेत्युभे मते ।
पुरोनुवाक्ये याज्या तु त्वं सोमेत्यादिका मता ॥
बर्हिषः पितृयागे तु बर्हिष्यादित्रयं तथा ।
अग्निष्वेति चतस्रः स्युरग्निष्वात्तयजौ तथा ॥
यदग्ने कव्यवाहेति कव्यवाहयजौ त्रयम् ।
एतौ द्वे स्विष्टकृद्यागे मन्त्रा अष्टादशेरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये षष्ठप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

====

---

१ क. °म्यक्प्रददातु ।

अथ षष्ठे सप्तदशोऽनुवाकः ।

षोडशे पितृयज्ञयाज्यानुवाक्या उक्ताः । अथ यत्पञ्चान्वरं सूत्रकारेणोद्दिष्टम् "इन्द्राय वयोधसे पशुमालभते" इति, तत्र प्रयाजार्थां मैत्रावरुणप्रैषाः सप्तदशेऽभिधीयन्ते । तत्र प्रथममन्त्रमाह—

होता यक्षदिडस्पदे । समिधानं महद्यशः । सुषमिद्धं वरेण्यम् । अग्निमिन्द्रं वयोधसम् । गायत्रीं छन्द इन्द्रियम् । त्र्यविं गां वयो दधत् । वेत्वाज्यस्य होतर्यज, इति ।

योऽयं दैव्यो होता सोऽयमिडस्पदे सोमक्रयणीपदपांसुयुक्त आहवनीये समिधानं समिन्धामकं प्रथमप्रयाजदेवं यक्षद्यजतु । कीदृशं देवं महद्यशो महतो यशसः कारणम् । सुषमिद्धं सुखेन सम्यक्प्रज्वालितम् । वरेण्यं सर्वैर्वरणीयम् । तद्देवद्वाराऽग्निं तदग्निरूपं वयोधसं वय आयुष्यं धारयतीति वयोधास्तादृशमिन्द्रं पशुस्वामिनं देवं यजतु । तथा गायत्रीं छन्दश्चतुर्विंशत्यक्षरं छ(रुछ)न्दोदेवं यजतु । ततो यजमानायेन्द्रियं चक्षुरादिपाटवं त्र्यविं गाम्, अविशब्दो मासषट्कोपलक्षक इति चतुर्थकाण्डे प्रतिपादितम्, त्रीणि मासषट्कानि यस्या गोः सेयं त्र्यविस्तादृशीं गां वय आयुष्यं च दधत्संपादयतु । अयं प्रयाजदेव आज्यस्य वेतु हूयमानमाज्यं पिबतु । तदर्थं हे मानुष होतर्यज याज्यां पठ ।

अथ द्वितीयमन्त्रमाह—

होता यक्षच्छुचिव्रतम् । तनूनपातमुद्भिदम् । यं गर्भमदितिर्दधे (१) । शुचिमिन्द्रं वयोधसम् । उष्णिहं छन्द इन्द्रियम् । दित्यवाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज, इति ।

तनूनपान्नामको द्वितीयप्रयाजदेवस्तं होता यक्षद्यजतु । कीदृशं शुचिव्रतं शुद्धमेतत्कर्मरूपं व्रतं यस्य तादृशम् । उद्भिदं फलस्योद्भेत्तारमुत्पादयितारम् । यं तनूनपादाख्यमग्निमदितिरियं भूमिर्गर्भे दधे तं यजत्वित्यन्वयः । तद्द्वारेण

शुचिं शुद्धात्मानं वयोधसमिन्द्रं पशुदेवमुष्णिवछन्दोदेवं च यजतु । तत इन्द्रियं दित्यवाहं गां द्विवर्षीं गामायुष्यं च संपादयतु । वेत्वित्यादि पूर्ववत् ।

अथ तृतीयमन्त्रमाह—

होता यक्षदीडेन्यम् । ईडितं वृत्रहन्तमम् । इडाभिरीड्यꣳ सहः । सोममिन्द्रं वयोधसम् । अनुष्टुभं छन्द इन्द्रियम् । त्रिवत्सं गां वयो दधत् (२) । वेत्वाज्यस्य होतर्यज, इति ।

ईडेन्यस्तृतीयप्रयाजदेवस्तं होता यजतु । कीदृशम्, ईडितं सर्वैर्ऋत्विग्भिः स्तुतम् । वृत्रहन्तममतिशयेन वैरिघातिनम् । इडाभिरीड्यं स्तुतिपराभिर्ऋग्भिः स्तुत्यम् । सहो बलहेतुम् । इन्द्रमित्यादि पूर्ववत् । तस्य विशेषणं सोमं सोमपानार्हमित्यर्थः । त्रिवत्सं त्रिवर्षम् ।

अथ चतुर्थमन्त्रमाह—

होता यक्षत्सुबर्हिषम् । पूषण्वन्तममर्त्यम् । सीदन्तं बर्हिषि प्रिये । अमृतेन्द्रं वयोधसम् । बृहतीं छन्द इन्द्रियम् । पञ्चाविं गां वयो दधत् । वेत्वाज्यस्य होतर्यज, इति ।

बर्हिःशब्देन चतुर्थप्रयाजदेव उच्यते, तं होता यक्षद्यजतु । कीदृशं पूषण्वन्तं पोषणसामर्थ्ययुक्तम् । अमर्त्यं मरणरहितम् । प्रिये बर्हिषि यज्ञे सीदन्तमुपविष्टम् । अमृतशब्दो मरणराहित्यवाचीन्द्रस्य विशेषणम् । पञ्चाविं सार्धसंवत्सरद्वयोपेतम् ।

अथ पञ्चममन्त्रमाह—

होता यक्षद्व्यचस्वतीः । सुप्रायणा ऋतावृधः (३) । द्वारो देवीर्हिरण्ययीः । ब्रह्माणमिन्द्रं वयोधसम् । पङ्क्तिं छन्द इहेन्द्रियम् । तुर्यवाहं गां वयो दधत् ।

वेत्वाज्यस्य होतर्यज, इति ।

द्वारशब्दवाच्याः पञ्चमप्रयाजदेवतास्ताश्च व्यचस्वतीर्व्याप्तिमत्यो ऽवकाशवत्यः सुप्रायणाः सुष्ठु प्रायणं गमनागमनरूपं यासु ता ऋतं सत्यं वर्धयन्त्यः स्पृशावृधो हिरण्ययीः सुवर्णाभरणयुक्ता ब्रह्माणः परिवृढास्ताद्वारो होता यजतु । इन्द्रमित्यादि पूर्ववत् । [इह कर्मणि] तुर्यवाहं सार्धसंवत्सरत्रयोपेतम् ।

अथ षष्ठमन्त्रमाह—

होता यक्षत्सुपेशसे । सुशिल्पे बृहती उभे । नक्तोषासा न दर्शते । विश्वमिन्द्रं वयोधसम् । त्रिष्टुभं छन्द इन्द्रियम् ( ४ ) । पष्ठवाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज, इति ।

नक्तोषासाशब्दवाच्ये षष्ठप्रयाजदेवते । ते च सुपेशसे शोभनरूपयुक्ते सुशिल्पे शोभनशिल्पोपेते । शिल्पशब्देन कलाविद्या उच्यन्ते । बृहती महत्यौ न दर्शते दर्शनीये च ते उभे होता यजतु । विश्वं विश्वस्वामिनम् । इन्द्रमित्यादि पूर्ववत् । पष्ठवाहं संवत्सरचतुष्टयोपेतम् ।

अथ सप्तममन्त्रमाह—

होता यक्षत्प्रचेतसा । देवानामुत्तमं यशः । होतारा दैव्या कवी । सयुजेन्द्रं वयोधसम् । जगतीं छन्द इहेन्द्रियम् । अनड्वाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज, इति ।

दैव्यौ होतारौ सप्तमप्रयाजदेवौ । तौ च प्रचेतसौ प्रकृष्टज्ञानयुक्तौ देवानां सर्वेषामुत्तमं यशः संपादयन्तौ कवी विद्वांसौ सयुजा सहैव वर्तमानौ । इह कर्मण्यनड्वाहं शकटवहनक्षमं गाम् । अन्यत्पूर्ववत् ।

अथाष्टममन्त्रमाह—

होता यक्षत्पेशस्वतीः (५) । तिस्रो देवीर्हिरण्ययीः ।

भारतीर्बृहतीर्महीः । पतिमिन्द्रं वयोधसम् । विराजं छन्द इहेन्द्रियम् । धेनुं गां न वयो दधत् । वेत्वा-ज्यस्य होतर्यज, इति ।

तिस्रो देव्योऽष्टमप्रयाजदेवतास्ताश्च पेशस्वती रूपवत्यो हिरण्ययीः सुवर्णा-भरणोपेताः । भारतीरिति बहुवचनेनेडासरस्वत्यावपि गृह्येते । बृहतीः प्रौढा महीः पूज्याः । पतिं पालकम् । धेनुं गां [न] नवप्रसूतिं[1] गामपि । अन्य-त्पूर्ववत् ।

[अथ] नवममन्त्रमाह—

होता यक्षत्सुरेतसम् । त्वष्टारं पुष्टिवर्धनम् । रूपाणि बिभ्रतं पृथक् । पुष्टिमिन्द्रं वयोधसम् (६) । द्विपदं छन्द इहेन्द्रियम् । उक्षाणं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज, इति ।

त्वष्टृशब्देन नवमप्रयाजदेव उच्यते । स च सुरेताः शोभनरेतस्को बहुप्रजा-प्रदः । शरीरस्य पुष्टिं वर्धयतीति पुष्टिवर्धनः । स च प्रतिशरीरं पृथग्वि-लक्षणानि रूपाणि बिभ्रद्दधाति । तादृशं देवं होता यक्षद्यजतु । पुष्टिं पुष्टिप्रद-मिन्द्रम् । इह कर्मण्युक्षाणं गां न सेचनक्षमं वृषभमपि । अन्यत्पूर्ववत् ।

[अथ] दशममन्त्रमाह—

होता यक्षच्छतक्रतुम् । हिरण्यपर्णमुक्थिनम् । रशनां बिभ्रतं वशिम् । भगमिन्द्रं वयोधसम् । ककुभं छन्द इहेन्द्रियम् । वशां वेहतं गां न वयो दधत् । वेत्वा-ज्यस्य होतर्यज, इति ।

हिरण्यपर्णशब्देन सुवर्णपर्णयुक्तो दशमप्रयाजदेवो वनस्पतिरुच्यते । स च शतक्रतुः शतसंख्याकक्रतुहेतुः । उक्थी शस्त्रोपेतो मन्त्रेण प्रशस्यमान इत्यर्थः ।

---

१ क. ख. °सूतिकां गा° ।

स च वशीं स्ववशां रशनां यूपावस्थां बिभ्रद्वर्तते तादृशं होता यजतु। भगं भाग्ययुक्तम्। वशां वन्ध्यां वेहतं गां न गर्भघातिनीं गामपि। अन्यत्पूर्ववत्।

[अथ एकादशमन्त्रमाह—

होता यक्षत्स्वाहाकृतीः। अग्निं गृहपतिं पृथक्। वरुणं भेषजं कविम्। क्षत्रमिन्द्रं वयोधसम्। अतिच्छन्दसं छन्द इन्द्रियम्। बृहदृषभं गां वयो दधत्। वेत्वाज्यस्य होतर्यज (७), इति।

दधे दधद्धतावृधं इन्द्रियं पेशस्वतीर्व्योधसं वेत्वाज्यस्य होतर्यज सप्त च॥

इडस्पदेऽग्निं गायत्रीं त्र्यविम्। शुचिव्रतम् शुचिमुष्णिहं दित्यवाहम्। ईडेऽन्यम् सोममनुष्टुभं त्रिवत्सम्। सुबर्हिषदममृतेन्द्रं बृहतीं पञ्चाविम्। व्यचस्वतीः सुप्रायणा द्वारो ब्रह्माणः पङ्क्तिमिह तुर्यवाहम्। सुपेशसे विश्वमिन्द्रं त्रिष्टुभं पष्ठवाहम्। प्रचेतसा सयुजेन्द्रं जगतीमिहानड्वाहम्। पेशस्वतीस्तिस्रो भारतीः पतिं विराजमिह धेनुं न। सुरेतसं स्वधारं पुष्टिं द्विपदमिहोक्षाणं न। शतक्रतुं भगमिन्द्रं ककुभमिह वशां वेहतं गां न। स्वाहाकृतीः क्षत्रपतिच्छन्दसं बृहदृषभं गाम्। इन्द्रियमृषिवसुनवदशेहेन्द्रियमष्टं नव दश गां न वयो दधत्सर्वत्र॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये सप्तदशोऽनुवाकः॥ १७॥

===

स्वाहाकृतिशब्देनैकादशप्रयाजदेव उच्यते। स च पृथग्गृहपतिः प्रत्येकं गृहस्य पालको वरुणः पापनिवारकः[1] कविर्विद्वांस्तादृशमग्निं होता यजतु। क्षत्रं बलवन्तम्। बृहत्प्रौढम्। अन्यत्पूर्ववत्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके सप्तदशोऽनुवाकः॥ १७॥

---

१ क. ख. °पनिवा°।

अथ षष्ठेऽष्टादशोऽनुवाकः ।

ऐन्द्रे पशावेकादश प्रयाजप्रैषाः सप्तदशेऽभिहिताः । अष्टादश आभिनाम-(मि)क्ताः प्रयाजयाज्या उच्यन्ते । तत्र प्रथमामृचमाह—

समिद्धो अग्निः समिधा । सुषमिद्धो वरेण्यः ।
गायत्री छन्द इन्द्रियम् । त्र्यविर्गौर्वयो दधुः, इति ।

समिन्नामकः प्रथमप्रयाजदेवोऽग्निः । स च समिधा समिद्योगेन सुषमिद्धः सुष्ठु प्रज्वलितः । योऽयं तादृशोऽग्निर्यच्च गायत्र्याख्यं छन्दो योऽपि त्र्यविः सार्धसंवत्सरो गौस्त एते देवा इन्द्रियं चक्षुरादिपाटवं वय आयुष्यं च दधुः संपादितवन्तः ।

अथ द्वितीयामाह—

तनूनपाच्छुचिव्रतः । तनूनपाच्च सरस्वती । उष्णि-
क्छन्द इन्द्रियम् । दित्यवाड्गौर्वयो दधुः, इति ।

तनूनपाच्छब्देन द्वितीयप्रयाजदेव उच्यते । स च शुचिव्रतः शुद्धेन व्रत-कर्मणा युक्तस्तादृशस्तनूनपाच्छरीरप्राप्तिहेतुः सरस्वती चोष्णिक्छन्दश्च दित्य-वाट्संवत्सरद्वयोपेता गौश्चेत्येते देवा इन्द्रियं वयश्च संपादयन्तु ।

अथ तृतीयामाह—

इडाभिरग्निरीड्यः । सोमो देवो अमर्त्यः ( १ ) ।
अनुष्टुप्छन्द इन्द्रियम् । त्रिवत्सो गौर्वयो दधुः, इति ।

इडाभिर्मन्त्रोक्ताभिः स्तुतिभिरीड्यः स्तुत्य ईडयनामकोऽग्निस्तृतीयप्रयाज-देवो यश्चामर्त्यो मरणरहितः सोमो देवो यदप्यनुष्टुप्छन्दो योऽपि संवत्सरत्र-योपेतो गौस्त एते देवा इन्द्रियं वयश्च दधुः ।

अथ चतुर्थीमाह—

सुबर्हिरग्निः पूषण्वान् । स्तीर्णबर्हिरमर्त्यः । बृहती

छन्दं इन्द्रियम् । पञ्चाविर्गौर्वयो दधुः, इति ।

सुष्ठु बर्हिर्यस्यासौ सुबर्हिरेतन्नामकश्चतुर्थप्रयाजदेवोऽग्निः पूषण्वान्पूष्णा देवेन युक्तः पोषणसामर्थ्ययुक्तो वा । स्तीर्णबर्हिर्वेदिप्रसारितबर्हिर्युक्तोऽमर्त्यो मरणरहितः । ईदृशो योऽग्निर्यच्च बृहती छन्दो योऽपि सार्धसंवत्सरद्वयोपेतो गौरेते देवा इन्द्रियं वयश्च दधुः ।

अथ पञ्चमीमाह—

दुरो देवीर्दिशो महीः । ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इहेन्द्रियम् । तुर्यवाड्गौर्वयो दधुः
( २ ), इति ।

दुरः पञ्चमप्रयाजदेवतास्ताश्च देवीर्द्योतमाना दिशो दिग्रूपा महीर्महत्यः । यश्च ब्रह्मा ब्राह्मणस्वामी बृहस्पतिर्देवो यदपि पङ्क्तिश्छन्दो योऽपि सार्धसंवत्सरत्रयोपेतो गौरेते देवा इन्द्रियं वयश्च दधुः ।

अथ षष्ठीमाह—

उषे यह्वी सुपेशसा । विश्वे देवा अमर्त्याः । त्रिष्टुप्छन्द इन्द्रियम् । पष्ठवाड्गौर्वयो दधुः, इति ।

उषे षष्ठप्रयाजदेवते यह्वी प्रयतमाने सुपेशसा शोभमानरूपे । ईदृश्यौ ये देव्यौ ये चामर्त्या मरणधर्मरहिता विश्वे देवा यच्च त्रिष्टुप्छन्दो योऽपि संवत्सरचतुष्टयोपेतो गौरेते देवा इन्द्रियं वयश्च दधुः ।

अथ सप्तमीमाह—

दैव्या होतारा भिषजा । इन्द्रेण सयुजा युजा ।
जगती छन्द इहेन्द्रियम् । अनड्वान्गौर्वयो दधुः,
इति ।

दैव्यौ होतारौ सप्तमप्रयाजदेवौ । तौ च भिषजौ चिकित्सकाविन्द्रेण सयुजा सह वर्तमानौ युजा परस्परमपि संयुक्तौ । ईदृशौ यौ देवौ यच्च जगती छन्दो योऽपि शकटवहनक्षमो गौरेते देवा इन्द्रियं वयश्च दधुः ।

अथाष्टमीमाह—

तिस्र इडा सरस्वती। भारती मरुतो विशः (३)।
विराट् छन्द इहेन्द्रियम्। धेनुर्गौर्न वयो दधुः, इति।

इडा सरस्वती भारती चाष्टमप्रयाजदेवतास्तिस्रो याः सन्ति येऽपि देवानां मध्ये विशो मरुतो यदपि विराट्छन्दो नवप्रसूतिका गौरपि या विद्यत एते देवा इह कर्मणीन्द्रियं वयश्च दधुः।

अथ नवमीमाह—

त्वष्टा तुरीपो अद्भुतः। इन्द्राग्नी पुष्टिवर्धना।
द्विपाच्छन्द इहेन्द्रियम्। उक्षा गौर्न वयो दधुः, इति।

त्वष्टा नवमप्रयाजदेवः। स च तुरीपः शीघ्रप्राप्तिमानद्भुत आश्चर्यविग्रहस्तादृशो यो देवो यौ च पुष्टिवर्धना पुष्टिं वर्धयितारौ ताविन्द्राग्नी यदपि द्विपात्पादद्वयोपेतश्छन्द उक्षा गौर्न सेचनसमर्थो गौरपि यो विद्यते ते देवा इह कर्मणीन्द्रियं वयश्च दधुः।

अथ दशमीमाह—

शमिता नो वनस्पतिः। सविता प्रसुवन्भगम्। ककुच्छन्द इहेन्द्रियम्। वशा वेहद्गौर्न वयो दधुः, इति।

वनस्पतिर्दशमप्रयाजदेवः। स च नोऽस्माकं शमिता सर्वोपद्रवशमनहेतुः। तादृशो यो देवो यश्च सविता भगं सौभाग्यं प्रसुवन्प्रेरयन्वर्तते गौर्न गौरपि वेहद्गर्भघातिनी सती वशा वन्ध्या या विद्यत एते देवा इन्द्रियं वयश्च दधुः।

अथैकादशीमाह—

स्वाहा यज्ञं वरुणः। सुक्षत्रो भेषजं करत्।
अतिच्छन्दाश्छन्द इन्द्रियम्। बृहदृषभो गौर्वयो दधुः (४), इति।

अमर्त्यस्तुर्यवाड्गौर्वयो दधुर्विशो वशा वेहद्गौर्न वयो दधुश्चत्वारि च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्यायेऽष्टादशोऽनुवाकः ॥ १८ ॥

====

स्वाहाकाराख्य एकादशप्रयाजदेवो यज्ञं निष्पादयति । स च वरुणोऽग्निष्पारूः सुक्षत्रः शोभनबलोपेतो भेषजं क्रूरदौषधं करोति । वाल्यो यो देवो यथातिच्छन्दा(न्दआ)ख्यं छन्दो योऽपि मौढ ऋषभो गौस्ते देवा इन्द्रियं वयश्च दधुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

अथ षष्ठ एकोनविंशोऽनुवाकः ।

---

ऐन्द्रस्य पशोः प्रयाजयाज्या अष्टादशेऽभिहिताः । एकोनविंशे वपापुरोडाशहविषां याज्यानुवाक्या उच्यन्ते । तत्र वपायाः पुरोनुवाक्यामाह—

वसन्तेनर्तुना देवाः । वसवस्त्रिवृता स्तुतम् रथंतरेण तेजसा । हविरिन्द्रे वयो दधुः, इति ।

वसन्ताख्येनर्तुदेवेन सहिता वसवो देवा इन्द्रे हविरिदं सवर्धमाणं वय आयुष्यं च दधुः संपादितवन्तः । कीदृशं हविस्त्रिवृदाख्येन स्तोमेन स्तुतम् । तथा तेजशा तेजस्विना रथंतराख्येन(ण) साम्ना स्तुतम् ।

[अथ] वपायाज्यामाह—

ग्रीष्मेण देवा ऋतुना । रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बलम् । हविरिन्द्रे वयो दधुः, इति ।

ग्रीष्मर्तुना सहिता इन्द्राः पञ्चदशस्तोमे यशस्विना बृहत्साम्ना स्तुतं बलकरं हविर्वयश्चेन्द्रे दधुः ।

---

१ क. ख. 'पाया या' ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह--

वर्षाभिर्ऋतुनाऽऽदित्याः । स्तोमे सप्तदशे स्तुतम् (१) । वैरूपेण विशौजसा । हविरिन्द्रे वयो दधुः, इति ।

वर्षर्तुना सहिता आदित्याः सप्तदशस्तोमे वैश्यानुग्राहकेणौजस्विना वैरूपसाम्ना स्तुतं हविर्वयश्चेन्द्रे दधुः ।

पुरोडाशस्य याज्यामाह—

शारदेनर्तुना देवाः । एकविꣳश ऋभवः स्तुतम् । वैराजेन श्रिया श्रियम् । हविरिन्द्रे वयो दधुः, इति ।

शरदृतुसहिता ऋभुनामका देवा एकविंशस्तोमे श्रिया श्रीप्रदेन वैराजेन साम्ना स्तुतं श्रियं श्रीप्रदं हविर्वयश्चेन्द्रे दधुः ।

अथ हविषः पुरोनुवाक्यामाह--

हेमन्तेनर्तुना देवाः । मरुतस्त्रिणवे स्तुतम् । बलेन शक्वरीः सहः । हविरिन्द्रे वयो दधुः, इति ।

हेमन्तर्तुसहिता मरुन्नामका देवास्त्रिणवस्तोमे बलेन बलप्रदेन शक्वरीः शक्वरसाम्ना स्तुतं सहो बलप्रदं हविर्वयश्चेन्द्रे दधुः ।

[ अथ ] हविषो याज्यामाह--

शैशिरेणर्तुना देवाः । त्रयस्त्रिꣳशेऽमृतꣳ स्तुतम् । सत्येन रेवतीः क्षत्रम् । हविरिन्द्रे वयो दधुः (२), इति ।

स्तोमे सप्तदशे स्तुतꣳ सहो हविरिन्द्रे वयो दधुश्चत्वारि च ।

वसन्तेन ग्रीष्मेण वर्षाभिः शारदेन हेमन्तेन शैशिरेण षट् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याय एकोनविंशोऽनुवाकः ॥ १९ ॥

शैशिरर्तुसहिता देवास्त्रयस्त्रिंशाख्ये स्तोमे सत्येन सत्यवाक्येन हेतुना रेवती रेवत्याख्येन साम्ना स्तुतममृतमविनश्वरं क्षत्रं बलपदं हविर्वयश्चेन्द्रे दधुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके एकोनविंशोऽनुवाकः ॥ १९ ॥

अथ षष्ठे विंशोऽनुवाकः ।

एकोनविंशे वपापुरोडाशहविषां याज्यानुवाक्या उक्ताः । अथ विंशेऽनूयाजानां मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथममन्त्रमाह—

देवं बर्हिरिन्द्रं वयोधसम् । देवं देवमवर्धयत् । गायत्रिया छन्दसेन्द्रियम् । तेज इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज, इति ।

बर्हिःशब्देन प्रथमानूयाजदेवस्वरूपमुच्यते । तच्च देवं द्योतनशीलम् । योऽयमिन्द्रो वयोधा आयुष्या(ष्य)धारकस्तं देवमिन्द्रं पूर्वोक्तदेवनशीलं बर्हिःस्वरूपमवर्धयद्वर्धितवत् । यच्च गायत्र्याख्येन (ण) च्छन्दसा सहितं सदिन्द्रियं चक्षुरादिपाटवं तेजः शरीरकान्तिर्वय आयुष्यं च दधत्संपादयति । वसुधेयस्य धनधारकस्य देवस्य वसुवने धनदाननिमित्तमयं प्रथमानूयाजदेवो वेत्वाज्यं पिबतु । तदर्थं हे होतर्यज याज्यां पठ ।

अथ द्वितीयमन्त्रमाह—

देवीर्द्वारो देवमिन्द्रं वयोधसम् । देवीर्देवमवर्धयन् । उष्णिहा छन्दसेन्द्रियम् । प्राणमिन्द्रे वयो दधत् । वसुवने वसु-

१ क. ङ. °युष्यवर्धक° ।

धेयस्य वियन्तु यज (१) इति।

द्वारशब्दवाच्या देव्यो द्वितीयानुयाजदेवता याः सन्ति ता देव्यो देवं द्योतमानं वयोधसमिन्द्रं देवमवर्धयन् । ताश्च देव्य उष्णिहा छन्दसा सहेन्द्रियपाटवं प्राणं स्थैर्यमायुष्यं चेन्द्रे संपादयन्तु।

अथ तृतीयमन्त्रमाह--

देवी देवं वयोधसम्। उषे इन्द्रमवर्धताम्। अनुष्टुभा छन्दसेन्द्रियम्। वाचमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज, इति।

उषे देवी उषाख्ये देव्यौ तृतीयानुयाजदेवते। ते उभे वयोधसमिन्द्रं देवं वर्धितवत्यौ। ते चानुष्टुभा छन्दसा सहेन्द्रियं वाग्वयांसीन्द्रे संपादयतः।

अथ चतुर्थमन्त्रमाह--

देवी जोष्ट्री देवमिन्द्रं वयोधसम्। देवी देवमवर्धताम्। बृहत्या छन्दसेन्द्रियम्। श्रोत्रमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज (२), इति।

जोष्ट्री देवी जोष्ट्र्याख्ये देव्यौ ये विद्येते ते देव्यौ द्योतमानं वयोधसमिन्द्रं देवं वर्धितवत्यौ। ते च बृहत्या छन्दसा सहेन्द्रियं श्रोत्रवयांसीन्द्रे संपादयतः। इन्द्रियशब्दः सामान्यवाची वाक्श्रोत्रादयो विशेषवाचिनः।

अथ पञ्चममन्त्रमाह--

देवी ऊर्जाहुती देवमिन्द्रं वयोधसम्। देवी देवमवर्धताम्। पङ्क्त्या छन्दसेन्द्रियम्। शुक्रमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज, इति।

---

१ क. °यन्त्यौ। अ°।

ऊर्जाहुत्याख्ये ये देव्यौ विद्यते ते देव्यौ द्योतमानं वयोधसमिन्द्रं देवं वर्धितवत्यौ। ते च पङ्क्त्या छन्दसा सहेन्द्रियं शुक्रं, वयांसीन्द्रे संपादयतः। शुक्रशब्देन दीप्तिरुच्यते।

अथ षष्ठमन्त्रमाह—

देवा दैव्या होतारा देवमिन्द्रं वयोधसम्। देवा देवमवर्धताम्। त्रिष्टुभा छन्दसेन्द्रियम्। त्विषिमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज(३), इति।

दैव्यहोतृनामकौ यौ देवौ विद्येते तौ देवौ द्योतमानं वयोधसमिन्द्रं देवं वर्धितवन्तौ। तौ च त्रिष्टुभा छन्दसा सहेन्द्रियं त्विषि वयांसीन्द्रे दधतुः। पूर्वत्र शुक्रशब्देन शरीरकान्तिरुक्ता, इह त्विषिशब्देन रश्मिरुच्यते।

अथ सप्तममन्त्रमाह—

देवीस्तिस्रस्तिस्रो देवीर्वयोधसम्। पतिमिन्द्रमवर्धयन्। जगत्या छन्दसेन्द्रियम्। बलमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वियन्तु यज, इति।

या देव्यस्तिस्रस्त्रिसंख्याका एकैकस्यास्त्रिमूर्तित्वात्पुनरपि तिस्र इत्युच्यन्ते। ताः सर्वा वयोधसं पालकमिन्द्रं वर्धितवत्यः। ताः पुनर्जगत्या छन्दसा सहेन्द्रियं बलं वयांसीन्द्रे संपादयन्ति।

अथाष्टममन्त्रमाह—

देवो नराशंसो देवमिन्द्रं वयोधसम्। देवो देवमवर्धयत्। विराजा छन्दसेन्द्रियम्। रेत इन्द्रे वयो दधत्। वसुवने

वसुधेयस्य वेतु यज ( ४ ), इति ।

नराशंसाख्यो यो देवोऽस्ति स देवो द्योतमानं वयोधसमिन्द्रं देवं वर्धितवान् । स च विराजा छन्दसा युक्त इन्द्रियं रेतो वयांसीन्द्रे संपादयति ।

[अथ] नवममन्त्रमाह—

देवो वनस्पतिर्देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । द्विपदा छन्दसेन्द्रियम् । भगमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज, इति ।

वनस्पत्याख्यो यो देवोऽस्ति स देवो द्योतमानं वयोधसमिन्द्रं वर्धितवान् । स च द्विपदा छन्दसा सहेन्द्रियसौभाग्यवयांसीन्द्रे संपादयति ।

अथ दशममन्त्रमाह—

देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसम् देवो देवमवर्धयत् । ककुभा छन्दसेन्द्रियम् । यश इन्द्रे वयो दधत् ।। वसुवने वसुधेयस्य वेतु यज, इति ।

वारितीनां जलप्राप्तीनां संबन्धि बर्हिराख्यं यद्देवस्वरूपमस्ति तदिदं बर्हिःस्वरूपं द्योतमानं वयोधसमिन्द्रं देवं वर्धितवत् । तच्च ककुभा छन्दसा सहेन्द्रिययशोवयांसीन्द्रे संपादयति ।

अथैकादशमन्त्रमाह—

देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । अतिच्छन्दसा च्छन्दसेन्द्रियम् । क्षत्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज (५), इति ।

वियन्तु यजं वीतां यजं वीतां यजं वेतु यजं वेतु यज पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके षष्ठाध्याये विंशोऽनुवाकः ॥ २० ॥

स्विष्टकृदाख्योऽग्निर्देवो योऽस्ति स देवो द्योतमानं वयोधसमिन्द्रं देवं वर्धितवान् । स चातिच्छन्दोरूपेण च्छन्दसा सहेन्द्रियबलवयांसीन्द्रे संपादयति । अतो धनधारकस्य धनदाननिमित्तमयं स्विष्टकृद्देव आज्यं वेतु पिबतु । तदर्थं हे होतर्यज याज्यां पठ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके विंशोऽनुवाकः ॥ २० ॥

देवं बर्हिर्गायत्रिया तेजः । देवीर्द्वार उष्णिहा प्राणम् । देवी देवमुषे अनुष्टुभा वाचम् । देवी जोष्ट्री बृहत्या श्रोत्रम् । देवी ऊर्जाहुती पङ्क्त्या शुक्रम् । देवा दैव्या होतारा त्रिष्टुभा त्विषिम् । देवीस्तिस्रस्तिस्रो देवीः पतिं जगत्या बलम् । देवो नराशꣳसो विराजा रेतः । देवो वनस्पतिर्द्विपदा भगम् । देवं बर्हिर्वारितीनां ककुभा यशः । देवो अग्निः स्विष्टकृदतिच्छन्दसा क्षत्रम् । वेतु वियन्तु चतुर्वीतामेको वियन्तु चतुर्वेतु । अवर्धयदवर्धꣳश्चतुरवर्धतामेकोऽवर्धयꣳश्चतुरवर्धयत् ।

स्वाद्वीं त्वा सोमः सुरावन्तꣳ सीसेन मित्रोऽसि यद्देवा होता यक्षत्सामिधेन्द्रꣳ समिद्ध इन्द्र आचर्षणि प्रा देवं बर्हिरिन्द्रꣳ सुदेवꣳ होता यक्षत्समिधाऽग्निꣳ समिद्धो अग्निरश्विनाऽश्विना हविरिन्द्रियं देवं बर्हिः सरस्वत्यग्निमद्योशन्तो होता यक्षदिडस्पदे समिद्धो अग्निः समिधा व॰न्तेन देवं बर्हिरिन्द्रं वयोधसं विꣳशतिः ।

स्वाद्वीं त्वमं मित्रोऽस्यवभृथ पुरंदरो होता यक्षदिडस्पदे समिद्धो अग्निराश्विना देवी ऊर्जाहुती वेत्वाज्यस्य वैरूपेण विशौजसा षण्णवतिः ।

स्वाद्वीं त्वाऽमी मदन्त पितरः साम्राज्याय पूतं पवित्रेणेवाऽऽज्यमुषासानक्ता बदरैरथातामश्विना हविरिन्द्रियं देव इन्द्रो वनस्पतिः पष्ठवाहं गां देवी देवं वयोधसं चतुर्नवतिः ।

अच्छिन्नं तन्तुꣳ होता यक्षत्सुपेशसो वरुणः क्षत्रमिन्द्रियꣳ होता यक्षदिडस्पदे वैरूपेण विशौजसा षडशीतिः ।

हरिः ॐ ।

अस्य प्रपाठकस्यानुवाकार्थसंग्रहः—

ग्रहा उपस्थितिर्होम उपहोमोऽभिषेचनम् ।
तथाऽवभृथ ऐन्द्रे तु पशौ चत्वार ईरिताः ॥ १ ॥
पशुत्रयेऽथ चत्वारः सूक्तवाके त्वनन्तरः ।
पितृयज्ञे तूत्तरः स्यात्पशावैन्द्रे चतुष्टयम् ॥ २ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मण-भाष्ये षष्ठः प्रपाठकः समाप्तः ॥ ६ ॥

---

( मूलक्रमेण—अष्ट० २ अध्या० ६ ( १४ ) अनु० २० ( १४७ )) ।
( भाष्यक्रमेण—का० २ प्रपा० ६ ( १४ ) अनु० २० ( १४७ )) ।

====

अथ द्वितीयकाण्डे सप्तमप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
षष्ठे प्रपाठके सौत्रामणिः कौकिल्युदीरिता ।
सवनामान एकाहाः कथ्यन्ते सप्तमे स्फुटम् ॥ २ ॥

सूयत ईश्वरत्वेनाभिषिच्यत एभिरिति सवा एकाहविशेषाः । तत्राऽऽदौ बृहस्पतिसव उच्यते । तस्मिंश्च बृहस्पतिसवे चोदकप्राप्तांस्त्रिवृदादिस्तोमान्द्वादशस्वपि स्तोत्रेषु बाधितुमेकं स्तोमं विधत्ते—

हरिः ॐ ।

त्रिवृत्स्तोमो भवति । ब्रह्मवर्चसं वै त्रिवृत् । ब्रह्मवर्चसमेवावरुन्धे, इति ।

प्रकृतौ बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमश्चतुर्ष्वाज्यस्तोत्रेषु माध्यंदिनपवमानस्तोत्रे च पञ्चदशस्तोमश्चतुर्षु पृष्ठस्तोत्रेष्वार्भवपवमानस्तोत्रे च सप्तदशस्तोमो यज्ञायज्ञीयस्तोत्र एकविंशस्तोमस्तान्बाधित्वा सर्वेषु स्तोत्रेषु त्रिवृत्स्तोम एकः कर्तव्यः । तस्य ब्रह्मवर्चसहेतुत्वाद्ब्रह्मवर्चसप्राप्तिर्भवति ।

सोमयागसंस्थाविशेषं विधत्ते—

अग्निष्टोमः सोमो भवति । ब्रह्मवर्चसं वा अग्निष्टोमः । ब्रह्मवर्चसमेवावरुन्धे, इति ।

पृष्ठस्तोत्रे विकल्पितबृहत्साम्नव्यावृत्त्यर्थं रथंतरसाम विधत्ते—

रथंतरꣳ साम भवति । ब्रह्मवर्चसं वै रथंतरम् । ब्रह्मवर्चसमेवावरुन्धे, इति ।

होतरि कंचिद्विशेषं विधत्ते—

परिस्रजी होता भवति (१) । अरुणो

१ ग. 'शतिस्तो' ।

मिर्मिरस्त्रिशुक्रः । एतद्वै ब्रह्मवर्चसस्य रूपम् । रूपेणैव ब्रह्मवर्चसमवरुन्धे, इति ।

परिस्रजी खलतिः, शिरसि स्रगाकारेण परित एव केशा न तु मध्य इत्यर्थः । अरुणः संध्यावर्णः । मिर्मिरः पुनःपुनरतिवेगेन चक्षुर्मीलनयुक्तः । त्रिशुक्रस्त्रिषु वेदेषु शुद्धो मातृवंशपितृवंशनिजाचारेषु वा शुद्धः । यदेतद्द्विजदेशस्य लक्षणं खलत्यादि, यच्च त्रिशुक्रत्वं तदुभयमपि ब्रह्मवर्चसस्वरूपम् । अतस्तदनुकूलेन रूपेण ब्रह्मवर्चसं प्राप्नोति ।

बृहस्पतिसवस्योत्पत्तिविधिमुक्त्वा प्रयोगं विधत्ते—

बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति । स एतं बृहस्पतिसवमपश्यत् । तमाहरत् । तेनायजत । ततो वै स देवानां पुरोधामगच्छत् । यः पुरोधाकामः स्यात् । स बृहस्पतिसवेन यजेत (२) । पुरोधामेव गच्छति, इति ।

बृहस्पतिः पुरोधां देवगुरुत्वलक्षणं मुख्यत्वं पौरोहित्यं वा ।

दक्षिणायां विशेषं विधत्ते—

तस्य प्रातःसवने सन्नेषु नाराशंसेषु । एकादश दक्षिणा नीयन्ते । एकादश माध्यंदिने सवने सन्नेषु नाराशंसेषु । एकादश तृतीयसवने सन्नेषु नाराशंसेषु । त्रयस्त्रिंशत्संपद्यन्ते । त्रयस्त्रिंशद्वै देवताः । देवता एवावरुन्धे, इति ।

भक्षिताप्यायितचमसा नराशंसास्तेषु दक्षिणस्य हविर्धानस्याधस्तात्सन्नेषु सत्स्वेकादश गावो दक्षिणात्वेन नीयन्ते दातव्याः । एवमुत्तरयोरपि सवनयोस्ता मिलित्वा त्रयस्त्रिंशत्संख्यया देवतासाम्याच्चत्प्रीतिहेतवो भवन्ति " ये देवा दिव्येकादशस्थ " इति मन्त्रे त्रयस्त्रिंशद्देवा आम्नाताः ।

दक्षिणायामपरं विशेषमाह—

अश्वश्चतुस्त्रिꣳशः । प्राजापत्यो वा अश्वः ( ३ ) ।
प्रजापतिश्चतुस्त्रिꣳशो देवतानाम् । यावतीरेव देवताः ।
ता एवावरुन्धे, इति ।

पूर्वोक्तगवापेक्षया चतुस्त्रिंशत्संख्यापूरकोऽश्वो दातव्यः । प्रजापतिजन्यत्वा-त्प्राजापत्यत्वम् । प्रजापतिश्च पूर्वोक्तदेवतापेक्षया चतुस्त्रिंशः । अतोऽश्वदानेन सर्वदेवताप्राप्तिर्भवति ।

एतस्य कर्मणः सवत्वादभिषेकं विधत्ते—

कृष्णाजिनेऽभिषिञ्चति । ब्रह्मणो वा एतद्रूपम् ।
यत्कृष्णाजिनम् । ब्रह्मवर्चसेनैवैनꣳ समर्धयति, इति ।

कृष्णाजिनमास्तीर्यं तत्रोपविष्टं यजमानमभिषिञ्चेत् । ऋक्सामयोः कृष्णमृ-गरूपत्वे[2]साधारणत्वाद्ब्रह्मरूपत्वम् । तेन ब्रह्मवर्चससमृद्धिः ।

अभिषेकद्रव्यं विधत्ते—

आज्येनाभिषिञ्चति । तेजो वा आज्यम् । तेज
एवास्मिन्दधाति ( ४ ), इति ।

होता भवति यजेत धा अश्वो दधाति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमा-ध्याये प्रथमोऽनुवाकः ॥ १ ॥

=====

आज्यस्य स्निग्धत्वात्तेजस्त्वम् ॥

अत्र मीमांसा । चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत् ।
कालं वा बोधयेद्वाक्यमुताङ्गत्वस्य बोधकम् ॥
क्त्वाश्रुत्या भाति कालोऽत्र नैवमङ्गत्वबोधनम् ।
श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते ॥

---

१ क. ख. °पत्यश्चिज° । २ क. ख. °त्वधारणाद्ब्र° ।

इदमाम्नायते—"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत। अग्निं चित्वा सौत्रामण्या यजेत" इति। तत्रेष्ट्वेति क्त्वाप्रत्ययो वाजपेयस्य पूर्वकालिकतां ब्रूते। तस्माद्वाक्यमिदं बृहस्पतिसवस्योत्तरकालीनतां बोधयतीति चेन्मैवम्। वाजपेयाङ्गत्वबोधनमेव क्त्वाश्रुतेर्मुख्योऽर्थः। "समानकर्तृकयोः पूर्वकाले" इति सूत्रेण क्रियाद्वयस्यैककर्तृकतायां तद्विधानात्। यद्यपि सूत्रे पूर्वकाले इत्युक्तम्, तथाऽपि तन्न नियतं मुखं व्यादाय स्वपितीत्यत्र कालैक्येऽपि प्रयोगदर्शनात्। वाजपेयप्रकरणमप्यङ्गत्वेन गृह्यते। अन्यथा स्वप्रकृते बृहस्पतिसवे कालविधानात्प्रकरणं बाध्येत। अङ्गत्वे कर्मान्तरत्वेन प्रासिद्धबृहस्पतिसवत्वाभावाच्चच्छब्दोऽनुपपन्न इति चेन्न। मासाग्निहोत्रन्यायेन तद्धर्मातिदेशार्थत्वात्। तस्माद्वाक्यमिदमङ्गत्वबोधकम्। अग्निं चित्वेत्यत्राप्येवं योजनीयम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

अथ सप्तमे द्वितीयोऽनुवाकः।

---

प्रथमे बृहस्पतिसवोऽभिहितः। द्वितीये वैश्यसवोऽभिधीयते। स च सूत्रकारेण स्पष्टमभिहितः—"अथ सवानां व्याख्यातो बृहस्पतिसवः। वैश्यः पुष्टिकाम आग्नेयादीनि सप्त हवींषि निर्वपति। पृश्निः पष्ठौही मारुत्यालभ्यते। तस्याः पुरस्तात्स्विष्टकृतो यजमानायतन ऋषभचर्म प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नासीनं यजमानं दध्नाऽभिषिञ्चति" इति। तत्र प्रथमं हविर्विधत्ते—

यदा॒ग्नेयो॒ भव॑ति। अ॒ग्निमु॑खा॒ ह्यृद्धिः॑, इति।

आग्नेयोऽष्टाकपालः कर्तव्यः, समृद्धेरग्निपूर्वकत्वात्। आदावाग्नेयेन तत्समृद्धं कर्म भवति।

द्वितीयं हविर्विधत्ते—

अथ॒ यत्पौ॒ष्णः। पुष्टि॒र्वै पू॒षा। पुष्टि॒र्वैश्य॑स्य। पुष्टि॑मे॒वाव॑रुन्धे, इति।

पौष्णश्चरुः कर्तव्यः पूषदेवतायाः पुष्टिहेतुत्वात्। वैश्यस्य पुष्टिकामत्वात्पुष्टिमेव प्राप्नोति।

अथ तृतीयं हविर्विधत्ते—

प्रसवाय सावित्रः, इति ।

सावित्रोऽष्टाकपालः पुरोडाशः कार्यः । स च सवितुः प्रसवाय प्रेरणाय संपद्यते ।

चतुर्थं हविर्विधत्ते—

अथ यत्त्वाष्ट्रः । त्वष्टा हि रूपाणि विकरोति, इति ।

अष्टाकपालस्त्वाष्ट्रः कार्यः । यस्मात्त्वष्टा निषिक्ते रेतसि विविधानि रूपाणि करोति ।

पञ्चमं हविर्विधत्ते—

निर्वरुणत्वाय वारुणः (१) । अथो य एव कश्च सन्त्सूयते । स हि वारुणः, इति ।

अष्टाकपालो वारुणः कार्यः । स च निर्वरुणत्वाय वरुणपाशराहित्याय संपद्यते । अपि च पूर्वं यः को ऽल्पः पुरुषः सन्सूयतेऽभिषिच्यते । स हि तदा वारुणो वरुणेनानुगृहीत इत्युच्यते । तस्माद्वारुणयागोऽभिषेकयोग्यः ।

षष्ठं हविर्विधत्ते—

अथ यद्वैश्वदेवः । वैश्वदेवो हि वैश्यः, इति ।

एकादशकपालो वैश्वदेवः कार्यो यस्माद्वैश्यो विश्वैर्देवैः सह प्रजापतेर्मध्य-भागादुत्पन्नः । तं विश्वे देवा देवता अन्वसृज्यन्त । "जगती छन्दो वैरूपं साम वैश्यो मनुष्याणाम्" इति श्रुत्यन्तराभिधानात् । ततस्तदीयत्वाद्वैश्वदेव-स्तत्र योग्यः ।

सप्तमं हविर्विधत्ते—

अथ यन्मारुतः । मारुतो हि वैश्यः, इति ।

एकादशकपालो मारुतः कार्यः । मरुतां देवविट्त्वेन वैश्ययागे योग्य-त्वात् । मरुतां विट्त्वम् "मारुतो वै देवानां विशः" इति विप्रसिद्धश्रुतेः ।

अधिकशङ्कानिवृत्तये हविःसङ्ख्यां दर्शयति—

सप्तैतानि हवींषि भवन्ति ।

सप्त गणा वै मरुतः, इति ।

"ईदृङ् चान्यादृङ् च" इत्यादयः सप्त गणाः ।

अथ पशुं विधत्ते—

पृश्निः पष्ठौही मारुत्यालभ्यते । विड्वै मरुतः, इति ।

पृश्निः श्वेतवर्णा पष्ठौही चतुर्वर्षा । तादृशी काचिदजा मरुद्देवताकाऽऽलब्धव्या ।

अथाभिषेककालविधिमुपन्यस्यति—

विश एवैतन्मध्यतोऽभिषिच्यते । तस्माद्वा एष विशः प्रियः । विशो हि मध्यतोऽभिषिच्यते, इति ।

एतस्य पशोर्मध्ये स्विष्टकृतः पुरस्तादभिषिञ्चेदिति विधिरुन्नेयः । एवं सति विशः प्रजाया मध्य एवदभिषेचनं कृतं भवति । यस्माद्विशो मध्येऽभिषेकः कृतस्तस्मादेवैष वैश्यः सर्वानुष्ठायी विशां प्रियो भवति ।

अभिषेकार्थमासनं विधत्ते—

ऋषभचर्मेऽध्यभिषिञ्चति । स हि प्रजनयिता, इति ।

यस्मादृषभः प्रजोत्पादकस्तस्मात्तदीयस्य चर्मणि पर्यभिषिञ्चेत् ।

अभिषेकद्रव्यं विधत्ते—

दध्नाऽभिषिञ्चति । ऊर्ग्वा अन्नाद्यं दधि । ऊर्जैवैनमन्नाद्येन समर्धयति (२), इति ।

वारुणो विड्वै मरुतोऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

दध्नो रसरूपत्वात्तादृशेनान्नेन वैश्यं समर्धयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

१ क. ख. चर्मोप॰ ।

अथ सप्तमे तृतीयोऽनुवाकः ।

द्वितीये वैश्यसवोऽभिहितः । तृतीये ब्राह्मणसवोऽभिधीयते । स च सूत्रकारेण स्पष्टीकृतः—"ब्राह्मणो ब्रह्मवर्चसकाम आग्नेयादीन्यष्टौ हवींषि निर्वपति पुरस्तात्स्विष्टकृतो हिरण्येन घृतमुत्पूय तेन कृष्णाजिन आसीनमभिषिञ्चति" इति । तान्येतानि हवींषि विधातव्यानि । तत्र प्रथमं विधत्ते—

यदा॒ग्नेयो॒ भव॑ति । आ॒ग्नेयो॒ वै ब्रा॑ह्म॒णः, इति ।

आग्नेयोऽष्टाकपालः कर्तव्यः । अग्निना सह ब्राह्मणस्य प्रजापतिमुखजत्वसाम्येनाऽऽग्नेयत्वम् ।

द्वितीयं विधत्ते—

अथ॒ यत्सौ॒म्यः । सौ॒म्यो हि ब्रा॑ह्म॒णः, इति ।

सौम्य एकादशकपालः कर्तव्यः । "सोमोऽस्माकं ब्राह्मणानाꣳ राजा" इति श्रुतेर्ब्राह्मणस्य सौम्यत्वम् ।

तृतीयं विधत्ते—

प्र॒स॒वा॒यै॒व सा॑वि॒त्रः, इति ।

सावित्रोऽष्टाकपालः कार्यः । स च प्रसवायैव कल्प्यते ।

चतुर्थं विधत्ते—

अथ॒ यद्बा॑र्हस्प॒त्यः । ए॒तद्वै ब्रा॑ह्म॒णस्य॑ वाक्प॒तीय॑म्, इति ।

बार्हस्पत्योऽष्टाकपालः कर्तव्यः । यद्बृहस्पतिसंबन्धित्वमेतदेव ब्राह्मणस्य वाक्पतित्वं नाम ।

पञ्चमं विधत्ते —

अथ॒ यद॑ग्नीषो॒मीयः॑ । आ॒ग्ने॒यो वै ब्रा॑ह्म॒णः । तौ यदा॒ सं॒गच्छे॑ते ( १ ) । अथ॑ वी॒र्या॑वत्त॒रो भ॑वति, इति ।

अग्नीषोमीय एकादशकपालः कर्तव्यः । ब्राह्मणस्याऽऽग्नेयत्वं पूर्वमुक्तम् ।

तेन पूर्वोक्तं सौम्यत्वमप्युपलक्ष्यते । सावाग्निश्च सोमश्चेत्येतौ यदा सगौत्रा भवतस्तदानीं द्विगुणब्राह्मण्येन वीर्यातिशयो भवति ।

अथ षष्ठं विधत्ते—

अथ यत्सारस्वतः । एतद्धि प्रत्यक्षं ब्राह्मणस्य

वाक्पतीयम्, इति ।

सारस्वतोऽष्टाकपालः कार्यः । ब्राह्मणस्य सरस्वतीसंबन्धित्वं यदस्त्येतत्प्रत्यक्षमेव वाक्पतित्वम् । बृहस्पतिसंबन्धेन तु यद्वाक्पतित्वं पूर्वमुक्तं तच्छास्त्रसिद्धम् । जिह्वायाः सरस्वतीसंबन्धे तु तद्वाक्पतित्वमनुभूयते ।

सप्तमं विधत्ते—

निर्वरुणत्वायैव वारुणः । अथो य एव कश्च

सन्त्सूयते । स हि वारुणः, इति ।

वारुणोऽष्टाकपालः कर्तव्यः । स च पूर्ववद्वरुणपाशराहित्यायैव संपद्यते । अपि च य एव कश्चित्पुमानधमोऽपि सूयतेऽभिषिच्यते स पुमान्वरुणेनानुगृहीतो राजा भवति ।

अष्टमं विधत्ते—

अथ यद्द्यावापृथिव्यः । इन्द्रो वृत्राय वज्रमुद्यच्छत् । तं द्यावापृथिवी नान्वमन्येताम् । तमेतेनैव

भागधेयेनान्वमन्येताम् (२)। वज्रस्य वा एषोऽनुमानार्य । अनुमतवज्रः सूयाता इति, इति ।

द्यावापृथिव्य एककपालः कर्तव्यः । पुरा कदाचिदिन्द्रो वृत्रवधार्थं वज्रमुद्यतवान् । तमिन्द्रं ते द्यावापृथिव्यौ नान्वमन्येताम् । अनुमत्यभावे कारणं दर्शपूर्णमासब्राह्मणे स्पष्टमभिहितम्—" ते अब्रूतां द्यावापृथिवी मा महा(ह)राऽऽवयोर्वै श्रितः" इति । योऽयमेककपालरूपो भागोऽस्ति तेन भागधेयेन तुष्टे द्यावापृथिव्यौ वृत्रवधार्थमुद्यतं वज्रमङ्गीकृतवत्यौ । अतोऽत्रापि यः पुरोडाशः स एव वज्रस्यानुमत्यर्थं संपद्यते । अनुमतवज्रो हि पुरुषः

१ क. ख. एष ।

ऋतुक्षये समर्थत्वात्सूयाता अभिषेकमर्हतीत्येवाभिज्ञा आहुः ।

अधिकृत्वशङ्कानिवारणाय हविःसंख्यां दर्शयति—

अष्टावेतानि हवींषि भवन्ति । अष्टाक्षरा गायत्री । गायत्री ब्रह्मवर्चसम् । गायत्रियैव ब्रह्मवर्चसमवरुन्धे, इति ।

अष्टसंख्योपेतया गायत्र्या ब्रह्मवर्चसहेतुतया ब्रह्मवर्चसप्राप्तिः ।

अभिषेकद्रव्यस्योत्पवनं विधत्ते—

हिरण्येन घृतमुत्पुनाति । तेजस एव रुचे, इति ।

निर्मलद्रव्यत्वात्स्वतोऽपि घृतं तेजोर्थमेव पुनरपि हिरण्योत्पवनेनात्यन्तं दीप्त्यर्थं भवति ।

अभिषेककालीनमाधारं विधत्ते—

कृष्णाजिनेऽभिषिञ्चति । ब्रह्मणो वा एतदृक्सामयो रूपम् । यत्कृष्णाजिनम् । ब्रह्मन्नेवैनमृक्सामयोरध्यभिषिञ्चति, इति ।

कृष्णाजिने समासीनमेनमभिषिञ्चेत् । कृष्णाजिनं च ब्रह्मणो वेदस्य संबन्धिनोर्ऋक्सामयोः स्वरूपम् । “ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठताम्” इत्यन्यत्राऽऽम्नानात् । अतः कृष्णाजिनेऽभिषेकेण ब्रह्मन्नेव वेद एव ऋक्सामयोरुपर्येनमभिषिञ्चति ।

द्रव्यं विधत्ते—

घृतेनाभिषिञ्चति । तथा वीर्यावत्तरो भवति ( ३ ), इति ।

संगच्छेते भागधेयेनान्वमन्येता९ रूपं चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥



घृतस्य वज्ररूपत्वमन्यत्राऽऽम्नातम् "घृतं खलु वै देवा वज्रं कृत्वा" इति। अतो घृतेनाभिषेके वीर्यातिशयो भवति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

अथ सप्तमे चतुर्थोऽनुवाकः।

---

तृतीये ब्राह्मणसवोऽभिहितः। चतुर्थे सोमसवोऽभिधीयते। तस्य सोमयागरूपत्वं निषिध्य पशुरूपत्वं विधत्ते—

न वै सोमेन सोमस्य सवोऽस्ति। हतो ह्येषः। अभिषुतो ह्येषः। न हि हतः सूयते। सौमीꣳ सूतवशामालभते। सोमो वै रेतोधाः। रेत एव तद्दधाति, इति।

सोमेन यागेन सोमस्य देवस्य च सवोऽभिषेको नैवास्ति। यस्मात्कारणाद्य येषु सोमो हतः। हननं कथमिति तदुच्यते—यस्मादेवैष सोमोऽभिषुतस्तस्मादस्ति तस्य हननम्। "घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति" इत्यन्यत्राभिषवस्य हननरूपत्वश्रवणात्। न हि क्वचिदपि हतः पुरुषोऽभिषिच्यमानो दृश्यते। तस्मात्सोमस्याभिषेकसिद्धये सोमयागं परित्यज्य सोमदेवताकां सूतवशामालभते। सकृत्प्रजननात्पश्चाद्वन्ध्या सूतवशा सोमस्य रेतोधारकत्वात्तया देवतया रेत एव धारयति।

अथाभिषेकमन्त्रं विधत्ते—

सौम्यर्चाऽभिषिꣳञ्चति। रेतोधा ह्येषा। रेतः सोमः। रेत एवास्मिन्दधाति, इति।

"अषाढम्" इत्यादिका वक्ष्यमाणा सौमी। यस्मादेषा रेतोधारणहेतुः सोमोऽपि रेतःस्वरूपोऽतः सौम्याभिषेके सत्यस्मिन्यजमाने रेत एव दधाति।

---

१ क. ख. °मो वै रे°।

अथास्मिन्सवे कर्तव्यान्तरं विधत्ते—

यत्किंच॑ राज॒सूय॑मृ॒ते सोम॑म्। तत्सर्वं॑ भवति, इति।

राजसूये हेमपवित्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रधृतिसंज्ञकाः सप्त सोमयागास्तान्वर्जयित्वा यत्किंचिदनुमत्यादिकं सौत्रामण्यन्तं प्रयोगजातं तत्सर्वमस्मिन्सोमसवेऽनुष्ठेयम्। तस्मिन्राजसूयप्रयोगमध्येऽरत्नीनां हविर्भ्य ऊर्ध्वं संसृपां हविर्भ्यः पुरस्तात्सौमी सूनवशाऽऽलब्धव्या तस्याः स्विष्टकृतः पुरस्तादभिषेकः कार्यः।

अभिषेकाय सौमीमृचं पठति—

अषा॑ढं यु॒त्सु पृत॑नासु॒ पप्रि॑म्। सु॒व॒र्षाम॒प्स्वां वृ॒जन॑स्य गो॒पाम्। भ॒रे॒षु॒जाꣳ सु॒क्षि॒तिꣳ सु॒श्रव॑सम्। जय॑न्तं॒ त्वामनु॑ मदेम सोम, (१) इति।

रेतः॒ सोमः॒ स॒प्त च॑॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये चतुर्थोऽनुवाकः॥ ४॥

===

हे सोम वयं त्वामनुसृत्य मदेम हृष्यास्म। कीदृशं त्वां युत्सु युद्धेष्वषाढं सोढुमशक्यं पृतनासु सेनासु पप्रिं पूरकं सुवर्षां सुवः स्वर्गस्यात्यरिष्टं विनाशयतीति सुवर्षास्तं सुवर्षामप्स्वां न केनापि प्सायते भुज्यत इत्यप्सा अप्सा एवाप्स्वास्तं वृजनं पापवर्जनं तस्य गोपां रक्षितारं भरेषु भरणीयेष्वग्निष्टोमादिषु जायते निवसतीति भरेषुजास्तं भरेषुजां सुक्षितिं शोभन(ना)क्षितिर्भूमिर्निवासस्थानं यस्यासौ सुक्षितिस्तं सुष्ठु श्रवः कीर्तिर्यस्यासौ सुश्रवास्तं सुश्रवसं जयन्तं सर्वत्र जयशीलम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

१ क. ख. 'ये हिप'। २ क. ख. स्वर्गेऽरि'।

अथ सप्तमे पञ्चमोऽनुवाकः ।

चतुर्थे सोमसवोऽभिहितः । पञ्चमे पृथिसवोऽभिधीयते । तमेवं विधत्ते--

यो वै सोमेन सूयते । स देवसवः । यः पशुना सूयते । स देवसवः । य इष्ट्या सूयते । स मनुष्यसवः । एतं वै पृथये देवाः प्रायच्छन् । ततो वै सोऽप्यारण्यानां पशूनामसूयत । यावतीः कियतीश्च प्रजा वाचं वदन्ति । तासाꣳ सर्वासाꣳ सूयते (१) । य एतेन यजते । य उ चैनमेवं वेद, इति ।

यः क्रतुः सोमेन सूयते निष्पाद्यते स देवानां योग्यः सवः । यथा पूर्वोक्तो बृहस्पतिसवः । यश्च पशुना निष्पाद्यते वैश्यसवादिः सोऽपि देवानामपि योग्यः सवः । अतस्तदुभयं तथैव तिष्ठतु । यश्च स्वयमिष्ट्या निष्पाद्यते स मनुष्ययोग्यः सवः सर्वेषां सुलभः । तस्मादेतमेव मनुष्यसवं पृथिनाम्ने कस्मैचिद्राज्ञे वेनपुत्राय देवाः प्रायच्छन् । तस्मादेव स मनुष्यसवः । स पृथिरारण्यानामपि पशूनामसूयताधिपतिरासीत्किमुत ग्राम्याणाम् । पृथिनाऽनुष्ठितत्वादयं पृथिसवः । एतेन पृथिसवेन यो यजते, यश्चैनमेवं वेद स द्विविधोऽप्यसौ पुरुषः प्रजाभिरुच्यमानानां तासां सर्वासां वाचां सूयतेऽधिपतिर्भवति । प्रजाश्च यावतीः कियतीश्च यावत्यः कियत्यश्च सन्ति ताः प्रजा वाचं वदन्ति तस्यां वाचि कोऽप्यंशो न परित्यज्यते । एतदभिप्रेत्य तासां सर्वासामिति बहुवचननिर्देशः ।

अस्मिन्पृथिसवेऽभिषेकमन्त्रं विधत्ते--

नाराशꣳस्यर्चाऽभिषिञ्चति । मनुष्या वै नराशꣳसः । निह्नुत्य वाव तत् । अथाभिषिञ्चति, इति ।

१ क. ख. °थं यथा तथा ता ति° । २ क. ख. °मिष्ट्वा नि° ।

नरैः शंसनीयः स्वयमपि मनुष्यरूपो देवविशेषो नराशंसस्तत्संबन्धिनी "ये मे पञ्चाशतम्" इत्यादिका नाराशंसी तयाऽभिषिञ्चेत् । अत्र पूर्वोक्तरीत्या मनुष्यमूर्तय एव देवा ना(न)राशंसशब्देनोच्यन्ते, तत्संबन्ध्यभिषेचनं यदस्त्येतेन निह्नुत्यैवापलप्यैव भवन्तो यतो मनुष्या अतो अवज्ञातीयानस्माननुग्रहीतुमर्हन्तीत्येवं मत्वोऽभ्यैवानन्तरमभिषिञ्चति ।

अस्मिन्पृथिसवे कर्तव्यविशेषं विधत्ते—

यत्किंचं राजसूयमनुत्तरवेदीकम् । तत्सर्वं भवति, इति ।

राजसूये ह्युत्तरवेदियुक्ताः सत्यसोमयागा द्विपशुः पशुबन्धश्चातुर्मास्यानि चैतानि वर्जयित्वा यदन्यदनुमत्यादिकं सौत्रामण्यन्तमस्ति, तत्सर्वमत्र कर्तव्यम् ।

अथ नाराशंसीमृचं पठति—

ये मे पञ्चाशतं ददुः । अश्वानाꣳ सधस्तुतिः । द्युमदंग्ने महि श्रवः । बृहत्कृधि मघोनांम् । नृवदंमृत नृणाम्, (२) इति ।

सूयते सधस्तुतिस्त्रीणि च ॥

इति कृष्णयजुर्वेदीयतैत्तरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

=====

ये मनुष्या मे मह्यमृत्विजेऽश्वानां पञ्चाशतं ददुर्दातुं समर्थास्तेषां मघोनां धनिकानां नृणां मनुष्याणां यजमानानां यज्ञे हेऽग्ने सधस्तुतिः स्तुत्या सहितं श्रवो बृहत्कृधि । कीदृशं श्रवो द्युमदीप्तिमद्धनयुक्तमित्यर्थः । महि महन्नृवत्पुत्रभृत्यादियुक्तम् । अमृतशब्दः संबुद्ध्यन्तोऽग्निविशेषणम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

———

अथ सप्तमे षष्ठोऽनुवाकः।

पञ्चमे पृथिसव उक्तः। षष्ठे गोसव उच्यते—

एष गोसवः। षट्त्रिꣳश उक्थ्यो बृहत्सामा। पव-
माने कण्वरथंतरं भवति, इति।

एष वक्ष्यमाणो गोसवाख्यः क्रतुरनुष्ठेयः। स च सर्वेषु स्तोत्रेषु षट्त्रिंश-
स्तोमयुक्त उक्थ्यसंस्थारूपः। पृष्ठस्तोत्रे बृहत्सामयुक्तः। तस्य पवमान-
स्तोत्रे कण्वरथंतराख्यं साम भवति।

अथ वाजपेयराजसूयाभ्यामुत्कृष्टत्वेनैतं सवं प्रशंसति—

यो वै वाजपेयः। स संम्राट्सवः। यो राजसूयः।
स वरुणसवः। प्रजापतिः स्वाराज्यं परमेष्ठी। स्वा-
राज्यं गौरेव, इति।

योऽयं वाजपेयोऽस्ति सोऽयं साम्राज्यहेतुरेव सवः। यश्च राजसूयः
सोऽपि वरुणैश्वर्यप्राप्तिहेतुरेव सवः। न तु तदुभयमधिकफलप्राप्तिहेतुः।
यस्तु स्वाराज्यं पराधीनत्वमप्राप्तः परमेष्ठी परमे पदे स्थितः प्रजापतिरस्ति
स तु सर्वेभ्यः फलेभ्योऽधिकफलभूतः। स्वाराज्यं हि सर्वैः प्रार्थ्यते।
स्वाराज्यं नाम गौरेव गोसव एव स्वाराज्यप्राप्तिहेतुत्वात्।

एतदनुष्ठानं तद्वेदनं च प्रशंसति—

गौरिव भवति (१)। य एतेन यजते। य उ चैन-
मेवं वेद, इति।

यथा गौररण्ये स्वच्छन्दचार्येवमयं ब्रह्मलोकेऽपि स्वतन्त्रो भवति। बृह-
त्सामेति यदुक्तं तदेव सामद्वयरूपेण प्रशंसति—

उभे बृहद्रथंतरे भवतः। तद्धि स्वाराज्यम्, इति।

अत्रैकेनैव बृहत्साम्ना सामद्वयसाध्योऽतिशयः क्रियते। अतस्तद्धि बृह-
त्सामानुष्ठानमेव स्वाराज्यप्राप्तिहेतुः।

---

१ क. ख. 'नैनं स'।

दक्षिणायां विशेषं विधत्ते—

अयुतं दक्षिणाः । तद्धि स्वाराज्यम्, इति ।

गवामयुतमत्र दक्षिणात्वेन दातव्यम् ।

अभिषेकद्रव्यं विधत्ते—

प्रतिधुषाऽभिषिञ्चति । तद्धि स्वाराज्यम्, इति ।

प्रतिधुषा तदानीमेव दुग्धेन क्षीरेणाभिषिञ्चेत् । सोऽयमभिषेकोऽयुतगोप्राप्तिवत्स्वाराज्यहेतुः ।

अथाभिषेकस्य देशकालौ विधत्ते—

अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहतस्तोत्रं प्रत्यभिषिञ्चति । इयं वाव रथंतरम् (२) । असौ बृहत् । अनयोरेवैनमनन्तर्हितमभिषिञ्चति, इति ।

वेद्यै वेद्या मध्य आहवनीयस्य दक्षिणभागे योऽयमनुद्धतदेशोऽस्ति सोऽयमभिषेकस्य योग्यो देशस्तस्मिन्देशेऽभिषिञ्चेत् । बृहतस्तोत्रं प्रति बृहत्साम्ना क्रियमाणं स्तोत्रं यदा प्रवर्तते तदाऽभिषिञ्चेत् । यदिदं कण्वरथंतरं पवमानस्तोत्रे प्रवृत्तं तद्भूमिस्वरूपं यच्च पृष्ठस्तोत्रे बृहत्साम तद्द्युलोकरूपं तयोरुभयोर्लोकयोर्मध्येऽनन्तर्हितं व्यवधानरहितमेवैनं यजमानमभिषिञ्चति ।

षट्त्रिंश उक्थ्यो बृहत्सामेति यत्पूर्वमुक्तं तत्र स्तोमं प्रशंसति—

पशुस्तोमो वा एषः । तेन गोसवः । षट्त्रिंशः सर्वः, इति ।

यस्मादेष क्रतुः पशुहेतुना स्तोमेन युक्तस्तेन गोसव इत्युच्यते । पशुहेतुस्तोमयुक्तत्वमेव षट्त्रिंश इत्यनेन विशदी क्रियते । "षट्त्रिंशदक्षरा बृहती बार्हताः पशवः" इत्यन्यत्राऽऽम्नातम् । अतोऽस्मिन्गोसवे सर्वोऽपि स्तोमः षट्त्रिंश एव क्रियते न तु त्रिवृदादिः ।

---

१ क. ख. °कस्वरू° ।

अथाभिषेकार्थमन्त्रमाह—

रेवज्जातः सहसा वृद्धः । क्षत्राणां क्षत्रभृत्तमो वयोधाः । महान्महित्वे तस्तभानः । क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि, इति ।

हे यजमान त्वं रेवद्धनवज्जीवनं यथा भवति तथा जातः प्रवृत्तः, सहसा वृद्धो बलेनाधिकः क्षत्राणां बलवतां मध्ये क्षत्रभृत्तमोऽतिशयेन बलवान्वयोधा दीर्घायुष्यधारी महान्विद्याचारादिगुणैरधिको महित्वे पूज्यत्वे तस्तभानः स्थिरं वर्तमानः । क्षत्रे बलकार्ये राष्ट्रे जनपदे च जागृह्यप्रमत्तो वर्तस्व । परमेष्ठिन उत्तमे पदे स्थितस्य प्रजापतेः संबन्धिना स्वाराज्येन पराधीनरहितत्वेन राज्येन निमित्तेन त्वामभिषिञ्चामि ।

तमेतं मन्त्रं विधत्ते—

इत्याह । स्वाराज्यमेवैनं गमयात (३), इति ।

इव भवति रथंतरमाहैकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

इत्युक्तमेतं मन्त्रमेतदभिषेककाले पठेत्तेन पाठेनैनं यजमानं स्वाराज्यं प्रापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

१ क. °त्तो भव । प° ।

अथ सप्तमे सप्तमोऽनुवाकः ।

षष्ठे गोसवोऽभिहितः । सप्तम ओदनसवोऽभिधीयते । कल्पः—" ओदनसवेनान्नाद्यकामो रोहिण्यां यजेत । उपव्युषं श्रपयति दर्विहोमो भवत्युदित आदित्ये सिꣳहे व्याघ्र इति चतस्र आहुतीरोदनाद्धुत्वा " इति । तत्र प्रथमामृचमाह—

सिꣳहे व्याघ्र उत या पृदाकौ । त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना, इति ।

पृदाकुर्मनुष्यनिगरणसमर्थोऽजगरः । सिंहादिष्वग्न्यादिषु च येयं त्विषिरप्रधृष्यत्वलक्षणं तेजस्तदभिमानिनी या देवी सुभगा सौभाग्ययुक्ता सतीन्द्रं परमैश्वर्ययुक्तं पुरुषं जजानोत्पादयामास । सा देवी वर्चसा बलेन संविदानैकमत्यं गता सती नोऽस्मान्प्रत्यागत्यागच्छतु ।

अथ द्वितीयामाह—

या राजन्ये दुन्दुभावायतायाम् । अश्वस्य क्रन्द्ये पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना, इति ।

राजन्ये क्षत्रिय आयतायां वाद्यमानायां दुन्दुभावश्वस्य क्रन्द्ये क्रन्दने हेषिते पुरुषस्य मायौ सिंहनादादिशब्दे । एतेषु या त्विषिर्गाम्भीर्यलक्षणा तदभिमानिनी । या देवीत्यादि पूर्ववत् ।

अथ तृतीयामृचमाह—

या हस्तिनि द्वीपिनि या हिरण्ये । त्विषिरश्वेषु पुरुषेषु गोषु (१) । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना, इति ।

नगरे जातस्तत्रैव वर्तमानो हस्ती । अरण्ये जातस्तत्रैव वर्तमानो द्वीपीत्य-

---

१ क. ख. ग्रामे ।

वान्तरभेदः । द्वीपी मृगान्तरं वा । हस्त्यादिष्वश्वादिषु च या त्विषिर्महार्घ-स्वलक्षणा तदभिमानिनी । या देवीत्यादि पूर्ववत् ।

अथ चतुर्थीमाह—

रथे अक्षेषु वृषभस्य वाजे । वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना, इति ।

वाजो वेगः । शुष्मो बलम् । रथादिषु वातादिषु च या त्विषिः स्वस्व-कार्यक्षमलक्षणा तदभिमानिनी । या देवीत्यादि पूर्ववत् ।

कल्पः—"राडसीत्येतैः प्रतिमन्त्रं मन्थान्कल्पयन्त्याज्यमन्थं ब्राह्मणः पयोमन्थं राजन्यो दधिमन्थं वैश्य उदमन्थं शूद्रः" इति । तान्मन्त्रानाह—

राडसि विराडसि । सम्राडसि स्वराडसि, इति ।

हे आज्यमन्थ त्वं राडसि राजमानोऽसि । विविधं राजत इति विराट् । सम्यग्राजत इति सम्राट् । स्वातन्त्र्येण राजत इति स्वराट् ।

कल्पः—"इन्द्राय त्वा तेजस्वते तेजस्वन्तं श्रीणामि, इति ब्राह्मणः सक्तुभिराज्यं श्रीत्वा "तेजोऽसि" इत्यभिमन्त्र्य "तत्ते प्रयच्छामि, इति यजमानाय प्रयच्छति । 'तेजस्वदस्तु मे मुखम्' इति प्रतिगृह्य भक्षयति । एवमितरेषामुत्तरोत्तरश्रयणोऽभिमन्त्रणः प्रदानो भक्षणश्च यथालिङ्गम्" इति । तत्र श्रयणमन्त्राणां पाठस्तु—

इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि । इन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामि (२) । इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि । इन्द्राय त्वाऽऽयुष्मत आयुष्मन्तꣳ श्रीणामि, इति ।

हे आज्यमन्थ त्वां तेजोयुक्तेन्द्रार्थं तेजस्वन्तं त्वां सक्तुभिः सह श्रीणामि पचामि । आज्यस्य तेजोरूपत्वेन तेजस्त्वम् । एवं पयोमन्थादिषु योज्यम् । ओजसो बलहेतुत्वात्पयोमन्थ ओजस्वान् । दर्शेष्टौ च "ऐन्द्रं पयः" इत्या-

त्कानादिन्द्रस्य पयस्वत्त्वम् । दधिमन्थस्य पयोविकारत्वेन पयस्वत्त्वम् । चिरजीवित्वादिन्द्रस्याऽऽयुष्मत्त्वम् । उदमन्थस्याऽऽयुर्हेतुत्वादायुष्मत्त्वम् ।

आज्यमन्थस्याभिमन्त्रणार्थांस्त्रीन्मन्त्रानाह—

तेजोऽसि । तत्ते प्रयच्छामि । तेजस्वदस्तु मे मुखम् । तेजस्वच्छिरो अस्तु मे । तेजस्वान्विश्वतः प्रत्यङ् । तेजसा संपिपृग्धि मा, इति ।

हे आज्यमन्थ त्वं तेजोरूपोऽसि । हे यजमान तन्मन्थद्रव्यं ते तुभ्यं प्रयच्छामि । मे मम यजमानस्य मुखं तेजोयुक्तमस्तु । शिरोऽपि तेजस्वदस्तु । हे मन्थ त्वं तेजस्वान्भूत्वा विश्वतः सर्वस्मात्प्रत्यङ्प्रत्यासन्नः सन्मां तेजसा संपिपृग्धि संपृक्तं कुरु ।

पयोमन्थस्याभिमन्त्रणार्थांस्त्रीन्मन्त्रानाह—

ओजोऽसि । तत्ते प्रयच्छामि (३) । ओजस्वदस्तु मे मुखम् । ओजस्वच्छिरो अस्तु मे । ओजस्वान्विश्वतः प्रत्यङ् । ओजसा संपिपृग्धि मा, इति ।

ओजो बलम् । अन्यत्पूर्वव्याख्येयम् ।

दधिमन्थस्याभिमन्त्रणार्थांस्त्रीन्मन्त्रानाह—

पयोऽसि । तत्ते प्रयच्छामि । पयस्वदस्तु मे मुखम् । पयस्वच्छिरो अस्तु मे । पयस्वान्विश्वतः प्रत्यङ् । पयसा संपिपृग्धि मा (४), इति ।

दधिमन्थस्य पयोविकारत्वात्पयस्त्वम् । मुखस्य पयोभोजित्वात्पयस्वत्त्वम् । शिरःशब्देन कृत्स्नो देह उपलक्ष्यते । तस्य पयोजन्यशक्तिमत्त्वात्पयस्वत्त्वम् । अन्यत्पूर्ववत् ।

उदकमन्थस्याभिमन्त्रणादीन्मन्त्रानाह—

आयुरसि । तत्ते प्रयच्छामि । आयुष्मदस्तु मे मुखम् ।
आयुष्मच्छिरो अस्तु मे । आयुष्मान्विश्वतः प्रत्यङ् ।
आयुषा संपिपृग्धि मा, इति ।

उदमन्थस्याऽऽयुर्हेतुत्वादायुष्ट्वम् । अन्यत्पूर्ववत् ।

कल्प—"ओदनशेषं यजमानः प्राश्नाति, इममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमाभिमन्त्रयते" इति । पाठस्तु—

इममग्न आयुषे वर्चसे कृधि । प्रियꣳ रेतो वरुण सोम
राजन् । मातेवास्मा अदिते शर्म यच्छ । विश्वे
देवा जरदष्टिर्यथा सत् (५), इति ।

हेऽग्ने, इमं यजमानमायुषे दीर्घायुष्ट्वाय, वर्चसे बलाय च कृधि समर्थं कुरु । हे वरुण प्रियं कृध्यभीष्टं कुरु । हे सोम राजन्, रेतः कृधि प्रजोत्पादनसामर्थ्यं कुरु । हेऽदितेऽस्मै यजमानाय मातेव शर्म यच्छ सुखं देहि । हे विश्वे देवा अयं यजमानो 'जरदष्टिर्यथा सत्' जराप्राप्तिमान्यथा भवति, तथा कुर्वन्तु । चिरजीविनं कुर्वन्त्वित्यर्थः ।

कल्पः—"हिरण्यं यजमानाय बध्नाति 'आयुरसि विश्वायुरसि' इत्याबध्यमानो जपति" इति । पाठस्तु—

आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि, इति ।

हे हिरण्य त्वमायुर्हेतुरसि । न केवलं ममैवाऽऽयुर्हेतुः किंतु विश्वेषां मनुष्याणां, सर्वेषां देवानां चाऽऽयुर्हेतुरसि । तस्मात्त्वमेव सर्वायुरसि ।

कल्पः—"तैरेनं संसृष्टैरभिषिञ्चति यतो वातो मनोजवाः" इति । तैरपां ग्रहैः । पाठस्तु—

यतो वातो मनोजवाः । यतः क्षरन्ति सिन्धवः ।

तासां त्वा सर्वासां रुचा। अभिषिञ्चामि वर्चसा, इति।

यतो यस्या रुचो दीप्तेर्वेगवान्वातः प्रवर्तते। पुनरपि यतः सिन्धवो नद्यो मनोजवा मनोवेगयुक्ताः सत्य क्षरन्ति प्रवहन्ति। तासां सर्वासामपां संबन्धिन्या रुचा त्वां यजमानं वर्चसा बलनिमित्तमभिषिञ्चामि।

कल्प —"समुद्र इवासि गह्मनेत्येनमभिमन्त्रय" इति। पाठस्तु—

समुद्र इवासि गह्मना। सोम इवास्यदाभ्यः। अग्निरिव विश्वतः प्रत्यङ्। सूर्य इव ज्योतिषा विभूः (६), इति।

हे यजमान त्वं गह्मना गाम्भीर्येण समुद्र इवासि समुद्रसमोऽसि। सोमवददाभ्यः केनाप्यप्रधृष्योऽसि। अग्निरिव विश्वतः सर्वस्मात्प्रत्यङ्प्रत्यासन्नोऽसि। अग्निर्ह्युदरमध्यवर्तित्वात्प्रत्यासन्नः। सूर्य इव ज्योतिषा व्याप्तोऽसि।

कल्पः—"अपां ग्रहान्गृह्णन्ति। ये मन्थान्कल्पयन्ति 'अपां यो द्रवणे रसः' इत्येतैः प्रतिमन्त्रम्" इति। तानेतांश्चतुरो मन्त्रानाह—

अपां यो द्रवणे रसः। तमहमस्मा आमुष्यायणाय। तेजसे ब्रह्मवर्चसाय गृह्णामि। अपां य ऊर्मौ रसः। तमहमस्मा आमुष्यायणाय। ओजसे वीर्याय गृह्णामि। अपां यो मध्यतो रसः। तमहमस्मा आमुष्यायणाय। पुष्ट्यै प्रजननाय गृह्णामि। अपां यो यज्ञियो रसः। तमहमस्मा आमुष्यायणाय। आयुषे दीर्घायुत्वाय गृह्णामि (७), इति।

गोष्वोजस्वन्तः श्रीणाम्योजोऽसि तत्ते प्रयच्छामि पयसा संपिपृग्धि मा संद्धि

भुर्यांङ्गिरो रसो द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

===

अपां संबन्धिनि द्रवणे द्रवीभावे यो रसः सारस्तं रसमहमामुष्यायणामामुष्य देवदत्तस्य पुत्रायास्मै यज्ञदत्ताख्याय यजमानाय तेजोब्रह्मवर्चसयोः सिद्ध्यर्थं गृह्णामि । एवमुत्तर त्रयो मन्त्रा व्याख्येयाः ।

अत्र विनियोगसंग्रहः-

स्यादोदनसवे होमः सिंहे मन्त्रचतुष्टयात् ।
राट्चतुर्भिश्चतुर्मन्थान्कल्पयेद्ब्राह्मणादयः ॥ १ ॥
आज्यं क्षीरं दधि जलं द्रव्याण्येषां क्रमादिह ।
श्रीणन्ति सक्तुभिर्मन्थानिन्द्रायेति चतुष्टयान् ॥ २ ॥
तेजोऽसीत्याज्यमन्थस्य मन्त्रणं तत्त इत्यतः ।
तं मन्थं स्वामिने दद्यात्तेजस्वद्भक्षयेदयः ॥ ३ ॥
क्षीरादिमन्थेऽप्योजोऽसीत्यादिमन्त्रास्तथैव हि ।
स्वादन्वं मन्त्रयेत्स्वमायुस्तु स्वामिनो जपः ॥ ४ ॥
यतोऽभिषिच्याभिषिक्तं समुद्रो मन्त्रयेत हि ।
अपामित्यभिषेकाय गृह्णन्ति हि जलग्रहान् ॥
अनुवाके सप्तमेऽस्मिन्मन्त्रा द्वात्रिंशदीरिताः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ सप्तमेऽष्टमोऽनुवाकः ।

---

सप्तमेऽनुवाक ओदनसवस्य होमादिमन्त्रा उक्ताः । अष्टमे रथारोहणमन्त्रा उच्यन्ते । कल्पः—"अग्रेणाऽऽहवनीयं रथोऽवस्थितो भवति । 'अभिप्रेहि' इति तं यजमानोऽभ्येति" इति । पाठस्तु—

अभिप्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा, इति ।

---

१ क. ख. °वन्धिद° । २ क. ख. °षिचैतैरेषं स° ।

हे यजमान रथमभिलक्ष्य प्रेहि प्रकर्षेण गच्छ। गत्वा च वीरथस्व विक्रमं कुरु। उग्रस्तीव्रशासनश्चेत्ता जयोपायाभिज्ञः सपत्नहा वैरिघाती च भव।

कल्पः—"आतिष्ठ मित्रवर्धन इत्यारोहन्तमभिमन्त्रयते" इति। पाठस्तु—

आति॑ष्ठ मित्र॒वर्ध॑नः। तुभ्यं॑ दे॒वा अधि॑ब्रुवन्, इति।

हे यजमान त्वं मित्राभिवृद्धिहेतुः सन्रथमातिष्ठाऽऽरोह। देवास्तुभ्यं त्वदर्थमधिब्रुवन्नधिकोऽयं यजमान इति ब्रुवन्तु।

कल्पः—"अङ्क्तौ न्यङ्क्वाविति रथचक्रे अभिमृशति पक्षसी वा। 'आतिष्ठ वृत्रहन्' इति पञ्चभिरारूढम्" इति। अभिमन्त्रयत इत्यनुवर्तते। अत्र चक्रस्पर्शनहेतोर्ऋचोऽभिमन्त्रणमन्त्रणेषु प्रथमाया ऋचश्च प्रतीके दर्शयति—

अ॒ङ्क्तौ न्य॒ङ्क्ताव॒भित॒ आति॑ष्ठ वृत्रह॒न्रथ॑म्, इति।

अङ्क्तौ न्यङ्क्तावभितो रथं यावित्येषा संहितायाः प्रथमकाण्डे देव सवितः प्रसुवेत्यनुवाके व्याख्याता। "आतिष्ठ वृत्रहन्" इत्येषा गृहकाण्डे व्याख्याता।

अथ द्वितीयामृचमाह—

आ॒तिष्ठ॑न्तं॒ परि॒ विश्वे॑ अभूषन्। श्रियं॒ वसा॑नश्चरति॒ स्वरो॑चाः। म॒हत्तद॒स्यासु॑रस्य॒ नाम॑। आ वि॒श्वरू॑पो अ॒मृता॑नि तस्थौ, इति।

आतिष्ठन्तं रथमारोहन्तं यजमानं विश्वे देवाः सर्वेऽपि देवाः पर्यभूषन्परितोऽलंकृतवन्तः। अयं च रथस्त्वयाऽधिष्ठितः श्रियं वसान आच्छादयंस्त्वयि सर्वसंपदं कुर्वन्नित्यर्थः। स्वरोचाः स्वायत्तदीप्तिः संश्चरति प्रवर्तते। असुरस्य शत्रूणां निरसितुर्मित्राणां वा प्राणप्रदस्यास्य रथस्य तन्नाम महदधिकम्। त्वदीयो रथ आयातीति श्रुत्वा शत्रवः पलायन्त इत्यर्थः। एवंविधो रथो विश्वरूपो बहुदेशसंचारेण बहुविधरूपः सन्नमृतान्यमरणसाधनानि फलान्यातस्थौ संपादयति।

अथ तृतीयामाह—

अनु॒ त्वेन्द्रो॑ मद॒त्वनु॒ बृह॒स्पतिः (१)। अनु

सोमो अन्वग्निरावीत् । अनु त्वा विश्वे देवा अवन्तु ।
अनु सप्त राजानो य उताभिषिक्ताः, इति ।

हे यजमान रथमातिष्ठन्तं त्वामिन्द्रबृहस्पतिसोमा अनुमदन्त्वनुमोदन्तामङ्गी कुर्वताम् । अग्निरपि त्वामनुक्रमेणाऽऽवीःद्रक्षतु । ये विश्वे देवास्तेऽपि त्वामनुक्रमेणावन्तु । उतापि च सप्त राजानस्त्वदीयादिग्व्यतिरिक्ताः सप्तसु दिक्षु वर्तमाना राजानोऽभिषिक्ता ये सन्ति ते सर्वेऽपि त्वामनुमोदन्तु ।

अथ चतुर्थीमाह—

अनु त्वा मित्रावरुणाविहावताम् । अनु द्यावापृथिवी विश्वशंभू । सूर्यो अहोभिरनु त्वाऽवतु । चन्द्रमा नक्षत्रैरनु त्वाऽवतु, इति ।

मित्रावरुणाविह कर्मणि त्वामनु क्रमेण रक्षताम् । विश्वशंभू विश्वस्य सुखस्य भावयित्र्यौ द्यावापृथिव्यौ त्वामनुरक्षताम् । सूर्योऽयमहोभिः सह त्वामन्ववतु । चन्द्रमा नक्षत्रैः सह त्वामनुरक्षतु ।

अथ पञ्चमीमाह

द्यौश्च त्वा पृथिवी च प्रचेतसा । शुक्रो बृहद्दक्षिणा त्वा पिपर्तु । अनु स्वधा चिकिताꣳ सोमो अग्निः । आऽयं पृणक्तु रजसि उपस्थम् ( २ ), इति ।

बृहस्पतिः सोमो अग्निरेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

====

द्यौश्च पृथिवी चेत्येते प्रचेतसा प्रकृष्टज्ञानयुक्ते सत्यौ त्वां रक्षताम् । योऽयं सोमयागे शुक्राख्यो ग्रहः स त्वां पिपर्तु पालयतु । तथा बृहत्साम त्वां पिपर्तु । दक्षिणा त्वां पिपर्तु । स्वधाशब्दोपलक्षितमन्नं त्वामनुचिकित्सतां देवा-

१ क. ख. तवारिष्टं ।

निष्टं निवारयस्वित्यर्थः । तथा सोमोऽग्निश्चेत्येतावुभौ त्वदीयमनिष्टं निवारयेताम् । अयं रथो रजसी रञ्जनात्मके द्यावापृथिव्यावुपस्थं तत्समीपे स्थितमन्तरिक्षं चाऽऽपृणक्तु सर्वतः स्वेन संपृक्तानि करोतु । स्वयं लोकत्रयं व्याप्नोत्वित्यर्थः ।

अत्र विनियोगसंग्रहः—

अभीति रथमभ्येति ह्यातिष्ठेत्यभिमन्त्रणम् ।
अङ्गौ चक्रे स्पृशेदाभिमन्त्रयेद्रथसंस्थितम् ॥
पञ्चभिश्चैवमन्त्रोक्ता अष्टौ मन्त्राः क्रमादमी ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ सप्तमे नवमोऽनुवाकः ।

---

अष्टमेऽनुवाक ओदनसवगता रथारोहणमन्त्रा उक्ताः । सोऽयमोदनसवो नवमेऽभिधीयते । तमेतं विधत्ते—

प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन् । स एतं प्रजापतिरोदनमपश्यत् । सोऽन्नं भूतोऽतिष्ठत् । ता अन्यत्रान्नाद्यमवित्त्वा । प्रजापतिं प्रजा उपावर्तन्त । अन्नमेवैनं भूतं पश्यन्तीः प्रजा उपावर्तन्ते । य एतेन यजते । य उ चैनमेवं वेद, इति ।

प्रजापतिना सृष्टाः प्रजा अन्नार्थिन्यस्तदन्वेषणाय पुनरावृत्तिरहितारायन्यत्र क्वापि गताः । तदानीं प्रजापतिरन्नहेतुमोदनसवं दृष्ट्वा तदनुष्ठानेनान्नं प्राप्तोऽतिष्ठत् । ताश्च प्रजा अन्यत्रान्नमलब्ध्वा पुनः प्रजापतिं प्रत्यागताः । यो यजमान एतेनौदनसवेन यजते यश्चैनमोदनसवं सम्यग्वेद वेत्ति तमेतमुभयविधं पुरुषमन्नप्राप्तियुक्तं दृष्ट्वा प्रजाः सर्वा आगच्छन्ति ।

पूर्वोक्तैः 'सिंहे व्याघ्रे' इत्यादिभिर्मन्त्रैर्यदन्नं होतव्यं तदिह विधत्ते—

सर्वाण्यन्नानि भवन्ति (१)। सर्वे पुरुषाः।
सर्वाण्येवान्नान्यवरुन्धे। सर्वान्पुरुषान्, इति।

व्रीहिप्रियङ्गुश्यामाकादिभिर्निष्पाद्यानि यावन्त्यन्नानि संभवन्ति तावन्ति सर्वाण्यत्र कर्तव्यानि कर्तारश्च ब्राह्मणक्षत्रियवैश्यशूद्राः सर्वे पुरुषाः। तेन सर्वान्नसर्वपुरुषसमृद्धिः प्राप्यते।

मन्थकल्पनमन्त्राणां तात्पर्यं दर्शयति—

राडसि विराडसीत्याह। स्वाराज्यमेवैनं गमयति, इति।

राडसीत्यादींश्चतुरो मन्त्रान्पठेत्तेन स्वाराज्यप्राप्तिः।

यदुक्तं सूत्रकारेण—"हिरण्यं ब्राह्मणाय ददाति। त्रिसृधन्वं राजन्याय। अष्ट्रां वैश्याय। माषकमण्डलुं शूद्राय" इति। तदेतत्सर्वं विधत्ते—

यद्धिरण्यं ददाति। तेजस्तेनावरुन्धे। यत्त्रिसृधन्वम्। वीर्यं तेन। यदष्ट्राम् (२)। पुष्टिं तेन। यत्कमण्डलुम्। आयुस्तेन, इति।

त्रिसृभिरिषुभिः सहितं धनुरुक्तत्रिसृधन्वम्। अष्ट्रा फालं लाङ्गलाग्रस्था लोहशलाकेत्यर्थः।

कर्णे हिरण्याभरणबन्धनं विधत्ते—

यद्धिरण्यमाबध्नाति। ज्योतिर्वै हिरण्यम्। ज्योतिरेवास्मिन्दधाति। अथो तेजो वै हिरण्यम्। तेज एवाऽऽत्मन्धत्ते, इति।

हिरण्यगता दीप्तिर्ज्योतिस्तद्धारणेन मुखस्य शोभनत्वं तेजः।

---

१ क. ख. °भिर्मन्त्रै°।

होमद्रव्यशेषप्राशनं विधत्ते—

यदोदनं प्राश्नाति। एतदेव सर्वमवरुध्य (३)। तदस्मिन्नेकधाऽधात्, इति।

सर्वान्नशेषभक्षणे सत्येतत्सर्वमन्नजातं संपूर्णं संपाद्य तत्संपादितमस्मिन्यजमान एकधाऽधादेकीकृत्य स्थापयति।

ओदनसवप्रयोगस्य नक्षत्रविशेषं विधत्ते—

रोहिण्यां कार्यः। यद्ब्राह्मण एव रोहिणी। तस्मादेव। अथो वर्ष्मैवैन समानानां करोति, इति।

यस्मात्कारणाद्रोहिणीनक्षत्रं ब्राह्मणवत्प्रशस्तं तस्मादेव कारणाद्रोहिण्यामयं कार्यः। 'सप्त सप्त क्रमाज्ज्ञेया विप्राद्याः कृत्तिकादयः' इति ज्योतिःशास्त्रे ब्राह्मणनक्षत्रेषु सप्तस्ववस्थितत्वाद्रोहिण्या ब्राह्मणत्वम्। अपि च रोहिण्यां कुर्वन्नेनं यजमानं समानानां सर्वेषां शिरःस्थानीयं करोति।

रोहिणीनक्षत्रदिनेऽप्युदयकालं विधत्ते—

उद्यता सूर्येण कार्यः। उद्यन्तं वा एतः सर्वाः प्रजाः प्रतिनन्दन्ति, इति।

उदयं गच्छता सूर्येण सहायं सवः कर्तव्यः, सूर्योदयस्य सर्वपुरुषानन्दहेतुत्वात्तत्रानुष्ठानं प्रशस्तम्।

वेदनं प्रशंसति—

दिदृक्षेण्यो दर्शनीयो भवति। य एवं वेद, इति।

दिदृक्षेण्यो दर्शनेच्छाविषय उपास्य इत्यर्थः। दर्शनीयः सुरूपः।

यदुक्तं सूत्रकारेण—"अथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति। अवभृथप्रत्याम्नायो भवतीति विज्ञायते" इति। तदिदं विधत्ते—

ब्रह्मवादिनो वदन्ति (४)। अवेत्योऽवभृथा ३ ना ३ इति। यद्दर्भपुञ्जीलैः पव-

---

१ ग. °या शरीरस्था°।

यंति । तत्स्विष्टदेवाचैति । तन्नावैति, इति ।

अस्मिन्नोदनसवे किमवभृथः कार्यो न वेति ब्रह्मवादिनां विचारार्थेयं श्रुतिः । तदनुष्ठाने तु क्रियाबाहुल्यम् । अनुष्ठानाभावे शुद्ध्यभाव इति तेषामभिप्रायः । तत्र दोषद्वयरहितमिदमुत्तरम् । दर्भपुञ्जीलशब्देन कतिपयदर्भनाडीयुक्ताः शाखाविशेषा उच्यन्ते । तैः शोधने सति तदेवावभृथाख्यं कर्मावैति स्विदनुष्ठितवदेव शुद्धेः संपन्नत्वात् । तस्मान्नानुष्ठितमपि क्रियाबाहुल्याभावात् ।

दर्भपुञ्जीलसंख्यां विधत्ते—

त्रिभिः पंवयति । त्रयं इमे लोकाः । एभिरेवैनं लोकैः पंवयति । अथो अपां वा एतत्तेजो वर्चः । यद्दर्भाः । यद्दर्भपुञ्जीलैः पवयति । अपामेवैनं तेजंसा वर्चसाऽभिषिंञ्चति ( ५ ), इति ।

भवन्त्यष्टावनरुध्यं वदन्ति दर्भा यर्द्दर्भपुञ्जीलैः पवयत्येकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये नवमोऽनुवाकः ॥ ९ ॥

त्रित्वसंख्याया लोकसाम्याल्लोकैः शुद्धिः कृता भवति । अपि च दर्भाणामुदकसारत्वाद्बलहेतुत्वाच्च सारबलाभ्यामयं शोधितो भूत्वाऽभिषिक्तो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ सप्तमे दशमोऽनुवाकः ।

नवमेऽनुवाक ओदनसवोऽभिहितः । दशमे पञ्चशारदीयविधिरुच्यते । स च सूत्रकारेण स्पष्टमुदाहृतः—" पञ्चशारदीयेन बहोर्भूयान्भवति । अनुवत्सरं पशुबन्धेन यजते । सप्तदश पृश्नीनुक्षणः पञ्चवर्षानानयन्ति । सप्तदश पृश्नीर्वत्सतर्यः स्त्रीवत्सा अप्रवीताः[1] । प्रोक्षितान्पर्यग्निकृतानुक्ष्ण उत्सृजन्ति

1 ग. अप्रतीताः ।

वत्सतरीरालभन्ते" इति। तमिमं पञ्चशारदीयं विधत्ते—

प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति। स एतं पञ्च-शारदीयमपश्यत्। तमाहरत्। तेनायजत। ततो वै स बहोर्भूयानभवत्। यः कामयेत बहोर्भूयान्त्स्यामिति। स पञ्चशारदीयेन यजेत। बहोरेव भूयान्भवति, इति।

बहोर्धनप्रजादिसमृद्धादन्यपुरुषादपि भूयानत्यन्तसमृद्धः। पञ्चसु शरत्सु संवत्सरेष्वनुष्ठेयः पञ्चशारदीयः। स्पष्टमन्यत्।

तमेवं प्रशंसति—

मरुत्स्तोमो वा एषः। मरुतो हि देवानां भूयिष्ठाः (१), इति।

स्तोमशब्देन स्तोमयुक्तो यज्ञ उपलक्ष्यते। मरुत्संज्ञकानां देवगणानां संबन्धी स्तोमो मरुत्स्तोमः। मरुतो ह्येतस्यानुष्ठानेन देवानां मध्येऽत्यन्तं समृद्धाः संपन्नाः।

यागं वेदनं च प्रशंसति—

बहुर्भवति। य एतेन यजते। य उ चैनमेवं वेद, इति।

संवत्सरसंख्यां प्रशंसति—

पञ्चशारदीयो भवति। पञ्च वा ऋतवः संवत्सरः। ऋतुष्वेव संवत्सरे प्रतितिष्ठति। अथो पञ्चाक्षरा पङ्क्तिः।

---

१ क. यागवेदने प्र°।

पाङ्क्तो यज्ञः । यज्ञमेवावरुन्धे, इति ।

पञ्चसंख्यासामान्यादृतुद्वारा संवत्सरे प्रतिष्ठा । तथा पङ्क्तिच्छन्दोद्वारा यज्ञप्राप्तिः ।

स्तोमानामवधिं विधत्ते—

सप्तदशꣳ स्तोमा नातियन्ति । सप्तदशः प्रजापतिः ।
प्रजापतेराप्त्यै (२), इति ।

भूयिष्ठा यन्ति द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमा-
ध्याये दशमोऽनुवाकः ॥ १० ॥

त्रिवृदादिस्तोमाः सप्तदशं स्तोमं नातिक्रामन्ति । तमेतमनतिक्रामं सूत्रकारः स्पष्टमुदाजहार—"उत्तमीरालभ्य दीक्षन्ते त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदशोऽग्निः सप्तदशोऽतिरात्रः" इति । पञ्चमे संवत्सरे वत्सतरीर्हि चरमभाविनीरालभ्य पश्चात्पञ्चरात्राय दीक्षयित्वा क्रमेण त्रिवृदग्निष्टोमादीनि पञ्चाहान्यनुष्ठेयानि । तेषु पञ्चस्वप्यहःस्वेकविंशत्रिणवादयः स्तोमा न विद्यन्ते । सोऽयं सप्तदशस्तोमानतिक्रमः । 'आश्रावय' इत्याद्यक्षरात्मकत्वेन प्रजापतिः सप्तदशः । अतस्तदनतिक्रमः प्रजापतेः प्राप्त्यै भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अथ सप्तम एकादशोऽनुवाकः ।

दशमे पञ्चशारदीयविधिरुक्तः । एकादशे तदीयपशुविधिरुच्य । तत्राऽऽदौ सामविशेषं विधत्ते—

अगस्त्यो मरुद्भ्य उक्ष्णः प्रौक्षत् । तानिन्द्र आदत्त । त एनं वज्रमुद्यत्याभ्यायन्त । तानगस्त्यश्चैवेन्द्रश्च कयाशुभीयेनाशमयताम् । ताञ्छान्ता-

नुपाह्वयत । यत्कयाशुभीयं भवति शान्त्यै, इति ।

अगस्त्यो महर्षिर्मरुत उद्दिश्योक्ष्णो वृषभान्पशून्प्रोक्षितवान्, तान्मरुदर्थं प्रोक्षितान्पशूनिन्द्रोऽपजहार । तदा ते मरुतो हस्तैर्वज्रमुद्यम्यैनमिन्द्रमभिलक्ष्य हन्तुमागताः । तदानीमगस्त्येन्द्रौ कयाशुभीयाख्येन साम्ना तान्मरुतः शान्तानकुरुताम् । तत इन्द्रो गतक्रोधांस्तान्मरुतः स्वसमीपे समाहूतवान् । अतोऽस्मिन्पञ्चशारदीये शान्त्यर्थं कयाशुभीयं साम गायेत् ।

अथ पशून्विधत्ते—

तस्मादेत ऐन्द्रा मारुता उक्षाणः सवनीया भवन्ति । त्रयः प्रथमेऽहन्नालभ्यन्ते । एवं द्वितीये । एवं तृतीये (१) । एवं चतुर्थे । पञ्चोत्तमेऽहन्नालभ्यन्ते । वर्षिष्ठमिव ह्येतदहः, इति ।

यस्मादिन्द्रस्य मरुतां च पशुविषयमैकमत्यं संपन्नं तस्मादैन्द्रा मारुताः कर्तव्याः । तेषां च सवनीयानां सप्तदशानामुक्ष्णां पञ्चसु दिनेषु विभज्य प्रयोगः । तत्र प्रतिदिनं पशुत्रये सति द्वावधिकाववशिष्येते । अतस्ताभ्यां सह पञ्च पशव उत्तमेऽहन्यालभ्याः । यस्मादेतदहः समाप्तिदिनत्वादतिशयेन प्रवृद्धम् । तत्र ह्युदीच्यादिदिग्विशेषा अतिरात्रत्वेन स्तोत्रविशेषाश्च संपद्यन्ते । तस्मात्तत्र पशुबाहुल्यं युक्तम् ।

यजनवेदने प्रशंसति—

वर्षिष्ठः समानानां भवति । य एतेन यजते । य उ चैनमेवं वेद, इति ।

समानानां मध्ये वर्षिष्ठो गुणैरतिशयेन प्रवृद्धः ।

पञ्चशारदीयं प्रशंसति—

स्वाराज्यं वा एष यज्ञः । एतेन वा एकयावा कान्दमः स्वाराज्यमगच्छत्, इति ।

१ क. ख. °लभ्यन्त्याः । य° ।

एष पञ्चशारदीयाख्यो यज्ञः स्वाराज्यस्वरूपस्वर्गप्राप्तिहेतुत्वात् । एतेन पञ्चशारदीयेनैव पुरा कान्दमो नाम कश्चिदृषिः स्वाराज्यं प्राप्तवान् । स कीदृश एकयावा, एकेन वाहनेन यातीत्येकयावा रथेनैव गच्छति न तु वाहनान्तरेणेत्यर्थः ।

यागवेदने प्रशंसति —

स्वाराज्यं गच्छति । य एतेन यजते (२) । य उ चैनमेवं वेद, इति ।

पशुदेवतारूपमरुत्संबन्धेन क्रतुं प्रशंसति—

मारुतो वा एष स्तोमः । एतेन वै मरुतो देवानां भूयिष्ठा अभवन् । भूयिष्ठः समानानां भवति । य एतेन य त । य उ चैनमेवं वेद, इति ।

यस्मादेतेन पञ्चशारदीयेन देवानां मध्ये मरुतोऽतिशयेन बहुला अभवं-स्तस्मादेष त्रिवृत्पञ्चदशसप्तदशस्तोमयुक्तो यागो मारुतः । एतद्याजी तद्वेदी च समानानां मध्येऽत्यन्तबहुलो भवति ।

पञ्चसु संवत्सरेष्वनुष्ठानं प्रशंसति—

पञ्चशारदीयो वा एष यज्ञः । आपञ्चमात्पुरुषाद-न्नमत्ति । य एतेन यजते । य उ चैनमेवं वेद, इति ।

स्वात्मानमारभ्य पुत्रपौत्रादिद्वारा यः पञ्चमः पुरुषस्तत्पर्यन्तं सर्वेषामन्न-समृद्धिर्भवति ।

सप्तदशं स्तोमावसा प्रशंसति—

सप्तदशश्च स्तोमो नातियन्ति । सप्तदशः प्रजापतिः । प्रजापतेरेव नैति (३), इति ।

---

१ ग. °दशस्तो° ।

तृतीयं गच्छति य एतेन यजतेऽत्ति । एतेन यजते य उ चैनमेवं वेद त्रीणि च ॥
अगस्त्यः स्वाराज्यं मारुतः पञ्चशारदीयो वा एष यज्ञः सप्तदशः
प्रजापतेरेव नैति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमा-
ध्यायं एकादशोऽनुवाकः ॥ ११ ॥

प्रजापतेः सकाशान्नातिगच्छतीत्यर्थः ।

अत्र मीमांसा । एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" उक्षोत्सर्गे किमुत्कर्षस्त्यागो वाऽऽद्योऽत्र पूर्ववत् ।
अन्वहत्रित्वयोरुत्तमाहपञ्चत्वयोर्विधौ ॥
वाक्यभेदाद्विशिष्टानामन्येषां कर्मणा विधिः ।
तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम् " ॥

अस्त्यहीनेषु पञ्चशारदीयनामक[2]ः कश्चित्सवविशेषः पञ्चाहः । स च पञ्चसु संवत्सरेष्वनुष्ठेयः । तत्र प्रथमे संवत्सरे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदश स्त्रीपशवः सप्तदशोक्षाणश्च विहितास्तेषु सर्वेषु पर्यग्निकृतेषु प्रोक्षितेषु सत्सु स्त्रीपशूनामालम्भं पुरुषपशूनामुत्सर्गं चाऽऽम्नाय पुनर्द्वितीये तृतीये चतुर्थे संवत्सरे तथैवानुष्ठानमाम्नाय पश्चादिदमाम्नातम्—"त्रींस्त्रीनित्येकैकस्मिन्नहन्यालभेरन्पञ्चोत्तमेऽहनि" इति । तत्र वत्सरचतुष्टयगतासु चतसृष्वमावास्यासु यो[4]ऽयं पुरुषपशूनामुक्ष्णामुत्सर्गस्तत्र तत्कर्मशेषत्यागो न भवति, किंतूत्कर्षः । कुतः । त्रींस्त्रीनितिवाक्येनाऽऽलम्भस्याभिधानात् । यथा पूर्वत्र प्राजापत्यानामालम्भोत्कर्षस्तथाऽत्रापि युज्यत इति प्राप्ते ब्रूमः— "त्रींस्त्रीनेकैकस्मिन्नहन्यालभेरन्" इत्यत्र पर्यग्निकरणानन्तरभाविनं प्राप्तमालम्भमनूद्यैकैकाहत्वत्रित्वगुणयोर्विधौ वाक्यं भिद्येत । तथा "पञ्चोत्तमेऽहन्" इत्यत्रोत्तमाहत्वपञ्चत्वयोर्विधौ वाक्यभेदः । तस्मादुक्तद्वयविशिष्टानामन्येषां कर्मणां विधिरभ्युपेयः । तथा सत्यारण्यपशुन्यायेन सप्तदशोक्षाणः पर्यग्निकरणप्रोक्षणाभ्यां समापनीयाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

१ क. °न्वयत्रि° । २ क. °ने प° । ३ क. ख. °श्चित्पञ्चाहविशेषः पञ्च° । ४ क. ख. °यं प° ।
५ क. ख. °भाविप्रा° ।

अथ सप्तमे द्वादशोऽनुवाकः ।

एकादशे पञ्चशारदीयगताः पशवोऽभिहिताः । द्वादशे त्वग्निष्टुदाख्ये क्रतौ ग्रहाणां ग्रहकाले पुरोरुचोऽभिधीयन्ते । अत एव सूत्रकारेणोक्तम्—“यथाऽग्निष्टुतस्य पुरोरुचोऽस्याजरासोऽग्न आयूꣳषि पवस इत्यैन्द्रवायवस्य द्वितीया मैत्रावरुणस्य तृतीयाऽऽश्विनस्य चतुर्थी पञ्चमी शुक्रामन्थिनोः षष्ठ्याग्रयणस्यान्यामाग्नेयीमुक्थ्यस्य नियुनक्ति नित्या ध्रुवस्य नियुनक्त्यैन्द्राग्नवैश्वदेवयोरग्निःश्रिय इति तिस्रो मरुत्वतीयानां श्रुधि श्रुत्कर्णेत्युत्तरा माहेन्द्रस्य विश्वेषामदितिरिति तिस्र आदित्यग्रहस्योत्तमा सावित्रस्य” इति । तत्रैन्द्रवायवस्य या प्रथमा पुरोरुग्विद्यते तामाह—

अस्याजरासो दमामरित्राः । अर्चद्धूमासो अग्नयः पावकाः । श्वितीचयः श्वात्रासो भुरण्यवः । वनर्षदो वायवो न सोमाः, इति ।

अस्य यजमानस्य दमा यज्ञग्रहा एवंगुणकाः सन्त्विति प्रार्थयते । किंगुणका अजरासो विनाशरहिताः । मरित्रा म्रियन्ते संज्ञप्यन्ते पशवो येष्विति मरित्राः पुनः पुनर्विशस्यमानपशुका इत्यर्थः । अर्चद्धूमासोऽर्चनीयधूमाः, अग्नयोऽग्निमन्तः, पावकाः शोधकाः, श्वितीचयः श्वितिं वृद्धिमञ्चन्ति गच्छन्ति प्रतिदिनमनुष्ठानवृद्धियुक्ता इत्यर्थः । अत एव श्वात्रासः श्वेता निर्मला इत्यर्थः । भुरण्यवो भरणकुशलाः फलसंपादका इत्यर्थः । वनर्षदो वननीयफलप्राप्तिहेतवः । वायवो न वायुसदृशा निरन्तरयज्ञप्रवृत्तियुक्ता इत्यर्थः । सोमाः सोमयागयुक्ताः ।

अथ मैत्रावरुणग्रहस्य पुरोरुचमाह—

यजा नो मित्रावरुणा । यजा देवाꣳ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् इति ।

हे ग्रह नोऽस्मदर्थं मित्रावरुणा यज मित्रावरुणाख्यौ देवौ पूजय । तद्द्वारा देवान्सर्वान्यज । ऋतं यज्ञरूपमिदं कर्म बृहत्महद्वर्तते । अतो हेऽग्ने स्वं दमं स्वकीयं ग्रहं यक्षि पूजय कर्मनिष्पादनेनालं कुर्वित्यर्थः ।

---

काले ।

अथाऽश्विनग्रहस्य पुरोरुचमाह—

अश्विना पिबतꣳ सुतम् । दीद्यग्नी शुचिव्रता ।

ऋतुना यज्ञवाहसा (१), इति ।

हेऽश्विनौ युवां सुतमभिषुतं सोमं पिबतम् । कीदृशौ दीद्यग्नी दीप्यमानाग्नियुक्तौ, शुचिव्रता शुद्धकर्मयुक्तौ, तथा यज्ञवाहसा यज्ञनिर्वाहकावृतुना यज्ञोचितकालविशेषेण युक्ताविति शेषः ।

अथ शुक्रग्रहस्य पुरोरुचमाह—

द्वे विरूपे चरतः स्वर्थे । अन्याऽन्या वत्समुपधापयेते ।

हरिरन्यस्यां भवति स्वधावान् । शुक्रो अन्यस्यां

ददृशे सुवर्चाः, इति ।

अहश्च रात्रिश्चेत्येते द्वे विरूपे शुक्लकृष्णत्वाद्विषमरूपे स्वर्थे सुप्रयोजने चरतः पर्यावर्तेते । अन्याऽन्या तयोरेकैका पृथक्पृथगेव वत्समुपधापयेते वत्ससदृशं स्वस्वोचितं देवमुपधापयेते स्तनपानेनेव प्रीणयतः । तयोर्मध्येऽन्यस्यां रात्रिरूपायां मातरि वत्सस्थानीयो हरिर्हरणशीलोऽग्निः स्वधावानन्नवान्भवति । अन्यस्यामहःसंज्ञिकायां मातरि वत्सस्थानीयः शुक्रः शुभ्रः सुवर्चाः शोभनदीप्तिरादित्योऽश्वचान्ददृशवे । तथा चाग्निहोत्रब्राह्मणे श्रुतम्—“ तस्मादग्नये सायं हूयते सूर्याय प्रातः ” इति । एवंविधसूर्याभिरूपोऽयं शुक्रग्रह इत्यर्थः ।

अथ मन्थिग्रहस्य पुरोरुचमाह—

पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो

अध्वरम् । विश्वान्यन्यो भुवनाऽभिचष्टे । ऋतूनन्यो

विदधज्जायते पुनः, इति ।

एतौ सूर्याचन्द्रमोरूपौ मातृस्थानीयाया दिवः शिशू बालकौ पूर्वभागमपरभागं च प्रति संचरतः । उदयाय पूर्वभागोऽस्तमयाय पश्चिमभागः । एवंविधसंचारे पारमेश्वरी मायैव साधनम् । सा हि पारमेश्वरी शक्तिः सूर्याचन्द्रमसौ

१ क. स्वस्यो

निर्माय स्वस्वव्यापारे स्थापितवती । तौ च शिशू स्वकीयलीलया क्रीडन्तावस्मदीयमध्वरं परियातः प्राप्नुतः । तयोर्मध्येऽन्यः सूर्यो विश्वानि भुवनानि सर्वाँल्लोकानभिचष्टे सर्वतः प्रकाशयति । अन्यश्चन्द्रमा ऋतूनवसन्तादीन्विदधन्निष्पादयन्पुनर्जायते तत्तच्छुक्लप्रतिपदि पुनः पुनरुत्पद्यते । एवंविधचन्द्ररूपोऽयं मन्थिग्रहः । तथा च श्रुतम्—"असौ वा आदित्यः शुक्रश्चन्द्रमा मन्थी" इति ।

अथाऽऽग्रयणस्य पुरोरुचमाह—

त्रीणि॑ श॒ता त्रीष॑ह॒स्रा॑ण्य॒ग्निम् । त्रि॒ꣳशच्च॑ दे॒वा नव॑ चासपर्यन् (२) । औक्ष॑न्घृ॒तैर॒स्तृ॑णन्ब॒र्हिर॑स्मै । आदिद्धोता॑रं॒ न्य॑षादयन्त, इति ।

यद्यपि हविर्भुजस्त्रयस्त्रिंशद्देवास्तथाऽपि योगैश्वर्यकल्पितलीलाविग्रहभेदाच्छतत्रयं सहस्रत्रयं त्रिंशन्नव चेत्येतावन्तो देवा भवन्ति । ते च देवा अग्निमसपर्यन्परिचरितवन्तः । त्रयस्त्रिंशत्संख्याकानामेव मुख्यदेवतानामितरे लीलाविग्रहाः । इत्यमुमर्थं वाजसनेयिनः शाकल्यब्राह्मणे समामनन्ति—"महिमान एवैषां ये ते त्रयस्त्रिंशत्त्वेव देवाः" इति । ते देवाः कथं परिचरन्तीति तदुच्यते—घृतैराज्यैरौक्षन्नुपरि सिञ्चन्ति जुह्वतीत्यर्थः । अस्मा अग्न्यर्थं बर्हिरास्तृणन्वेद्यां बर्हिरास्तृणन्ति । आदिदनन्तरमेवैनमग्निं होतारमनुष्ठानयमाना न्यषादयन्त निषण्णं कुर्वन्ति—

अथैन्द्राग्नस्य पुरोरुचमाह—

अ॒ग्निनाऽ॒ग्निः समि॑ध्यते । क॒विर्गृ॒हप॑ति॒र्युवा॑ । ह॒व्य॒वाड्जु॒ह्वा॑स्यः, इति ।

इन्द्रसहितेनाग्निना ग्रहदेवतारूपेणायमाहुत्याधारोऽग्निः समिध्यते सम्यग्दीप्यते । कीदृशोऽग्निः कविर्हवनप्रकारं विद्वान्गृहपतिर्यज्ञगृहस्वामी युवा सर्वदा तरुणः, देवार्थं हव्यं वहतीति हव्यवाट्, जुहूरेवाऽऽस्यं मुखं यस्यासौ जुह्वास्यो जुहूगतं हविरयं भक्षयतीत्यर्थः ।

अथ वैश्वदेवग्रहस्य पुरोरुचमाह—

अ॒ग्निर्दे॒वानां॑ ज॒ठर॑म् । पू॒तद॑क्षः क॒विक्र॑तुः । दे॒वो

१ क. 'विस्समन' । २ क. 'विवेहन । ग. विहंविवेहन' ।

देवेभिरागमत्, इति ।

योऽयमग्निः स एव देवानां जठरमुदरस्थानीयः । पूतश्चासौ दक्षश्चेति पूतदक्षः, पूतः शुद्धो दक्षः कर्मनिष्पादनकुशलः । कविक्रतुः कवीनां विदुषां देवानां संबन्धी क्रतुर्यागो यस्यासौ कविक्रतुस्तादृशो देवोऽग्निर्देवेभिरन्यैर्देवैः सहाऽऽगमदिह कर्मण्यागच्छतु ।

अथ मरुत्वतीयग्रहाणां यास्तिस्रः पुरोरुचस्तासां मध्ये प्रथमामाह—

आग्निश्रियो मरुतो विश्वकृष्टयः । आत्वेषमुग्रमव ईमहे वयम् (-३ ) । ते स्वामिनो रुद्रियां वर्षनिर्णिजः । सिंहा न हेषक्रतवः सुदानवः, इति ।

य एते मरुतस्तेऽग्निश्रियो विश्वकृष्टयश्च । अग्निं श्रयन्ते सेवन्त इत्यग्निश्रियस्ते हविःस्वीकरणार्थमग्निमाश्रयन्ति । विश्वे कृष्टयो मनुष्या येषां ते विश्वकृष्टयः सर्वैर्मनुष्यैः पूज्या इत्यर्थः । तादृशानां मरुतामवो रक्षणमा समन्ताद्वयमीमहे प्राप्नुमः । ते अस्मान्रक्षन्ति । कीदृशं रक्षणं त्वेषं दीप्तिमदुग्रं विरोधिनां भयंकरम् । यथा दीप्त्या विरोधितमो नश्यति एवमेव तदीयरक्षणजन्येन तेजसाऽस्मद्विरोधिनो नश्यन्तीत्यर्थः । ते मरुतो वायुविशेषाः स्वामिनो वृष्टिवेलायां स्वानयुक्ता गर्जनयुक्ताः । रुद्रो वैद्युताग्निः "रुद्रो वा एष यदग्निः" इति श्रुतेः । रुद्रिया वैद्युताग्नियुक्ताः । निर्णेजन्ति भूमिं शोधयन्तीति वर्षनिर्णिजः । सिंहा न सिंहा इव । हेषक्रतवः शब्दकारिण उत्साहेन सिंहनादं कुर्वन्तीत्यर्थः । सुदानवः शोभनफलस्य दातारः ।

अथ द्वितीयामाह—

यद्युत्तमे मरुतो मध्यमे वा । यद्वाऽवमे सुभगासो दिविष्ठ । ततो नो रुद्रा उत वाऽन्वस्य । अग्ने वित्ताद्धविषो यद्यजाम:, इति ।

हे मरुतो यूयं यदुत्तमे स्थाने स्थिता यदि वा मध्यमे स्थिता यद्वाऽवमेऽत्यन्तनिकृष्टे स्थाने स्थिता अथवा सुभगासः सौभाग्ययुक्ताः सन्तो दिवि

द्युलोके स्थिताः। हे रुद्रा दुःखद्राविणो मरुतस्ततो द्युस्थानादुत वाऽन्यस्मा-त्स्थानान्नोऽन्वस्माननुगच्छत। हेऽग्ने यद्धविर्वयं यजामोऽस्य हविषः सारं विद्याज्जानीहि।

अथ तृतीयामाह—

ईडे अग्निꣳ स्वर्वसं नमोभिः। इह प्रसत्तो विच॑-यत्कृतं नः। रथैरिव प्रभरे वाजयद्भिः। प्रदक्षि-णिन्मरुताꣳ स्तोममृध्याम्, (४) इति।

स्ववसं सुष्ठु रक्षकमग्निं नमोभिर्नमस्कारैः सहेडे स्तुतिं कुर्वे। सोऽग्निरिह कर्मणि प्रसन्नः प्रकर्षेण समागतः सन्नोऽस्माभिर्यत्कृतं कर्म तद्विचयाद्विविनु याद्। वाजयद्भिरन्नमिच्छद्भिर्ऋत्विग्भिः सहितोऽहं रथैरिव प्रभरे यथा रथैर्युद्धसाधनानि प्रकर्षेण हरन्त्येवमहं हवींषि प्रकर्षेण हरामि। प्रदक्षिणि-न्प्रदक्षिणयन्भक्त्या प्रदक्षिणं कुर्वन्नहं मरुतां संबन्धिनं स्तोमं स्तोत्रयुक्तं यज्ञमृध्यां समृद्धं कुर्याम्।

अथ माहेन्द्रग्रहस्य पुरोरुचमाह—

श्रुधि श्रुत्कर्ण वह्निभिः। देवैरग्ने सयावभिः। आ-सीदन्तु बर्हिषि। मित्रो वरुणो अर्यमा। प्रातर्या-वाणो अध्वरम्, इति।

हेऽग्ने श्रुत्कर्ण शृण्वत्कर्ण विज्ञाप्यस्य श्रोतर्वह्निभिर्हविषो वोढृभिः, सयाव-भिर्गमनशीलसहितैर्देवैः सह त्वं श्रुध्यस्माद्विज्ञाप्यं शृणु। अध्वरं यज्ञं प्रातर्या-वाणः प्रातःकाले गन्तारो मित्रादयस्त्रयो बर्हिष्यस्मदीययज्ञ आसीदन्त्वा-गत्य तिष्ठन्तु।

अथाऽऽश्विनग्रहस्य तिस्रः पुरोरुचः। तत्र प्रथमामाह—

विश्वेषामदितिर्यज्ञियानाम्। विश्वेषामतिथिर्मानुषा-

१ क. ख. °ण भर°। २ क ख. मरामि।

णाम् । अग्निर्देवानामवं आवृणानः । सुमृडीको भवतु विश्ववेदाः, इति ।

अयमग्निः सुमृडीकः सुखहेतुर्भवतु । कीदृशोऽग्निर्यज्ञियानां यज्ञयोग्यानां विश्वेषां सर्वेषामृत्विजामदितिरखण्डयिता मातृवत्पालक इत्यर्थः । तथा विश्वेषां सर्वेषां मानुषाणामतिथिरतिथिवत्पूजनीयः । देवानां सर्वेषां मध्येऽवोऽस्मद्रक्षणमावृणानः सर्वत्र प्रार्थयमानः । विश्ववेदा विश्वस्य वेदिता ।

अथ द्वितीयामाह—

त्वे अग्ने सुमतिं भिक्षमाणाः (५) । दिवि श्रवो दधिरे यज्ञियासः । नक्ता च चक्रुरुषसा विरूपे । कृष्णं च वर्णमरुणं च संधुः, इति ।

हेऽग्ने यज्ञियासो यज्ञार्हा ऋत्विग्यजमानास्त्वे त्वयि सुमतिं शोभनबुद्धिं त्वत्सेवापरा भिक्षमाणा याचमाना दिवि द्युलोके श्रवः कीर्तिं दधिरे संपादितवन्तः । त्वां सेवित्वा देवेषु कीर्तिं प्राप्ता इत्यर्थः । उषसोषःकालेन सह नक्ता च रात्रिमपि चकारादहश्च विरूपे विलक्षणरूपयुक्ते चक्रुः कृतवन्तः । तदेव कथमिति तदुच्यते—कृष्णं वर्णं रात्रेः कृष्णरूपम्, अरुणं चोषसो रक्तरूपम्, चकाराभ्यामहः शुक्लरूपं च संधुः संपादितवन्तः । यज्ञानुष्ठानद्वारा यजमाना यज्ञेन तुष्टा देवा वा तादृशं रूपं कृतवन्त इत्यर्थः ।

अथ तृतीयामाह—

त्वामग्न आदित्यास आस्यम् । त्वां जिह्वाꣳ शुचयश्चक्रिरे कवे । त्वाꣳ रातिषाचो अध्वरेषु सश्चिरे । त्वे देवा हविरदन्त्याहुतम्, इति ।

हेऽग्ने, आदित्यास एत आदित्यास्त्वामास्यं मुखं चक्रिरे त्वयि हुतस्य भक्षणात् । हे कवे विद्वन्नग्ने शुचयः शुद्धा अन्येऽपि देवास्त्वां स्वकीय-

जिह्वां चक्रिरे । रातिं फलदानं सचन्ते समवनयन्तीति रातिषाचः फलप्राप्तिकामा इत्यर्थः । तादृशा यजमानास्त्वामग्निमध्वरेषु यागेषु साधिरे फलदानाय प्रासुवन्त । देवाः सर्वेऽपि त्वे त्वय्याहुतं सर्वतो हुतं हविरिदमदन्ति ।

अथ सावित्रग्रहस्य पुरोरुचमाह—

नि त्वां यज्ञस्य साधनम् । अग्ने होतारमृत्विजम् ।
वनुष्वद्देव धीमहि प्रचेतसम् । जीरं दूतममर्त्यम् ,
( ६ ) इति ।

यज्ञवाहसा सपर्यन्त्वयमृध्यां मिक्षमाणाः प्रचेतसमेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

हेऽग्ने देव त्वां निधीमहि नितरां ध्यायेम । कीदृशं यज्ञस्य साधनं होमद्वारा निष्पादकं होतारं देवानामाह्वातारमत एवर्त्विजमृत्विक्समानं प्रचेतसं प्रकृष्टज्ञानयुक्तं जीरं जीवनप्रदं दूतं हितार्थं यतमानममर्त्यं मरणरहितम् । वनुष्वदिति क्रियाविशेषणम् । परिचरणवद्यथा भवति तथा ध्यायेमेत्यर्थः ।

अत्र विनियोगसंग्रहः—

अस्या जरा पुरोरुक्स्यादग्निष्टुत्यैन्द्रवायवे ।
यजेति मैत्रावरुणे अश्विनेत्याश्विने ग्रहे ॥ १ ॥
द्वे विरूपे तु शुक्रस्य ग्रहे पूर्वेति मन्थिनी ।
त्रीणीत्याग्रयणे ह्यग्निनेत्यैन्द्राग्नग्रहे भवेत् ॥ २ ॥
अग्निर्देवा वैश्वदेवे ह्यग्निश्रिय इति त्रयम् ।
ज्ञेया मरुत्वतीयेषु माहेन्द्रे तु श्रुधीत्यसौ ॥ ३ ॥
विश्वेषां तिस्र आदित्ये नि त्वा सावित्रके ग्रहे ।
अनुवाके द्वादशेऽस्मिन्मन्त्राः षोडश वर्णिताः ॥ ४ ॥

अथ मीमांसा । दशमाध्यायस्य चतुर्थे पादे चिन्तितम्—

आग्नेयेषु ग्रहेषूहो नास्ति वा स्तुतशस्त्रयोः ।
संस्कारत्वादस्ति मैवमर्थकर्मत्वनिर्णयात् ॥

अग्निष्टुदाख्य एकाहे श्रूयते—"आग्नेया ग्रहा भवन्ति" इति । तेषु चोद-

ऋचामृषयोर्नानादेवत्वयोः ऋतुग्रहयोः संस्कारकर्मत्वभ्रमेणास्त्यूह इति वदन्तं प्रत्येतदुत्तरं द्वितीयाध्याये तयोरर्थकर्मत्वस्य निर्णीतत्वान्नास्त्यूह इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

अथ सप्तमे त्रयोदशोऽनुवाकः ।

द्वादशोऽनुवाकेऽग्निष्टुद्यागे ग्रहाणां पुरोरुचोऽभिहिताः । अथ त्रयोदश इन्द्रस्तुद्यागे ग्रहाणां पुरोरुचोऽभिधीयन्ते । एतच्च सूत्रे स्पष्टमभिहितम्—" इन्द्रस्तुत इन्द्रस्तोमेनोक्थ्येनेन्द्रियकामो वीर्यकामो वा यजेत, ऐन्द्रियः पुरोरुचस्तिष्ठा हरी कस्य वृषेत्यैन्द्रवायवस्य तृतीया मैत्रावरुणस्य चतुर्थ्याश्विनस्य पञ्चमी षष्ठीं शुक्रामन्थिनोः सप्तम्याग्रयणस्य नित्योक्थ्यस्य निष्टुनाक्ति ध्रुवे न्द्राग्नवैश्वदेवानां नित्या मरुत्वतीयमाहेन्द्राणाम्, आ नो विश्वाभिरिति विस्त्र आदित्यग्रहस्योत्तमा सावित्रस्य " इति । तत्रैन्द्रवायवस्य प्रथमां पुरोरुचमाह—

तिष्ठा हरी रथ आ युज्यमाना याहि । वायुर्न नियुतो नो अच्छ । पिबास्यन्धो अभिसृष्टो अस्मे । इन्द्र स्वाहा ररिमा ते मदाय, इति ।

हे इन्द्र युज्यमाना रथे संबध्यमानौ हरी अश्वावातिष्ठाधितिष्ठ, नोऽस्मानच्छाभिलक्ष्याऽऽयाह्यागच्छ । तत्र दृष्टान्तः, वायुर्न नियुतो यथा नियुत्संज्ञकानश्वानभिलक्ष्य वायुर्याति तद्वत्, आगत्य चास्मेऽस्माभिरभिसृष्टः प्रेरितस्त्वमन्धोऽन्नरूपं सोमं पिबासि पीतवान्भव । हे इन्द्र ते मदाय तव हर्षार्थं स्वाहा ररिमा स्वाहाकृतं हविर्ददिम ।

अथ तत्रैव द्वितीयां पुरोरुचमाह—

कस्य वृषा सुते सचा । नियुत्वान्वृषभो रणत् । वृत्रहा सोमपीतये, इति ।

कस्य प्रजापतेः संबन्धी वृषेन्द्रः सुतेऽभिषुते सोमे सचा संबद्धो नियुत्वान्नियुन्नामकैरश्वैर्युक्तो वायुर्वृषभो रणत्, यथा वृषभो दृप्तो रणति तथाऽयं वायुर्हृष्टो रणति गर्जति । वृत्रहेन्द्रश्च सोमपीतये सोमपानाय रणति ।

अथ मैत्रावरुणग्रहस्य पुरोरुचमाह—

इन्द्रं वयं महाधने । इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् (१), इति ।

वयं यजमाना महाधने बहुधनसाध्ये प्रौढकर्मणीन्द्रं हवामह आह्वयामः । अर्भे स्वल्पेऽपि कर्मणीन्द्रं हवामह आह्वयामः । कीदृशमिन्द्रं युजं कर्मद्वयेऽपि योग्यं वृत्रेषु शत्रुषु प्राप्तेषु वज्रिणं वज्रहस्तम् ।

अथाऽऽश्विनग्रहस्य पुरोरुचमाह—

द्विताये वृत्रहन्तमः । विद इन्द्रः शतक्रतुः । उप नो हरिभिः सुतम्, इति ।

द्वयोर्लोकयोः समूहो द्विता तस्यां द्वितायां वृत्रहन्तमोऽतिशयेन वैरिघाती शतक्रतुः शतसंख्याकाश्वमेधयुक्तो य इन्द्रो विद्यते सोऽयमिन्द्रो हरिभिरश्वैः सहोप नोऽस्माकं समीपं प्राप्य सुतमभिषुतं सोमं विदे लब्धवान् ।

अथ शुक्रग्रहस्य पुरोरुचमाह—

स सूर आ जनयञ्ज्योतिरिन्द्रम् । अया धिया तरणिरद्रिबर्हाः । ऋतेन शुष्मीनवमानो अर्कैः । व्युस्रिधो अस्रो अद्रिर्बिभेद, इति ।

स शुक्रग्रहरूपः सूर आदित्यो ज्योतिः प्रकाशं जनयन्निन्द्रमागच्छतु । अया धियाऽनया मदनुग्रहबुद्ध्या तरणिस्त्वरमाणोऽद्रिबर्हाः पर्वतानां शत्रूणां निबर्हिताऽभिभविता भवति । ऋतेन यज्ञेनानुष्ठितेन शुष्मीबलवत्त्वोऽस्मान्नर्कै-रर्चनीयैः फलैरवमानः पालयमानो वर्तते । अस्त्रो निरसनकुशलोऽद्रिः पर्वत-समान इन्द्र उस्निध उत्कर्षेणाऽऽगच्छतः शत्रून्विबिभेद विशेषेण दारितवान् ।

अथ मन्थिग्रहस्य पुरोरुचमाह—

उत त्यदाश्वश्व्यम् । यदिन्द्र नाहुषीष्वा । अग्रे विक्षु प्रतीदयत् (२), इति ।

---

१ क. ख. 'मिन्द्रं प्रत्यागच्छन्तु । मं' ।

हे इन्द्र नाहुषीषु नहुषस्य राज्ञः संबन्धिनीषु विक्षु प्रजासु यद्धनं प्रतीदयत्प्रत्येकमेव मामप्रमासीत्तादृशमाश्वाश्विद्युताऽऽशुगाम्यश्वसमूहयुक्तमपि हेऽम आत्यस्त्वमेव स्वभक्तेभ्य आनयसि ।

अथाऽऽग्रयणस्य पुरोरुचमाह—

भरेष्विन्द्रꣳ सुहवꣳ हवामहे । अꣳहोमुचꣳ सुकृतं
दैव्यं जनम् । अग्निं मित्रं वरुणꣳ सातये भगम् ।
द्यावापृथिवी मरुतः स्वस्तये, इति ।

सुहवं सुखेनाऽऽह्वातुं शक्यमिन्द्रं भरेषु भरणीयेषु कर्मसु हवामह आह्वयामः । तथाऽग्निमित्रावरुणान्भगमादित्यं च सातये धनलाभायाऽऽह्वयामः । तथा द्यावापृथिव्यौ मरुतश्च स्वस्तये क्षेमायाऽऽह्वयामः ।

अथैन्द्राग्नस्य पुरोरुचमाह—

महि क्षेत्रं पुरुश्चन्द्रं विविद्वान् । आदित्सखिभ्यश्च
रथꣳ समैरत् । इन्द्रो नृभिरजनद्दीद्यानः साकम् ।
सूर्यमुषसं गातुमग्निम्, इति ।

अयमिन्द्रो विविद्वान्विविधद्रव्यजातं जानन्नादिदनन्तरमेव सखिभ्यः सखिसदृशेभ्यो यजमानेभ्यो महि प्रौढं क्षेत्रं पुरुश्चन्द्रं बहुलमाह्लादकारि धनं च रथं चरणशीलं गोमहिषादि च समैरयत्सम्यक्प्रेरितवान्दत्तवानित्यर्थः । सोऽयमिन्द्रो दीद्यानो दीप्यमानो नृभिर्मनुष्यैर्ऋत्विग्भिः सार्धं सूर्यादीनजनयदुत्पादितवान् । गातुं गमनशीलो वायुस्तम् ।

अथ वैश्वदेवग्रहस्य पुरोरुचमाह—

उरुं नो लोकमनुनेषि विद्वान् । सुवर्वज्ज्योतिरभ-
यꣳ स्वस्ति ( ३ ) । ऋष्वा त इन्द्र स्थविरस्य
बाहू । उपस्थेयाम शरणा बृहन्ता, इति ।

हे इन्द्र त्वं विद्वान्सर्वं जानन्नोऽस्मदर्थमुरुं विस्तीर्णं लोकमनुनेष्यनुक्रमेण संपादयसि । तथा सुवर्वत्स्वर्गयुक्तं तत्साधनभूतमित्यर्थः । अभयं भयरहितं

१ क. ख. °क्तेभ्यो धारयसि । २ क ख. °नुष्यैः सार्धं सू° ।

स्वस्ति क्षेमकरं ज्योतिरग्निस्वरूपमृण्व प्राप्नुहि । स्थविरस्य चिरकालीनत्वेन वृद्धसदृशस्य ते तव बाहू उपस्थेयामोपस्थानं करवाम त्वदीयं बाहुद्वयमनुग्रहबुद्ध्या यथाऽस्मच्छिरसि स्थापयासि तथा वयं त्वां भजेम । कीदृशौ बाहू शरणा रक्षितारौ बृहन्ता गुणाधिकौ ।

अथाऽऽदित्यग्रहस्य तिस्रः पुरोरुचः । तत्र प्रथमामाह—

आ नो विश्वाभिरूतिभिः सजोषाः । ब्रह्म जुषाणो हर्यश्व याहि । वरीवृजत्स्थविरेभिः सुशिप्र । अस्मे दधद्वृषणꣳ शुष्ममिन्द्र, इति ।

हरिनामकावश्वौ यस्यासौ हर्यश्वः । शोभने शिप्रे हनू यस्यासौ सुशिप्रः, तादृश हे इन्द्र त्वं ब्रह्म जुषाणः परिवृढमिदं कर्म सेवमानः सजोषा अस्माभिः सह समानप्रीतिः सन्विश्वाभिरूतिभिः समस्तै रक्षणैः सहितो नोऽस्मान्प्रत्यायाह्यागच्छ । किं कुर्वन्स्थविरेभिर्वरीवृजत्प्रवृद्धै रुपायैर्वर्जयितव्याञ्छत्रूनत्यर्थं वर्जयन् । तथा वृषणं कामवर्षणहेतुं शुष्मं बलमस्मे दधदस्मासु संपादयन् ।

अथ द्वितीयामाह—

इन्द्राय गाव आशिरम् । दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरेऽविदत्, इति ।

वज्रिणे वज्रयुक्तायेन्द्रायेन्द्रार्थमाशिरमीषन्मथितं दधिहेतुभूतं मधु मधुरं क्षीरं गावो दुदुह्रे दुग्धवत्यः । यत्सीं यदेव क्षीरमुपह्वरेऽस्मिन्प्रवृत्तेऽध्वरे वर्तमान इन्द्रोऽविददलब्ध । तत्क्षीरं दुदुह्र इति पूर्वत्रान्वयः ।

अथ तृतीयामाह—

तास्ते वज्रिन्धेनवो जोजयुर्नः । गभस्तयो नियुतो विश्ववाराः । अहरहर्भूय इज्जोगुवानाः । पूर्णा इन्द्र क्षुमतो भोजनस्य, इति ।

हे वज्रिन्वज्रयुक्तेन्द्र ते त्वदर्थं ताः पूर्वोक्ता धेनवो नोऽस्माञ्जोजयुः शीघ्रमेव प्राप्ताः । कीदृश्यो धेनवो गभस्तयो दीप्तिमत्यः पुष्टशरीरा इत्यर्थः ।

१ क. °णः प्रवृद्धमि° ।

नियुतो नियमेन क्षीरादेर्मिश्रयित्र्यः। विश्ववाराः स्वकीयक्षीरेण क्षुधादिरूपं विश्वं सर्वमप्युपद्रवं वारयन्तीति विश्ववाराः। अहरहर्दिने दिने भूय इन्द्रूयिष्ठमेव जोगुवानाः शब्दयन्त्यः क्षीरपूर्णस्तनत्वेन दोहनार्थं वत्समाकारयितुं हम्भारवं कुर्वत्य इत्यर्थः। क्षुमन्तः शब्दवतो भोजनस्य पूर्णाः पूरयित्र्यः क्षीरस्य बाहुल्ये सति चुलुकेन पुनः पुनर्भोजने हि महाञ्शब्द उत्पद्यते।

अथ सावित्रग्रहस्य पुरोरुचमाह—

इमां ते धियं प्रभरे महो महीम्। अस्य स्तोत्रे धिषणा यत्त आनजे। तमुत्सवे च प्रसवे च सासहिम्। इन्द्रं देवासः शवसा मदन्ननु (४) इति।

वज्रिणंमयत्स्वास्ति जोजयुर्नः सप्त च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये त्रयोदशोऽनुवाकः॥ १३॥

हे इन्द्र महो महनीयस्य ते तव महीं महतीमिमामनुग्रहरूपां धियं प्रभरे प्रकर्षेण धारयामि। अस्य त ईदृशस्य तव संबन्धि यत्स्तोत्रमानजे त्वद्गुणानभिव्यञ्जयति तस्मिन्स्तोत्रे धिषणा मदीया बुद्धिः प्रवर्ततामिति शेषः। उत्सवेऽस्मिन्कर्मानुष्ठानरूपे प्रसवे च तत्फलोत्पादने सासहिमत्यन्तसाहिष्णुं सर्वदोद्युक्तमित्यर्थः। तादृशं शवसा बलेन युक्तं तमिन्द्रं देवासः सर्वे देवा अनुमदन्ननुमोदन्ताम्।

अत्र विनियोगसंग्रहः—

इन्द्रस्तुन्नामके यागे ग्रहाणां स्युः पुरोरुचः।
तिष्ठा कस्येत्यैन्द्रवायव इन्द्रं वदनन्वरे॥ १॥
द्विताय इत्याश्विने स्यात्स सुरः शुक्रसंज्ञके।
उत त्यं मन्थिनाम्नि स्याद्भरेष्वाग्रयणग्रहे॥ २॥
महीत्यैन्द्राग्नके वैश्वदेवे तुरं न इत्यसौ।
आदित्ये तिस्र आ नः स्युरिमां सावित्रकग्रहे।
त्रयोदशेऽनुवाकेऽस्मिन्मन्त्रा उक्तास्त्रयोदश॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

१ क. °रादिमिश्राः। वि°।

अथ सप्तमे चतुर्दशोऽनुवाकः ।

---

त्रयोदशे इन्द्रस्तुन्नामके क्रतौ ग्रहाणां पुरोरुच उक्ताः । चतुर्दशे स्वस्तोर्याप्यविधिरुच्यते । तं विधातुमाख्यानमाह—

प्रजापतिः पशूनसृजत । तेऽस्मात्सृष्टाः पराञ्च आयन् । तानग्निष्टोमेन नाऽऽप्नोत् । तानुक्थ्येन नाऽऽप्नोत् । तान्षोडशिना नाऽऽप्नोत् । तान्रात्रिया नाऽऽप्नोत् । तान्त्संधिना नाऽऽप्नोत् । सोऽग्निमब्रवीत् । इमान्म ईप्सेति । तानग्निस्त्रिवृता स्तोमेन नाऽऽप्नोत् ( १ ) स इन्द्रमब्रवीत् । इमान्म ईप्सतेति । तानिन्द्रः पञ्चदशेन स्तोमेन नाऽऽप्नोत् । स विश्वान्देवानब्रवीत् । इमान्म ईप्सतेति । तान्विश्वे देवाः सप्तदशेन स्तोमेन नाऽऽप्नुवन् । स विष्णुमब्रवीत् । इमान्म ईप्सेति । तान्विष्णुरेकविंशेन स्तोमेनाऽऽप्नोत् । वारवन्तीयेनावारयत । इदं विष्णुर्विचक्रम इति व्यक्रमत, इति ।

प्रजापतिना सृष्टाः पशवो यदा पुनरावृत्तिरहिताः प्रजापतेः सकाशाद्गतास्तदा प्रजापतिरग्निष्टोमादिकं क्रमेणानुष्ठाय तान्पशूनाप्तुं न शक्तोऽभूत् । यद्रात्रियाऽतिरात्रक्रतुगतैरात्रिपर्यायैः स्तोत्रैः, संधिनाऽतिरात्रावसाने त्रिवृद्राथंतरः संधिरिति यत्स्तोत्रं विहितं तेन स्तोत्रेण । एतैरुपायैः पशूनाप्तुमशक्तः प्रजापतिरग्निं प्रत्यब्रवीत् । हेऽग्ने मे मदर्थमिमान्पशूनीप्साऽऽप्तुमिच्छ तदर्थमुद्योगं कुर्विति । ततः सोऽग्निस्तदर्थं त्रिवृत्सोममनुष्ठाय तेन प्राप्तुं शक्तो नाभूत् । एवमिन्द्रो विश्वे देवाश्च । विष्णुस्तु एकविंशस्तोममनुष्ठाय

तेन पशून्प्राप्य वारवन्तीयेन साम्ना पुनर्गमनं निवारयामास । अतोऽयं विष्णुः "इदं विष्णुः" इति मन्त्रेणोक्तो यो विक्रमस्तं कृतवान् । तमेव पशुप्राप्तिरूपं विक्रमं मन्त्रोऽवादीदित्यर्थः ।

इदानीमप्तोर्यामक्रतुं विधत्ते—

यस्मात्पशवः प्र प्रेव भ्रꣳशेरन् । स एतेन यजेत,

इति ।

एकः प्रशब्दः प्राथम्यवाच्यपरः प्रकर्षवाची । प्रथममेव पशवो यस्मात्पुरुषात्प्रेव भ्रंशेरन्प्रकर्षेण भ्रष्टा इव भवन्ति स पुरुष एतेनाप्तोर्यामेण स्तोमेन यजेत । तत्स्वरूपं सूत्रकारेण स्पष्टमुक्तम्—"अप्तोर्यामश्चेत्संधिचमसानुन्नयंश्चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयति" इति । संधिस्तोत्रपर्यन्तैरेकोनत्रिंशत्स्तोत्रैर्युक्तमतिरात्रप्रयोगमनुष्ठाय तत ऊर्ध्वं चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयेत् । ततः पुनरपि चत्वारि स्तोत्राणि भवन्ति । तदेवं त्रयस्त्रिंशत्स्तोत्रयुक्तोऽप्तोर्यामः ।

तस्य निर्वचनं दर्शयति—

यदाप्नोत् । तदप्तोर्यामस्याप्तोर्यामत्वम्, इति ।

यस्मात्कारणादनेन क्रतुना पशूनाप्नोत्तस्मात्कारणादाप्त्यर्थो यामो यज्ञ इति व्युत्पत्त्या तन्नाम संपन्नम् ।

एतस्य क्रतोः सर्वकामप्राप्तिसाधनत्वं दर्शयति—

एतेन वै देवा जैत्वानि जित्वा । यं काममकामयन्त तमाप्नुवन् । यं कामं कामयते । तमेतेनाऽऽप्नोति (२), इति ।

स्तोमेन नाऽऽप्नोदवारयत नव च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये चतुर्दशोऽनुवाकः ॥ १४ ॥

=====

पुरा देवा एतेनाप्तोर्यामक्रतुना जेतव्यानि सर्वाणि युद्धानि जित्वा काम्यमानं फलं प्राप्नुवन् । अतोऽन्योऽपि देववत्सर्वं प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ सप्तमे पञ्चदशोऽनुवाकः ।

चतुर्दशेऽश्वमेधोऽभिहितः । अथ पञ्चदशषोडशसप्तदशेष्वनुवाकेषु यज्ञसंयुक्तालौकिको राजाभिषेकोऽभिधीयते । तत्रास्मिन्ननुवाके तावदादौ होममन्त्रा उच्यन्ते । कल्पः—" व्याघ्रोऽयमग्नाविति सप्ताऽऽहुतीर्हुत्वा" इति । तत्र प्रथमामृचमाह—

व्याघ्रोऽयमग्नौ चरति प्रविष्टः । ऋषीणां पुत्रो अभिशस्तिपा अयम् । नमस्कारेण नमसा ते जुहोमि । मा देवानां मिथुया कर्म भागम्, इति ।

अयमभिषेकार्हो राजाऽस्मिन्नाहुत्याधारेऽग्नौ प्रविष्टो व्याघ्रवदप्रधृष्यो भूत्वा लोके चरति । सोऽयमृषीणामृत्विजां पुत्रोऽभिषेकसंस्कारेण तैरुत्पादितत्वात् । अभिशस्तिपाः पापेभ्यः पाता रक्षिता भवत्विति शेषः । हेऽग्ने ते तव नमस्कारेण युक्तोऽहं नमसोपनतेन हविषा जुहोमि । देवानां भागं मिथुया कर्म यथा मिथ्या भवति तथा वयं मा कार्ष्म किंतु सत्यमेव कुर्म इत्यर्थः ।

अथ द्वितीयामाह—

सावीर्हि देव प्रसवाय पित्रे । वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यꣳ सवितः सर्वताता । दिवे दिव आसुवा भूरिपश्वः, इति ।

हे देव प्रसवाय प्रजानां प्रेरकाय पित्रे पालकायास्मै राज्ञे वर्ष्माणं सावीर्हि सर्वथा प्रेरय । अस्य राज्ञो देहो यथा सर्वान्पालयति तथा त्वमनुगृहाणेत्यर्थः । किंचास्मै राज्ञे वरिमाणमुरुत्वं राज्यविस्तारं सावीः प्रेरयानुजानीहि । अथानन्तरं हे सवितः सर्वे देवास्तायन्ते विस्तीर्यन्त एष्विति सर्वताता ये यज्ञास्तेषु सर्वताताऽस्मभ्यमस्मदर्थं भूरिपश्वो भूरीन्बहुकान्पशूनासुव सर्वतः प्रेरय ।

अथ तृतीयामाह—

भूतो भूतेषु चरति प्रविष्टः । स भूतानामधिपतिर्ब-

भूव (१)। तस्यं मृत्यौ चंरति राजसूयंम्। स राजा राज्यमनुमन्यतामिदम्, इति।

भूतेषु प्राणिजातेषु मध्ये प्रविष्टोऽयं भूतः स्वयमुद्भूतश्चरति सर्वनियामकत्वेन प्रवर्तते। अत एव भूतानां प्राणिनां सर्वेषामधिपतिः स्वामी बभूव। तस्य राज्ञो मृत्यौ दुष्टशिक्षारूपमरणनिमित्तभूते सति राजसूयं चरति। राजा सूयतेऽभिषिच्यतेऽस्मिन्कर्मणीति राजसूयाख्यमिममभिषेकमिदं कर्म च दुष्टशिक्षार्थं प्रवर्तत इत्यर्थः। सोऽभिषिक्तो राजा राज्यमिदमनुमन्यतां दुष्टशिक्षाशिष्टपरिपालनरूपं यद्राजकृत्यं तदङ्गीकरोतु।

अथ चतुर्थीमाह—

येभिः शिल्पैः पप्रथानामदृंहत्। येभिर्द्यामभ्यपिंशत्प्रजापतिः। येभिर्वाचं विश्वरूपां समव्ययत्। तेनेममंग्न इह वर्चसा समंङ्ग्धि, इति।

प्रजापतिर्येभिः शिल्पैर्यैः कौशलैः पप्रथानां विस्तारयुक्तामिमां पृथिवीमदृंहद्दृढीकृतवान्। तथा येभिः कर्मकौशलैर्द्यां द्युलोकमभ्यपिंशदभितश्चन्द्रतारकादिभिः सुरूपामकरोत्। तथा येभिर्यैः कर्मकौशलैर्वाचमिमामुच्चार्यमाणां विश्वरूपां नानापदार्थवाचकत्वेनानेकरूपां समव्ययत्सम्यक्संपादितवान्। तेन तथाविधकौशलजातेन वर्चसा तद्योगेन बलेन च हेऽग्न इमं राजानमिह लोके समङ्ग्धि समर्थं कुरु, तथाविधसामर्थ्येन संयोजयेत्यर्थः।

अथ पञ्चमीमाह—

येभिंरादित्यस्तपति प्रकेतुभिः। येभिः सूर्यो ददृशे चित्रभानुः। येभिर्वाचं पुष्कलेभिरव्ययत्। तेनेममंग्न इह वर्चसा समंङ्ग्धि (२), इति।

येभिः प्रकेतुभिः प्रकृष्टतेजोविशेषैरयमादित्यः सर्वत्र तापं करोति। किंच

येभिर्यैस्तेजोविशेषैः[2] सूर्यश्चित्रभानुर्हृदये विचित्ररश्मियुक्तोऽयमिति प्राणिभिर्दृश्यते । येभिर्यैस्तेजोविशेषैः पुष्कलैः संपूर्णैर्वाचं शब्दात्मिकामन्यथाद्विविधां परिवृत्तां सर्वो जन्तुरकरोत् । तेनेत्यादि पूर्ववत् ।

अथ षष्ठीमाह—

आऽयं भा॑तु शव॑सा पञ्च॑ कृष्टीः । इन्द्र॑ इव ज्येष्ठो॒ भ॑वतु प्र॒जावा॑न् । अ॒स्मा अ॑स्तु पुष्क॒लं चि॒त्रभा॑नु । आऽयं पृ॑णक्तु रज॑सी उ॒पस्थ॑म्, इति ।

अयं राजा शवसा बलेन पञ्च कृष्टीः पञ्चसंख्याकान्मनुष्यान्निषादपञ्चमान्ब्राह्मणादिवर्णविशेषानाभातु समन्ताद्दीपयतु । किंचायं राजा स्वयमिन्द्र इव ज्येष्ठः प्रशस्यतमः प्रजावान्स्वाधीनप्रजायुक्तो भवतु । अस्मै राज्ञे विद्यमानं सर्ववस्तुजातं पुष्कलं संपूर्णं चित्रभानु विचित्रत्वेन भासमानं स्वस्वकार्यक्षममस्तु । किंचायं राजा रजसी रञ्जनात्मिके द्यावापृथिव्यावुपस्थं तत्समीपस्थितमन्तरिक्षं चाऽऽपृणक्तु तेजसा सर्वतः प्राप्नोतु पालयत्वित्यर्थः ।

अथ सप्तमीमाह—

यत्ते॒ शिल्प॑ं कश्यप रोच॒नाव॑त् । इ॒न्द्रि॒याव॑त्पुष्क॒लं चि॒त्रभा॑नु । यस्मि॒न्त्सूर्या॒ अर्पि॑ताः स॒प्त सा॒कम् । तस्मि॒न्राजा॑न॒मधि॒ विश्र॑येम॒म्, इति ।

हे कश्यपाख्य प्रजापते ते तव यच्छिल्पं कर्मकौशलं रोचनावद्दीप्तिमदिन्द्रियावद्वीर्योपेतं पुष्कलं संपूर्णं चित्रभानु विचित्रत्वेन भासमानम् । किंच यस्मिंस्त्वदीये शिल्पे सप्तसंख्याकाः सूर्याः साकमर्पिताः सहावस्थापिताः । ते च सप्त सूर्या आरण्यकाण्ड आरोगो भ्राज इत्यनुवाके प्रपञ्चिताः । तस्मिञ्छिल्प इमं राजानमधिविश्रयाधिकत्वेनाऽऽश्रितं कुरु ।

---

१ क. °न्तुर्दृश्यते वि° । २ ख. °र्यैरभियेयति° ।

कल्पः—"द्यौरसि पृथिव्यसीति यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति" इति। पाठस्तु—

द्यौर॑सि पृथि॒व्य॑सि, इति।

हे शार्दूलचर्म त्वं द्युलोकरूपमसि भूलोकरूपमसि।

कल्पः—"तस्मिन् राजोपविशति 'व्याघ्रो वैयाघ्रे' इत्यासीनमभिमन्त्रयते" इति। पाठस्तु—

व्या॒घ्रो वै॑या॒घ्रेऽधि॑ (३)। विश्र॑यस्व॒ दिशो॑ म॒हीः।

विश॑स्त्वा॒ सर्वा॑ वाञ्छन्तु। मा त्वद्रा॒ष्ट्रमधि॑भ्र-

शत्, इति।

हे राजन्, त्वं व्याघ्रसदृशो भूत्वा व्याघ्रसंबन्धिनि चर्मण्यधुपरि स्थितो महीर्महतीर्दिशः प्राच्यादिका विश्रयस्व विशेषेणाऽऽश्रितो भव। सर्वा विशः प्रजास्त्वां वाञ्छन्तु कामयन्तु। इदं राष्ट्रं त्वत्ताऽधिभ्रशत्त्वत्सकाशाद्भ्रष्टं मा भूत्।

कल्पः—"अथैनं तोक्मावास्ताभिर्दूर्वावास्ताभिश्चाऽद्भिरभिषिञ्चति 'या दिव्या आपः' इति प्रतिपद्याऽऽपाङ्क्तात्" इति। यास्वप्सु तोक्मानि व्रीह्यङ्कुराण्यवदास्तानि प्रक्षिप्तानि ता आपस्तोक्मावास्ता एवं दूर्वावास्ता अपि। पाठस्तु—

या दि॒व्या आपः॒ पय॑सा संब॒भूवुः॑। या अ॒न्तरि॑क्ष

उ॒त पार्थि॑वी॒र्याः। तासां॑ त्वा॒ सर्वा॑साꣳ रु॒चा।

अ॒भिषि॑ञ्चामि॒ वर्च॑सा। अ॒भि त्वा॒ वर्च॑सा सिचं

दि॒व्येन॑। पय॑सा स॒ह। यथाऽऽसा॑ राष्ट्र॒वर्ध॑नः

(४)। तथा॑ त्वा स॒वि॒ता क॑रत्। इन्द्रं॒ विश्वा॑

अवीवृधन्। स॒मु॒द्रव्य॑चसं॒ गिरः॑। र॒थीत॑मꣳ र॒थीना॑म्।

वाजानाꣳ सत्पतिं पतिम् । वसवस्त्वा पुरस्तादभि-
षिञ्चन्तु गायत्रेण छन्दसा । रुद्रास्त्वा दक्षिणतोऽ-
भिषिञ्चन्तु त्रैष्टुभेन छन्दसा । आदित्यास्त्वा पश्चा-
दभिषिञ्चन्तु जागतेन छन्दसा । विश्वे त्वा देवा
उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा । बृहस्पति-
स्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसा (५), इति ।

दिव्या दिवि भवा आपो याः पयसा क्षीरेण सह संबभूवुः । अन्तरिक्षे याः संबभूवुः । उतापि च पार्थिवीः पृथिव्यामुत्पन्ना या आपस्तासां सर्वासां रुचा दीप्त्या वर्चसा बलेन हे राजंस्त्वामभिषिञ्चामि । पयसा दिव्येन सह वर्चसा बलेन त्वामभितः सिचं सर्वतः सिक्तं करोमि । यथा लोके सविता स्वयं राष्ट्रवर्धन आस तथा त्वामपि राष्ट्रवर्धनं करोतु । विश्वा गिरः सर्वाः स्तुतिरूपा वाचस्त्वामवीवृधन्वर्धितवत्यः । कीदृशं त्वाम्, इन्द्रं परमैश्वर्ययुक्तं समुद्रव्यचसं समुद्रवद्व्यापिनं रथीनां रथीतमं रथयुक्तानां राज्ञां मध्येऽतिशयेन रथस्वामिनं वाजानामन्नानां पतिं पालकं तथा सत्पतिं सन्मार्गवर्तिनां पालकम् । हे राजंस्त्वां पुरस्तात्पूर्वस्यां दिशि गायत्रच्छन्दो-भिमानिदेवेन सह वसवोऽभिषिञ्चन्तु । एवं रुद्रास्त्वेत्यादिवाक्येष्वपि योजनीयम् ।

कल्पः—" अरुणं त्वा वृकमित्येनमभिमन्त्रय " इति । पाठस्तु—

अरुणं त्वा वृकमुग्रं खजंकरम् । रोचमानं मरुता-
मग्रे अर्चिषः । सूर्यवन्तं मघवानं विषासहिम् ।
इन्द्रमुक्थेषु नामहूतमꣳ हुवेम, इति ।

हे राजन्, त्वामुक्थेषु स्तोत्रेष्विन्द्रं हुवेमेन्द्रत्वेनाऽऽह्वयाम । इन्द्रनाम्नैव व्यवहराम इत्यर्थः । कीदृशं त्वामरुणमुदयकालीनसूर्यसदृशं वृकमारण्यमृग-वच्छत्रूणां भयहेतुमत एवोग्रं खजंकरं खजः शत्रूणां मर्दनं तत्करोतीति खजंकरस्तं मरुतां देवानामर्चिषोऽग्रे रोचमानं तदीयप्रकाशादप्यधिकेन प्रकाशेन युक्तमित्यर्थः । सूर्यवन्तमुपमानार्थं सूर्योऽस्यास्तीति सूर्यवांस्तं

मघवानमन्नवन्तं विषद्वैरिणः सहतेऽभिभवतीति विषासहिस्तं नामहूत्वं युद्धेषु शत्रूनभिमुखेन तत्तन्नाम्नाऽऽह्वयतीति नामहूतमस्त्वम् !

कल्पः—" प्र बाहवेति बाहू प्रसार्य " इति । पाठस्तु—

प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमु-
क्षतं घृतेन । आ नो जने श्रवयतं युवाना । श्रुतं
मे मित्रावरुणा हवेमा, इति ।

हे बाहवोभौ बाहू नोऽस्माकं जीवसे जीवनाय प्रसिसृतं प्रसृतौ भवतम् । नोऽस्माकं गव्यूतिं गोसमूहं घृतेनोक्षतं सिञ्चतम् । युवाना तरुणौ परस्परमिश्रितौ वा युवां नोऽस्माञ्जने जनसमूह आश्रवयतं [1]सर्वत्र प्रख्यापयतम् । हे मित्रावरुणरूपौ बाहू मे मदीयमिमा हवेदमाह्वानं श्रुतं शृणुतम् ।

कल्पः—" इन्द्रस्य ते वीर्यकृत इत्युपावहरति " इति । पाठस्तु—

इन्द्रस्य ते वीर्यकृतः । बाहू उपावहरामि ( ६ ),
इति ।

प्रभूवाऽर्थ्ययत्तेनेमसंग्र इह वर्चसा समङ्ग्धि वैयाघ्रेऽधि राष्ट्रवर्धनः पाङ्क्तेन छन्द-
सोपावहरामि ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमा-
ध्याये पञ्चदशोऽनुवाकः ॥ १५ ॥

====

हे राजन्वीर्यकृतः पराक्रमकारिण इन्द्रस्य परमैश्वर्ययुक्तस्य ते तव प्रसृतौ बाहू उपावहरामि पुनः संकुचितौ करोमि ।

अत्र विनियोगसंग्रहः—

व्याघ्रो राजाभिषेकाय जुहुयात्सप्तमन्त्रकैः ॥
द्वौऽर्वाघ्रचर्म संस्तीर्य तत्स्थं व्याघ्रोऽभिमन्त्रयेत् ॥
अभिविश्वेदष्टभिर्वा, अरुणं मन्त्रयेत्तथा ॥ १ ॥
प्र बाहवा प्रसारः स्यादिन्द्रोपावहरेद्भुजौ ॥
अनुवाके पञ्चदशे प्रोक्ता मन्त्रास्तु विंशतिः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १६ ॥

———

१ क, ख. सर्वतः ।

अथ सप्तमे षोडशोऽनुवाकः ।

पञ्चदशे राजाभिषेक उक्तः । षोडशे तदङ्गत्वेन रथारोहणमुच्यते ।

कल्पः—"अग्रेणाग्निꣳ रथोऽवस्थितो भवत्यभि प्रेहीति तꣳ राजाऽभ्येति" इति । पाठस्तु—

अभि प्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा, इति ।

सोऽयं मन्त्रोऽष्टमेऽनुवाके व्याख्यातः ।

कल्पः—"आतिष्ठ वृत्रहन्तम इत्यारोहन्तमभिमन्त्रयते" इति । पाठस्तु—

आतिष्ठ वृत्रहन्तमः । तुभ्यं देवा अधिब्रुवन्, इति ।

अयमपि तत्रैव व्याख्यातः ।

कल्पः—"अङ्कौ न्यङ्कावितिऽ रथचक्रे अभिमृशति" इति । पाठस्तु—

अङ्कौ न्यङ्कावभितो रथ यौ । ध्वान्तं वाताग्र-मनुसंचरन्तौ । दूरे हेतिरिन्द्रियावान्पतत्री । ते नोऽग्नयः पप्रयः पारयन्तु, इति ।

अङ्क इति दक्षिणचक्रस्य नाम न्यङ्क इत्युत्तरचक्रस्य । रथमभितो रथस्य पार्श्वयोर्यावङ्कौ यौ च न्यङ्कौ विद्येते । एकैकस्मिन्पार्श्वे चक्रद्वयं रथस्य चक्रचतुष्टयोपेतत्वात् । अथवाऽङ्कशब्दश्चक्रवाची, न्यङ्कशब्दश्चक्रयुक्तपक्षवाची । यावङ्कौ तौ यौ च न्यङ्कौ तौ ध्वान्तं ध्वनियुक्तं वाताग्रं वायोः पूर्वभागमनुसंचरन्तौ वायोरपि शीघ्रवेगेन(ण) गच्छत इत्यर्थः । दूरे हेतिरस्त्रीदिभिक्षिभिः शब्दैस्त्रयोऽग्निविशेषा उच्यन्ते । ते त्रयोऽप्यग्नयः पप्रयो गमनं पूरयन्तो नोऽस्मान्पारयन्तु गमनसमाप्तिं प्रापयन्तु ।

कल्पः—"नमस्त ऋष इति पुरोहितमभिमन्त्रयते" इति । पाठस्तु—

नमस्त ऋषे गद । + अव्यथायै त्वा स्वधायै त्वा

+ "अव्यथायै" इत्यपि पाठो वैदिकेषु प्रसिद्धः ।

१ क. 'कश्यप' ।

( १ )। मा नं इन्द्राभितस्त्वदृष्वारिष्टासः। एवा ब्रह्मन्तवेदस्तु, इति।

हे ऋषेऽतीन्द्रियद्रष्टः पुरोहित ते तुभ्यं नमोऽस्तु। गदास्मभ्यं हितं कथय। अभ्ययायै शत्रुकृतबाधाराहित्याय त्वा त्वां भजाम इति शेषः। स्वधाया अन्नार्थं त्वां भजामः। हे ऋष्व पुरोहितात्मन्नृषे, इन्द्र परमैश्वर्यसंपन्न नोऽस्माकं त्वत्तव प्रसादादरिष्टासोऽस्माभिर्हिंसितुं बाधितुमशक्याः प्रत्यवाया अभितः सर्वतो मा भूवन्। हे ब्रह्मन्, तवेत्तवैव प्रसादादेवेत्थमेवास्तु।

कल्पः—"तिष्ठा रथे इति सारथिम्" इति। अभिमन्त्रयत इत्यनुवर्तते। पाठस्तु—

तिष्ठा रथे अधि यद्वज्रहस्तः, इति।

हे सारथे यस्मात्त्वं वज्रहस्तस्तस्माद्रथेऽप्यधितिष्ठाधिरुह्य स्थितो भव।

कल्पः—"आ रश्मीनिति रश्मीनालभेत" इति। पाठस्तु—

आ रश्मीन्देव युवसे स्वश्वः, इति।

हे देव रथप्रवर्तक स्वश्वः शोभनाश्वयुक्तस्त्वं रश्मीन्प्रग्रहानायुवस आदाय मिश्री कुरु।

कल्पः—"आतिष्ठ वृत्रहन्निति षड्भिरारूढम्" इति। अभिमन्त्रयत इत्यनुवर्तते। तत्र चतुर्णां मन्त्राणां प्रतीकानि दर्शयति—

आतिष्ठ वृत्रहन्नातिष्ठन्तं परि। अनु त्वेन्द्रो मद-त्वनु त्वा मित्रावरुणौ, इति।

एते मन्त्रा अष्टमानुवाके व्याख्याताः।

पञ्चमं मन्त्रमाह—

द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृहद्दक्षिणा त्वा पिपर्तु। अनु स्वधा चिकिताꣳ सोमो अग्निः। अनु त्वाऽवतु सविता सवेन ( २ ), इति।

अत्रापि पादत्रयं तस्मिन्नेवानुवाके व्याख्यातम्। हे राजन्, सविता देवः सवेन प्रेरणेन त्वाऽन्वयत्वनुकूलः संरक्षतु।

अथ षष्ठमन्त्रमाह—

इन्द्रं विश्वा अवीवृधन्। समुद्रव्यचसं गिरः। रथीतमꣳ रथीनाम्। वाजानाꣳ सत्पतिं पतिम्, इति।

अयं मन्त्रः पूर्वानुवाके व्याख्यातः।

कल्पः—"परि मा सेन्या इति द्वे वाचयित्वा" इति। तत्र प्रथमामाह—

परि मा सेन्या घोषाः। ज्यानां वृञ्जन्तु गृध्नवः। मेथिष्ठाः पिन्वमाना इह। मां गोपतिमभिसंविशन्तु, इति।

सेन्याः परकीयायां सेनायां भवाः, ज्यानां धनुर्गतानां घोषा नादा मा परिवृञ्जन्तु मां परितो वर्जयन्तु। तदीया धनुर्घोषा मद्विषये मा प्रवर्तन्ताम्। कीदृशा घोषा गृध्नवः। परराष्ट्रग्रहणेच्छावन्तो मेथिष्ठाः श्रोत्रसंगमनोचिता इहास्मिन्कर्मणि युद्धविशेषे वा पिन्वमाना अप्रतिकूलत्वेन मां प्रीणयन्तस्तादृशा ज्याघोषा गोपतिं भूपतिं मामभिसंविशन्त्वभितः सम्यक्प्रविशन्तु। ये शत्रुसंबन्धिनो घोषास्ते सर्वेऽप्यप्रतिकूलत्वेन स्वकीयघोषा भवन्त्वित्यर्थः।

अथ द्वितीयामाह—

तन्मेऽनुमतिरनुमन्यताम्। तन्माता पृथिवी तत्पिता द्यौः (३)। तद्ग्रावाणः सोमसुतो मयोभुवः। तदश्विना शृणुतꣳ सौभगा युवम्, इति।

अनुमत्याख्या देवी तन्मदीयं कर्मानुमन्यतामङ्गी करोतु। पृथिव्याख्या माता तदनुमन्यताम्। द्युलोकरूपः पिता तदनुमन्यताम्। सोमसुतः सोम-

---

१ क. ख. °ह्णलुब्धा°।

मभिपुण्वन्तो मयोभुवः सुखस्य भावयितारो ग्रावाणः पाषाणास्तदनुग्रह्य-न्त्वाम् । हेऽश्विनौ सौभगा युवं भाग्यवन्तो युवां तच्छृणुतम् ।

कल्पः—"उत्तराभिस्तिसृभिरभिमन्त्र" इति । तत्र द्वयोः प्रतीके दर्शयति—

अर्वंते हेड उद्धुत्तमम्, इति ।

एतद्द्वयमपि संहितायां वैश्वानरो न इत्यनुवाके व्याख्यातम्—

अथ तृतीयामाह—

एना व्याघ्रं परिषस्वजानाः । सिꣳहꣳ हिन्वन्ति महते सौभगाय । समुद्रं न सुहवं तस्थिवाꣳसम् । मर्मृज्यन्ते द्वीपिनमप्स्वन्तः, इति ।

व्याघ्रं व्याघ्रवत्केनाप्यधृष्यं सिंहं सिंहसमानशक्तियुक्तमेनं राजानं परि-षस्वजाना आलिङ्गयन्तो ब्राह्मणा बान्धवाश्च महते सौभगाय हिन्वन्ति प्रीणयन्त्याशीर्वादान्कुर्वन्तीत्यर्थः । समुद्रं न समुद्रमिव सुखेनाऽऽह्वातुं शक्यं तस्थिवांसं तस्मिन्स्थानेऽवस्थितमेनं मर्मृज्यन्तेऽभिषेकजलेपान्पुनः पुनः शोध-यन्ति । तत्र दृष्टान्तः—अप्स्वन्तर्जलमध्ये द्वीपिनं गजं यथा प्रक्षालयन्ति तद्वदित्यर्थः ।

कल्पः—"उदसावेत्वित्यादित्यमुदीक्षयति" इति । पाठस्तु—

उदसावेतु सूर्यः । उदिदं मामकं वचः । उदिहि देव सूर्य (४) । सह वग्नुना मम । अहं वाचो विवाचनम् । मयि वागस्तु धर्णसिः । यन्तु नद्यो वर्षन्तु पर्जन्याः । सुपिप्पला ओषधयो भवन्तु, इति ।

असौ राजा सूर्यसमो भूत्वोदेतूदयमभिवृद्धिं गच्छतु । मामकं मदीयमिद-माशीर्वादरूपं वच उदेत्वभिवृद्धिं गच्छतु । हे सूर्य देव दीप्यमान राजन्मम ब्राह्मणस्य सह वग्नुना वचनेनाऽऽशीर्वादेन सह त्वमुदिह्यभ्युदयं गच्छ । अहं

१ क 'प्रातिधृ' ।

पुरोहितो वाचो धर्माधर्मादिरूपाया विवाचनं विशेषेणाभिवदनसामर्थ्यं प्राप्नुयादिति शेषः । येयं माचि स्थिताऽऽशीर्वादरूपा वाक्सा धर्मसिद्धिरणशीला सुप्रतिष्ठिताऽस्तु । नद्यो नद्यः सर्वा यन्तु पूर्णाः प्रवहन्तु । पर्जन्या मेघाः स्वस्वकाले वर्षन्तु । ओषधयो व्रीह्यादयः सुपिप्पलाः शोभनफलोपेता भवन्तु ।

कल्पः—" अन्नवतामिति जनपदाननुवीक्षते " इति । पाठस्तु—

अन्नवतामोदनवतामामिक्षवताम् । एषाᳪ राजा भूयासम्, इति ।

स्वधायै त्वा सवेन द्यौः सूर्यं सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये षोडशोऽनुवाकः ॥ १६ ॥

---

अदनीयानि प्रशस्तभक्ष्यभोज्यानि येषु ग्रामेषु ते ग्रामा अन्नवन्तः । प्रभूतेन व्रीहियवकृष्णाद्योदनेन युक्ता ओदनवन्तः । आमिक्षाशब्देन दधिक्षीरादिरसद्रव्याण्युपलक्ष्यन्ते तैर्युक्ता आमिक्षवन्तः । तादृशानामेषां ग्रामाणां राजा स्वामी भूयासम् ।

अत्र विनियोगसंग्रहः--

अभीति रथमागत्याऽऽतिष्ठाऽऽरोढुस्तु मन्त्रणम्[1] ।
अङ्गी चक्रे उपस्पृश्य नमो विप्राभिमन्त्रणम्[2] ॥ १ ॥
सारथिं मन्त्रयेत्तिष्ठाऽऽरश्मीन्स्वरूपभिमर्शनम् ।
आतिष्ठ षड्भिरारूढं मन्त्रयेत परिहृयम् ॥ २ ॥
वाचयेत्तावते हेड त्रिभिस्तमभिमन्त्रयेत् ।
उदसाविति राजानं द्वाभ्यां सूर्यमवेक्षयेत् ॥
अन्न ग्रामानवेक्षेत प्रोक्ता मन्त्रास्तु विंशतिः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

१ ग. °रोढुस्य म° । २ क. मन्त्रणाम् ।

अथ सप्तमे सप्तदशोऽनुवाकः ।

षोडशे राजाभिषेकाङ्गं रथारोहणमुक्तम् । सप्तदशे तदङ्गं वपनमभिधीयते । कल्पः—"ये केशिनो नर्ते ब्रह्मण इति द्वे आहुती हुत्वा" इति । तत्र प्रथमामाह—

ये केशिनः प्रथमाः सत्रमासत । येभिराभृतं यदिदं विरोचते । तेभ्यो जुहोमि बहुधा घृतेन । रायस्पोषेणेमं वर्चसा सꣳसृजाथ, इति ।

केशा येषां सन्ति ते केशिनः । केशिनोऽग्निवायुसूर्याः । शाखान्तरे त्रयः केशिन इत्याम्नानात् । ते च देवाः प्रथमा इतरेभ्यो देवेभ्यः पूर्वं प्रवृत्ताः । केशिनो ये सत्रमासतानुष्ठितवन्तो यदिदं जगद्विरोचते विशेषेण प्रकाशते तदिदं सर्वं येभिर्यैर्देवैराभृतं संपादितं तेभ्यो देवेभ्यो घृतेन बहुधा बहुप्रकारं जुहोमि। हे देवाः केशिन इमं राजानं धनपुष्ट्या बलेन च संयोजयत ।

अथ द्वितीयामाह—

नर्ते ब्रह्मणस्तपसो विमोकः । द्विनाम्नी दीक्षा वशिनी ह्युग्रा । प्र केशाः सुवते काण्डिनो भवन्ति । तेषां ब्रह्मेदीशे वपनस्य नान्यः, इति ।

ब्रह्मणः परिवृढादेतस्माद्वपनादृतेऽभिषेकाख्यव्रतरूपात्तपसो विमोको विसर्गः समाप्तिर्नास्ति। उपक्रान्तं हि व्रतं समापनीयम् । अस्य चाभिषेकाख्यव्रतस्य वपनेनैव समाप्तिः । व्रतरूपा चेयमभिषेकदीक्षा द्विनाम्नी नामद्वययुक्ता । तस्याश्च वशिनीत्येकं नाम। तया हि सर्वाः प्रजा वशी क्रियन्ते। उग्रेत्यपरं नाम। तया हि दीक्षया शत्रवोऽभिभूयन्ते। दीक्षाया द्विविधत्वं सोमप्रकरणेऽप्याम्नातम्—"एतद्वै सुजघनं नाम व्रतमिति प्रथमम् । एतद्वै क्षुरपवि नाम व्रतमिति द्वितीयम्" । अतोऽस्य व्रतस्य समाप्तये वपनं कुर्यात् । अस्य राज्ञः केशाः प्रसुवते प्रकर्षेणात्यन्ता वर्धन्ते । अत एव काण्डिनो बहुसमूहयुक्ता भवन्ति । तेषां वर्धमानानां बहुसमूहयुक्तानां केशानां वपनस्य ब्रह्मेत्प्रजापति-

रेवैशे समार्थो भवति । न त्वन्यः कश्चित् ! तस्मात्प्रजापतिरूपोऽयं पुरोहितो वपनं करोत्वित्यर्थः ।

कल्पः—"यजमानायतन औदुम्बरीमासन्दीं प्रतिष्ठापयति—तां राजाऽऽरोहति 'आरोह प्रोष्ठम्' इत्यारोहन्तमभिमन्त्रयते" इति । पाठस्तु—

आरोह प्रोष्ठं विषहस्व शत्रून् । अवास्राग्दीक्षा वशिनी ह्युग्रा (१) । देहि दक्षिणां प्रतिरस्वाऽऽयुः । अथा मुच्यस्व वरुणस्य पाशात्, इति ।

हे राजन्, प्रोष्ठमासन्दीरूपं मञ्चकमारोह । शत्रून्विषहस्व विशेषेणाभिभव । येयं वशिन्युग्रा चेति द्विनाम्नी दीक्षा सेयं यस्मादवास्राग वसृष्टा समाप्ता तस्मात्पुरोहिताय दक्षिणां देहि । आयुः प्रतिरस्व त्वमपि दीर्घमायुः प्राप्नुहि । अथानन्तरं वरुणस्य पाशादस्माद्बन्धनिर्बन्धान्मुच्यस्व मुक्तो भव ।

कल्पः—"तस्यामासीनः केशान्वापयते येनावपत्सविता क्षुरेण" इति । पाठस्तु—

येनावपत्सविता क्षुरेण । सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्योर्जेमम् । रय्या वर्चसा सꣳसृजाथ, इति ।

पुरा विद्वान्सविता राज्ञो राजाभिषेकं प्राप्नुवतः सोमस्य वरुणस्य च केशान्येन क्षुरेणावपत्तेन क्षुरेण हे ब्राह्मणाः प्रजापतिरूपाः पुरोहिता अस्येदं केशजातं वपत । इमं च राजानमूर्जा क्षीरादिरसेन रय्या धनेन वर्चसा बलेन च संसृजाथ संयोजयत ।

कल्पः—"मा ते केशानिति केशान्नकीर्यमाणाननुमन्त्रयते" इति । पाठस्तु—

मा ते केशाननु गाद्वर्च एतत् । तथा धाता करोतु ते । तुभ्यमिन्द्रो बृहस्पतिः । सविता वर्च आद-

धातु ( २ ), इति ।

हे राजन्, ते वर्चो बलं केशाननु मा गान्माऽऽगच्छतु । ते तवैतद्यथा भवति तथा धाता करोतु । तुभ्यं त्वदर्थमिन्द्रबृहस्पतिसवितारो नूतनमभ्यधिकं वर्चो बलं संपादयन्तु ।

कल्पः—"तान्समोप्य दर्भस्तम्बे निदधाति तेभ्यो निधानम्" इति । पाठस्तु—

तेभ्यो निधानं बहुधा व्यैच्छन् । अन्तरा द्यावापृथिवी अपः सुवः । दर्भस्तम्बे वीर्यकृते निधाय । पौंस्येनेमं वर्चसा सꣳसृजाथ, इति ।

तेभ्यस्तत्केशार्थं निधानं स्थापनप्रदेशं बहुधा बहुप्रकारं व्यैच्छन्ब्राह्मणा विशेषेणेच्छां कृतवन्तः । किं स्थानमिति तदुच्यते—ते द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्यमेकं स्थानमैच्छन् । अपो जलं द्वितीयं स्थानमैच्छन् । सुवः स्वर्गरूपं तृतीयं स्थानमैच्छन् । वीर्यकृते सामर्थ्येन संपादिते दर्भस्तम्बे तान्केशान्निधायेमं राजानं पौंस्येन वर्चसा पौरुषेण बलेन संसृजाथ हे ब्राह्मणाः संयोजयत ।

कल्पः—"अथैनमाज्यमिश्रेण पयसाऽनक्ति 'बलं ते बाहुवोः' इति बाहू" इति । पाठस्तु —

बलं ते बाहुवोः सविता दधातु । सोमस्त्वाऽनक्तु पयसा घृतेन । स्त्रीषु रूपमश्विनैतन्निधत्तम् । पौंस्येनेमं वर्चसा सꣳसृजाथ, इति ।

हे राजन्, ते बाहुवोर्बलं सविता संपादयतु । सोमस्त्वां पयसा घृतेन च समनक्तु सम्यगक्तं करोतु । अश्विना हेऽश्विनावेतद्रमणीयं रूपमेतदीयासु स्त्रीषु निश्चलं स्थापयतम् । पौंस्येनेत्यादि पूर्ववत् ।

कल्पः—"यत्सीमन्तमिति शिरः" इति । आज्यमिश्रेण पयसाऽनक्तीत्यनुवर्तते । पाठस्तु—

यत्सीमन्तं कङ्कतस्ते लिलेख । यद्वा क्षुरः परिववर्ज वपꣳस्ते । स्त्रीषु रूपमश्विनैतन्निधत्तम् । पौꣳस्येनेमꣳ सꣳसृजाथो वीर्येण (३), इति ॥

अर्वाक्स्रगदीक्षा वशिनी शुंग्रा दंष्ट्राद्ववर्ज वपꣳस्तें द्वे च ॥
ये केशिनो नर्ते मा ते बलं यत्सीमन्तं पञ्च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्याये सप्तदशोऽनुवाकः ॥ १७ ॥

====

हे राजन्, ते तव वपनात्पुरा कङ्कतः केशलग्निपाससंपादकः शलाकाविशेषो यत्सीमन्तं लिलेख शिखावशेषाय वपनीयस्थापनीययोः केशभागयोर्विभागं चकार । यद्वाऽथवा क्षुरोऽयं वपन्वपनं कुर्वन्यत्केशजातं परिववर्ज वपनमकृत्वा स्थापितवान् । सीमन्तलेखनात्मकं यद्दर्शनीयं रूपं यच्च वपनवर्जननिमित्तं रूपमेतदुभयं हेऽश्विनावेतदीयासु स्त्रीष्वलंकाराय निधत्तम् । इमं तु राजानं पौंस्येन पुरुषसंबन्धिना वीर्येण संसृजाथः संयोजयतम् ।

अत्र विनियोगसंग्रहः—

ये केशिनः प्र दर्वे द्वे आहुती जुहुयादथ ।
आरोहन्तं तमासन्दीमारोहेरयभिमन्त्रयेत् ॥ १ ॥
येन वापयते केशान्मा ते केशानुमन्त्रणम् ।
तेभ्यस्तांस्तस्य आदध्याद्बलं व ह्वोर्घृताञ्जनम् ।
यत्सी शिरोञ्जनं मन्त्रा अष्टावत्र प्रकीर्तिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

१ क. ख. °शिवपनादौ द्वे ।

अथ सप्तमेऽष्टादशोऽनुवाकः ।

---

सप्तदशे राजाभिषेकाङ्गवपनार्था मन्त्रा उक्ताः । तावताऽभिषेकः समाप्तः । अथाष्टादशे विघनाख्यः कश्चिदेकाहविशेष उच्यते । तत्राऽऽदौ विघननिर्वचनं दर्शयति—

इन्द्रं वै स्वा विशो मरुतो नापाचायन् । सोऽनपचाय्यमान एतं विघनमपश्यत् । तमाहरत् । तेनायजत । तेनैवाऽऽसां तꣳ सꣳस्तम्भं व्यहन् । यद्व्यहन् । तद्विघनस्य विघनत्वम्, इति ।

पुरा कदाचिद्राज्यं कुर्वन्तमिन्द्रं मरुत्संज्ञकाः स्वकीयाः प्रजाः करप्रदानेन पूजां नाकुर्वन् । सोऽयमपूज्यमान इन्द्रस्तत्परिहारायैतं विघनाख्यं क्रतुविशेषमेकाहं निश्चित्य तदनुष्ठानेनाऽऽसां प्रजानां तं संस्तम्भं स्तम्भनरूपं प्रातिकूल्याचरणं व्यहन्विहतं कृतवान् । यद्यस्मात्कारणादनेन कर्मणा विहतवान्, तस्माद्विहन्त्यनेनेति व्युत्पत्त्या कर्मणो विघननाम संपन्नम् ।

तमेतं विघनाख्यं क्रतुं विधत्ते—

वि पाप्मानं भ्रातृव्यꣳ हते । य एतेन यजते । य उ चैनमेवं वेद ( १ ), इति ।

अथ तत्राधिकारिणं दर्शयति—

यꣳ राजानं विशो नापचायेयुः । यो वा ब्राह्मणस्तमसा पाप्मना प्रावृतः स्यात् । स एतेन यजेत । विघनेनैवैनं विहत्य । विशामाधिपत्यं गच्छति, इति ।

यं राजानं स्वकीयाः प्रजा न पूजयेयुः करं न दद्युः । अथवा यो वा ब्राह्मणस्तमोरूपेण पाप्मना प्रकर्षेणाऽऽवृतः स्यात् । सोऽयमुभयविधः पुरु-

षोऽत्राधिकारी । स च विघनाख्येनैव क्रतुना यजेत । तथा प्रातिकूल्यं विनाश्य प्रजानामाधिपत्यं राजा गच्छति, ब्राह्मणश्च विपापो भवति ।

स्तोत्रविशेषं विधत्ते—

तस्य द्वे द्वादशे स्तोत्रे भवतः । द्वे चतुर्विश्शे । औद्भिद्यमेव तत् । एतद्वै क्षत्रस्यौद्भिद्यम् । यदस्मै स्वा विशो बलिꣳ हरन्ति (२), इति ।

तस्य विघनाख्यस्य क्रतोर्द्वादशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्तव्यम् । तथा चतुर्विंशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्तव्यम् । तच्च स्तोत्रचतुष्टयमौद्भिद्यमेवोद्भेदनसाधनमेव । अत्र च प्रकृते क्षत्रस्य राज्ञः स्वकीयाः प्रजाः करं प्रयच्छन्तीति यदेतदेवौद्भिद्यं प्रातिकूल्यस्योद्भेदनं तच्च स्तोत्रचतुष्टयेन सिध्यति ।

वेदनं प्रशंसति—

हरन्त्यस्मै विशो बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद, इति ।

अस्मै वेदित्रे प्रजाः पूजां कुर्वन्ति । अप्रतिख्यातं केनाप्यनिराकृता कीर्तिश्चैनं वेदितारमागच्छति ।

एतस्य विघनस्य यागवेदने पुनः प्रशंसति—

प्रबाहुग्वा अग्रे क्षत्राण्यातेपुः । तेषामिन्द्रः क्षत्राण्यादत्त । न वा इमानि क्षत्राण्यभूवन्निति । तन्नक्षत्राणां नक्षत्रत्वम् । आ श्रेयसो भ्रातृव्यस्य तेज इन्द्रियं दत्ते । य एतेन यजते । य उ चैनमेवं वेद (३), इति ।

---

१ क तथैनत्प्राति° । २ क. विपाप्मा ।

अग्रे पुरा कदाचित्क्षत्त्राणि क्षत्त्रियवंशे जाताः पुरुषाः प्रबाहुग्वै क्षत्राहुक्ये- नैवाऽऽछेपुः सर्वतस्तपः कृतवन्तः। तेषां तप कुर्वतां सर्वेषां यानि क्षत्त्राणि बलानि तानीन्द्र आदत्त स्वीकृतवान्। तत इमानि क्षत्त्राणि बलानि नैवा- भूवन्निति सर्वे जना उक्तवन्तः। यस्मादिन्द्रविरोधिनां क्षत्त्रं बलं नाऽऽसी त्तस्मात्तेषां बलराहित्यवाचि नक्षत्रनाम संपन्नम्। तस्मादिन्द्रवद्यो यजते यश्च वेद सोऽयमुभयविधः पुमाञ्श्रेयसोऽधिकस्य भ्रातृव्यस्य तेज आज्ञाय- त्तिमिन्द्रियं शरीरं बलं चाऽऽदत्ते।

पूर्वोक्तयोर्द्वादशचतुर्विंशस्तोमयोः स्थानविशेषं विधत्ते—

तद्यथा ह वै संचक्रिणौ कप्लकावुपावहितौ स्याताम्।

एवमेतौ युग्मन्तौ स्तोमौ। अयुक्षु स्तोमेषु क्रियेते।

पाप्मनोऽपहत्यै, इति।

चक्रमस्यास्तीति चक्री रथः, चक्रिणा सह वर्तेते इति सचक्रिणौ रथस्वा- मिनौ कप्लकौ कपिवद्गमनसमर्थौ। तादृशौ द्वौ पुरुषौ यथा लोक उपावहितौ गमनाय सावधानौ स्यातामेवमेतौ युग्मन्तौ समसंख्यायुक्तौ द्वादशचतुर्विंश- स्तोमौ अतः पापगमने समर्थौ। तावुभावयुक्षु विषमसंख्यायुक्तेषु स्तोमेषु कर्तव्यौ। त्रिवृत्पञ्चदशसप्तदशैकविंशाख्याश्चोदकप्राप्ता विषमसंख्यायुक्ताः स्तोमास्तेषां स्थाने द्वावेतौ स्तोमौ प्रयोक्तव्यौ। तत्र त्रिवृत्पञ्चदशयोः स्थाने द्वादशः सप्तदशैकविंशयोः स्थाने चतुर्विंश इति विवेकः। एतच्च पापविना- शनार्थं भवति।

एतदनुष्ठानवेदने प्रशंसति—

अप पाप्मानं भ्रातृव्यꣳ हते। य एतेन यजते।

य उ चैनमेवं वेद, इति।

उक्तस्तोमयुक्तानां स्तोत्राणामाधारभूतानृग्विशेषान्विधत्ते—

तद्यथा ह वै सूतग्रामण्यः। एवं छन्दाꣳसि। तेष्व-

सावादित्यो बृहतीरध्यूढः (४)। सतो-

बृ॒ह॒तीषु॑ स्तुवते स॒तो बृ॑ह॒न् । प्र॒जया॑ प॒शुभि॑रसा॒नी॑त्ये॒व, इति ।

सूता रथपाः सारथयो ग्रामण्यो ग्रामनिर्वाहकास्तत्र लोके यथा सूतग्रामण्यस्तथा गायत्र्यादीनि च्छन्दांसि प्रवर्तन्ते । सूतेषु मध्ये रथस्वामी यमङ्गी करोति स एव सूतो रथं प्रवर्तयति । ग्रामणीषु मध्ये राजा यमङ्गी करोति स एव ग्रामं नयति । एवमत्राप्यसावादित्यस्तेषु च्छन्दःसु मध्ये बृहतीछन्दोयुक्ता ऋचोऽभ्युद्धोऽङ्गीकृतवान् । तस्मात्कारणात्सतोबृहतीनामकच्छन्दोयुक्तास्वृक्षु स्तोत्रं कुर्युः । तेषां स्तोत्राणां प्रत्येकमयमभिप्रायः । सतः सन्मार्गवर्तिनः पुरुषाद्बृहन्नधिकः सतो बृहन् । प्रजया च पशुभिश्चाहं सतो बृहन्नसानि भवानीत्येव स्तोतारः प्रवर्तन्ते ।

तास्वृक्षु गानकाले कंचिद्विशेषं विधत्ते—

व्य॒तिष॑क्ताभिः स्तुवते । व्य॒तिष॑क्तं॒ वै क्ष॒त्रं॑ वि॒शा । वि॒शैवैनं॑ क्ष॒त्रेण॑ व्यति॑षजति, इति ।

याः सतोबृहत्य ऋचस्ताश्छन्दोन्तरयुक्ताभिर्ऋग्भिर्व्यतिषक्ताः कार्याः । ऋगेका सतोबृहती, ऋगन्तरमन्यच्छन्दोयुक्तं पुनरपि सतोबृहती पुनरपि च्छन्दोन्तरमित्येवं व्यतिषङ्गः । तादृशीष्वृक्षु स्तुतिं कुर्युः । क्षत्रं क्षत्रजातिर्विशा वैश्यजात्या व्यतिषक्तं मिश्रीभूय वर्तते । प्रजाभ्यः करं गृहीत्वा क्षत्रियो राज्यं करोति । एवं सति व्यतिषक्तस्तोत्रेणैनं यजमानं विशा क्षत्रेण व्यतिषजति मिश्रयति ।

तमेव व्यतिषङ्गं प्रकारान्तरेण प्रशंसति—

व्य॒तिष॑क्ताभिः स्तुवते । व्य॒तिष॑क्तो॒ वै ग्रा॑म॒णीः स॑जा॒तैः । स॒जा॒तैरे॒वैनं॑ व्यति॑षजति, इति ।

ग्रामस्य निर्वाहकः पुरुषः सजातैः सहोत्पन्नैर्भ्रात्रादिभिरन्यग्रामनिवासिभिर्व्यतिषक्तो मिश्रीभूतो वर्तते । अतो व्यतिषक्तस्तोत्रेणैवैनं यजमानं सजातैर्भ्रात्रादिभिः संयोजयति ।

---

१ क. 'षिक्तं स' ।

पुनरपि प्रकारान्तरेण प्रशंसति—

व्यतिषक्ताभिः स्तुवते । व्यतिषक्तो वै पुरुषः पाप्मभिः । व्यतिषक्ताभिरेवास्य पाप्मनो नुदते (५), इति ।

वेद हरन्त्येनमेवं वेदाभ्यूढः पाप्मभिरेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमाध्यायेऽष्टादशोऽनुवाकः ॥ १८ ॥

पुरुषः प्रमादकृतैः पाप्मभिः संसृष्टो वर्तते । ततोऽत्र व्यतिषक्तस्तोत्रेणास्य पुरुषस्य पापानि विनाशयति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तरीयब्राह्मणभाष्ये द्वितीयकाण्डे सप्तमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

त्रिवृद्यदाग्नेयोऽग्निर्मुखा ह्यृद्धिर्यदाग्नेय आग्नेयो न वै सोमेन यो वै सोमेनैष गोसवः सिंहेऽभिप्रेहि मित्रवर्धनः प्रजापतिस्ता ओदनं प्रजापतिरकामयत बहोर्भूयानगस्त्योऽस्याजरासस्तिष्ठा हरी प्रजापतिः पशून्व्यात्रोऽभिप्रेहि वृत्रहन्तमो ये केचिन् इन्द्रं वा अष्टादश ॥

त्रिवृद्यो वै सोमेनाऽऽयुरासि विश्वायुर्बहुर्भवति तिष्ठा हरीरथ आऽयं मातु तेभ्यो निधानं षट्पष्टिः ॥

हरिः ॐ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमोऽध्यायः ॥ ७ ॥

अस्य प्रपाठकस्थानुवाकार्थसंग्रहः—

सप्तमे तु सवाख्याः स्युः सूयते ह्यभिषिच्यते ।
ईश्वरत्वेन येऽत्रेते प्रोच्यन्ते सवनामकाः ॥ १ ॥
बृहस्पतिसवो वैश्यसवो ब्रह्मसवस्तथा ।
प्रोक्तः सोमसवस्तद्वत्सवः स्यात्पृथिनामकः ॥ २ ॥

गोसवश्चोदनाख्ये तु सत्रे होमार्थमन्त्रकाः ।
रथारोहः कर्मविधिः प[illegible]रदनामकः ॥ ३ ॥
क्रतुस्तदीयपशवो ह्यग्निष्टुति पुरोरुचः ।
इन्द्रस्तुतिः पुरोरुक्स्यादप्तोर्यामविधिस्तथा ॥ ४ ॥
राजाभिषेकमन्त्राश्च रथारोहणमन्त्रकाः ।
भवन्ति वपने मन्त्रा विघनः क्रतुरप्ययम् ॥ ५ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ६ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

---

( मूलक्रमेण—अष्ट० २ अध्या० ७ ( १९ ) अनु० १८ ( ११९ )) ।
( भाष्यक्रमेण—का० २ प्रपा० ७ ( १९ ) अनु० १८ ( ११९ ))।

## अथ द्वितीयकाण्डेऽष्टमप्रपाठकारम्भः ।

### तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके सप्तमे हि सवाः सर्वे समीरिताः ।
याज्यानुवाक्याः काम्यानां पशूनामष्टमे श्रुताः ॥ २ ॥
वायव्यः श्वेत आलभ्य इति काम्या उदीरिताः ।
एकैकस्मिन्पशौ सूक्तमेकैकं भवति क्रमात् ॥ ३ ॥
ऋचः षट्सूक्त एकस्मिंस्तत्र द्वे द्वे क्रमाच्छ्रुते ।
वपायां च पुरोडाशे हविषीति क्रमो भवेत् ॥ ४ ॥

'वायव्यꣳ श्वेतमालभेत भूतिकामः' इत्यत्र वपायाः पुरोनुवाक्यामाह—

पीवो॑न्नाꣳ रयि॒वृधः॑ सुमे॒धाः । श्वे॒तः सि॑षक्ति नि॒यु॒ता॑मभि॒श्रीः । ते वा॒यवे॒ सम॑नसो॒ वित॑स्थुः । विश्वे॒न्नरः॑ स्वप॒त्यानि॑ चक्रुः, इति ॥

यो वायुदेवताकः श्वेतच्छागः पशुः सोऽयं सिषक्ति सक्तो भवति संबध्नातीत्यर्थः । उत्तरार्धे नर इत्यभिधास्यमानत्वान्नॄन्मनुष्यान्यजमानान्सिषक्तीति योजनीयम् । कीदृशान्यजमानान्पीवोन्नान्पीवांसि स्थूलानि प्रभूतान्यन्नानि येषां ते पीवोन्नास्तान् । रयिवृधो रय्या धनेन वर्धमानान् । सुमेधाः शोभनया मेधया यज्ञप्रयोगधारणशक्त्या युक्तान् । कीदृशः श्वेतः पशुर्नियुतामभिश्रीः, नितरां युवन्ति रथे मिश्रयन्तीति नियुतो वायोर्वडवास्ताभिरभिश्रयणीयः । एतस्य पशोर्वायव्यत्वेन वायुद्वारा वडवा अप्येतमाश्रयन्ति । यागे तान्नॄन्यजमानाञ्श्वेतः सिषक्ति । ते नरो यजमाना वायवे वायुदेवतार्थं समनसस्तेन देवेन समानमनस्कास्तस्मिन्नीतियुक्ता भूत्वा वितस्थुर्विशेषेण स्थिताः । ततो विश्वेद्विश्वान्येव वायुदेवताकानि कर्माणि स्वपत्यानि शोभनापत्यप्रदानि चक्रुः कृतवन्तः ।

अथ वपाया याज्यामाह—

रा॒येऽनु॒ यं ज॒ज्ञतू॒ रोद॑सी उ॒भे। रा॒ये दे॒वी धि॒षणा॑

धाति दे॒वम्। अधा॑ वा॒युं नि॒युत॑ः सश्चत स्वाः।

उ॒त श्वे॒तं वसु॑धितिं निरे॑के, इति।

रोदसी द्यावापृथिव्यावुभे रायेऽनु धनार्थमेव यं वायुं जज्ञतुरुत्पादितवत्यौ। यजमानानां धिषणा बुद्धिर्देवी विद्योतमाना सती वायुं देवं धाति धारयति निरन्तरं ध्यायतीत्यर्थः। अधाऽऽरब्धयागे तं वायुं स्वा नियुतः स्वकीया वडवाः सश्चत सेवन्ते। उतापि च रेको रिक्तत्वं तद्रहितं कर्म निरेकं तादृशे सर्वसाधनसंपूर्णे कर्मणि वसुधितिं हविर्लक्षणस्य वसुनो धारकं श्वेतं पशुमपि नियुतः सश्चतेत्यन्वयः।

अथ पुरोडाशस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

आ वा॑यो प्र॒याभि॑ः, इति।

'आ वायो भूषा' इति पुरोनुवाक्या। सा चैन्द्रवायवप्रस्तावे व्याख्याता। 'प्रयाभिर्यासि दाश्वाꣳसम्' इत्येषा याज्या। सा च हिरण्यगर्भ आपो हेत्यनुवाके व्याख्याता।

अथ हविषः पुरोनुवाक्यामाह—

प्र वा॒युमच्छा॑ बृह॒ती मनी॑षा (१)। बृ॒हद्र॑यिं

वि॒श्ववा॑राꣳ रथ॒प्राम्। द्यु॒तद्या॑मा नि॒युत॒ः पत्य॑मानः।

क॒विः क॒विमि॑यक्षसि प्रयज्यो, इति।

बृहती महती मनीषा यजमानस्य बुद्धिर्वायुमभिलक्ष्य प्रकर्षेण यातीति शेषः। कीदृशं वायुं बृहद्रयिं बृहती रयिर्महद्धनं यस्यासौ बृहद्रयिर्बृहद्धनप्रदायीत्यर्थः। विश्ववारां विश्वेषामनिष्टानां निवारकम्। रथप्रां स्वकीयं रथमपेक्षितैर्धनैः पूरयन्तम्। हे प्रयज्यो प्रकर्षेण यष्टुमुद्युक्त यजमान कविर्देवतातत्त्वाभिज्ञस्त्वं कविं सर्वज्ञं वायुं देवमियक्षसि यज पूजय। कीदृशः

---

१ क. 'द्रयिं बहुलम्'

च विद्युद्धामा यामच्छब्देन नियम्यरूपो यागोऽभिधीयते । द्योतमानो यागो यस्यासौ द्युद्धामा । नियुतः पत्यमानो नियुतो याः पूर्वोक्ता वडवास्ताः पत्यमानो वायोरानयनार्थं सेवमानः ।

अथ याज्यामाह—

आ नो नियुद्भिः शतिनीभिरध्वरम् । सहस्रिणीभि-

रुप याहि यज्ञम् । वायो अस्मिन्हविषि मादयस्व ।

यूयं पात स्वस्तिभिः सदा नः, इति ।

हे वायो शतिनीभिः शतसंख्यायुक्ताभिः सहस्रिणीभिः सहस्रसंख्यायुक्ताभिश्च नियुद्भिर्वडवाभिः सह नोऽस्मदीयमध्वरं हिंसारहितं यज्ञं प्रत्युप समीप आयाह्यागच्छ । आगत्य चास्मिन्हविषि स्वीकृते सति मादयस्व त्वं हृष्टः सन्नस्मानपि हर्षय । यूयं त्वं च त्वदीयभृत्याश्च सर्वे स्वस्तिभिरविनाशैः फलैर्नोऽस्मान्सदा पात रक्षत । यदेतत्षडृचं सूक्तं वायव्यपशौ प्रवृत्तं तदेतत्सूत्रकारः स्पष्टी चकार—"काम्यैः पशुभिरमावास्यायां पौर्णमास्यां वा यजेत । तेषां निरूढपशुबन्धवत्कल्पो वायव्यꣳ श्वेतमिति । ये ब्राह्मणेन व्याख्यातास्तेषामावापिकेषु स्थानेषु यथादेवतं षडृचो निदधाति । वपायाः पुरोडाशस्य हविष इति द्वे द्वे पीवोऽन्नाꣳ रयिवृधः सुमेधा इत्येतानि यथापूर्वं यथालिङ्गमाम्नातानि भवन्ति" इति ।

"अथ यः प्रजाकामः पशुकामः स्यात्स एवं प्राजापत्यमजं तूपरमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

प्रजापते न त्वदेतान्यन्यः । विश्वा जातानि परि

ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु (२) ।

वयꣳ स्याम पतयो रयीणाम्, इति ।

हे प्रजापते त्वदन्यः कश्चिदपि जातान्युत्पन्नानि यान्येतानि विश्वानि लोकजातानि सन्ति ता तानि परिबभूव परितो व्याप्तुं त्वत्तस्त्वत्तोऽन्यः कोऽपि न

समर्थः । वयं यत्कामा येन फलकामेन युक्ताः सन्तस्त्वे तुभ्यं जुहुमस्तत्फलं नोऽस्माकमस्तु सिध्यतु । वयं त्वत्प्रसादाद्रयीणां धनानां पतयः स्याम ।

अथ वपाया याज्यामाह—

> र॒यी॒णां पतिं॑ यज॒तं बृ॒हन्त॑म् । अ॒स्मिन्भ॒रे नृत॑म॒म्
> वाज॑सातौ । प्र॒जाप॑तिं प्रथम॒जामृ॒तस्य॑ । यजा॑म
> दे॒वमधि॑ नो ब्रवीतु, इति ।

भ्रियते संपाद्यते हविरत्रेति भरो यज्ञः । अस्मिन्भरे प्रजापतिं देवं वयं यजाम । कीदृशं देवं रयीणां पतिं धनस्वामिनम् । यजतं यजनीयम् । बृहन्तं महान्तम् । नृतममतिशयेन पुरुषं पुरुषेषूत्तममित्यर्थः । ऋतस्य यज्ञस्य प्रथमजां प्रथममेव जनयितारं "प्रजापतिर्यज्ञानसृजत" इत्यन्यत्र श्रवणात् । कीदृशे भरे वाजसातौ वाजस्यान्नस्य सातिर्दानं यस्मिन्यज्ञे सोऽयं वाजसा- तिस्तस्मिन् । सोऽयमस्माभिरिष्टः प्रजापतिर्देवेषु मध्ये नोऽस्मानाधिकान्ब्र- वीतु ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

> प्रजा॑पते॒ त्वं नि॑धि॒पाः पु॑रा॒णः । दे॒वानां॑ पि॒ता
> ज॒नि॑ता प्र॒जाना॑म् । पति॒र्विश्व॑स्य॒ जग॑तः पर॒स्पाः ।
> ह॒विर्नो॑ देव वि॒हवे॒ जु॑षस्व, इति ।

हे प्रजापते त्वं निधिपाः शङ्खपद्मादीनां निधीनां पालकः । पुराणो जगतः स्रष्टृत्वादनादिः । देवानां पिता पालकः । प्रजानां मनुष्यादीनां जनितो- त्पादयिता । विश्वस्य सर्वस्य जगतः पतिः स्वामी । परस्पा अतिशयेन पालयिता । हे देव विशेषेण हूयन्ते देवा अत्रेति विहवो यज्ञस्तस्मिन्विहवे नोऽस्मदीयं हविर्जुषस्व ।

अथ पुरोडाशस्य याज्यामाह—

> त॒वेमे लो॒काः प्र॒दिशो॒ दिश॑श्च (३) । प॒रा॒वतो॑
> नि॒वत॑ उ॒द्वत॑श्च । प्र॒जाप॑ते वि॒श्वसृ॒ज्जीवध॑न्य इ॒दं

नो देव । प्रतिहर्य हव्यम्, इति ।

हे प्रजापते, इमे लोका भूरादयो याश्च प्रदिशः प्रधानभूताः प्राच्याद्या अप्यन्या आग्नेयाद्या दिशस्तत्सर्वं तवैवाधीनम् । लोका विशेष्यन्ते । परावतो दूरदेशस्था द्वीपान्तरादयः । निवतो न्यग्भूताः पातालादयः । उद्वतश्चोर्ध्ववर्तिनः स्वर्गादयोऽपि । हे देव त्वं विश्वसृड्विश्वस्य स्रष्टा पाता वा । जीवेषु प्राणिषु धन्य ईश्वरो जीवधन्यस्तादृशो भूत्वा नोऽस्मदीयमिदं हव्यं प्रतिहर्य प्रतिगृहाण ।

अथ हविषः पुरोनुवाक्यामाह—

प्रजापतिं प्रथमं यज्ञियानाम् । देवानामग्रे यजतं यजध्वम् । स नो ददातु द्रविणꣳ सुवीर्यम् । रायस्पोषं विष्यतु नाभिमस्मे, इति ।

यज्ञियानां यज्ञयोग्यानां देवानां मध्ये प्रथमं मुख्यं प्रजापतिं यजतं यजनीयमग्रे यजध्वम् । हे ऋत्विज आदौ पूजयत । स प्रजापतिर्नोऽस्मभ्यं द्रविणं धनं रायस्पोषं धनपुष्टिं सुवीर्यं शोभनसामर्थ्यं च ददातु प्रयच्छतु । नाभिं नहनं दारिद्र्यादिबन्धनमस्मे विष्यत्वस्मत्तः शिथिलयतु ।

अथ हविषो याज्यामाह—

यो राय ईशे शतदाय उक्थ्यः । यः पशूनाꣳ रक्षिता विष्ठितानाम् । प्रजापतिः प्रथमजा ऋतस्य (४) । सहस्रधामा जुषताꣳ हविर्नः, इति ।

यः प्रजापतिः शतदायः शतसंख्याकधनप्रद उक्थ्यः स्तुत्यः सन्राय ईशे धनस्येश्वरो भवति । यश्च प्रजापतिर्विष्ठितानां विविधप्रदेशस्थितानां गोमहिषादीनां पशूनां रक्षिता वर्तते । स प्रजापतिर्ऋतस्य यज्ञस्य प्रथमजाः प्रथममुत्पादकः । सहस्रधामा सहस्रसंख्याकस्थानयुक्तः सन्नोऽस्मदीयं हविर्जुषताम् ।

अथ " सोमापौष्णं त्रैतमालभेत पशुकामः " इत्यस्य पशोः सूक्ते वपासंबन्धियाज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

सोमा॑पूषणेमौ दे॒वौ, इति ।

" सोमापूषणा जनना " इति पुरोनुवाक्या । ' इमौ देवौ जायमानौ जुषन्त ' इति याज्या । एतच्चोभयम् " अग्नाविष्णू महितद्वां महित्वम् " इत्यत्र व्याख्यातम् ।

अथ तत्रैव पुरोडाशस्य पुरोनुवाक्यामाह—

सोमा॑पूषणा॒ रज॑सो वि॒मान॑म् । स॒प्तच॑क्र॒ꣳ रथ॒मवि॑श्वमिन्वम् । वि॒षू॒वृतं॒ मन॑सा युज्यमा॑नम् । तं जि॑न्वथो वृषणा॒ पञ्च॑रश्मिम्, इति ।

हे सोमापूषणौ वृषणा कामवर्षकौ तं रथं जिन्वथः प्रीणयथ आरोहणेनालंकुरुत इ( मि )त्यर्थः । कीदृशं रथं रजसो रञ्जनात्मकस्य गमनस्य विमानं निर्मातारम् । सप्तचक्रं सप्तसंख्याकैश्चक्रैर्युक्तम् । अत एवान्यत्राप्याम्नायते—"सप्तचक्रं सप्त वहन्त्यश्वाः" इति । अविश्वमिन्वं विश्वैः प्राणिभिर्मीयते परिच्छिद्यत इति विश्वमिन्वस्तद्विलक्षणमविश्वमिन्वं केनापि परिच्छेत्तुमशक्यमित्यर्थः । विषूवृतमप्रतिहतगतित्वान्नानादेशेषु वर्तमानम् । मनसा युज्यमानमिच्छामात्रेणाश्वैः संयुज्यमानम् । पञ्चरश्मि हेमन्तशिशिरयोरैक्येन पञ्चर्तवो रश्मिस्थानीया यस्य सूर्यरथस्य सोऽयं पञ्चरश्मिः । आदित्यरथगमनेन ह्यृतवो निष्पाद्यन्ते । तस्मादृतूनां रश्मित्वोपचारः ।

अथ पुरोडाशस्य याज्यामाह—

दि॒व्य॑न्यः सद॑नं च॒क्र उ॒च्चा । पृ॒थि॒व्याम॒न्यो अध्य॒न्तरि॑क्षे । ताव॒स्मभ्यं॑ पुरु॒वारं॑ पु॒रु॒क्षुम् । रा॒यस्पोषं॒ विष्य॑तां॒ नाभि॑म॒स्मे, ( ५ ) इति ।

१ ख. ग. °रयोः समासेन ।

योऽयं सोमश्चन्द्रो यश्च पूषाऽऽदित्यस्तयोरन्य एकः सूर्यो दिवि द्युलोक उच्चा सदनं चक्र उन्नतदेशे स्थानं कृतवान् । अन्यश्चन्द्रः पृथिव्यामन्तरिक्षे चाध्युपरि सदनं स्थानं चक्रे । पृथिव्यां लतात्मकः सोमस्तिष्ठति । अन्तरिक्षे चन्द्रस्तिष्ठति । तौ सोमापूषणावस्मभ्यं रायस्पोषं दत्तामिति शेषः । कीदृशं पुरुवारं पुरुभिर्बहुभिर्वरणीयम् । पुरुक्षुं पुरुभिर्बहुभिः क्षूयते शब्द्यते प्रशस्यत इति पुरुक्षुस्तादृशम् । नाभिं नहनं दारिद्र्यबन्धनमस्मे विष्यताम-स्मत्तः शिथिलयताम् ।

अथ हविषः पुरोनुवाक्यामाह—

धियं पूषा जिन्वतु विश्वमिन्वः । रयिꣳ सोमो रयिपतिर्दधातु । अवतु देव्यदितिरनर्वा । बृहद्वदेम विदथे सुवीराः, इति ।

विश्वं मिनोत्येतावदिति निश्चिनोतीति विश्वमिन्वस्तादृशः पूषा सूर्यो धियमस्मद्बुद्धिं जिन्वतु प्रीणयतु । रयिपतिर्धनस्वामी सोमो रयिं धनं दधात्वस्मासु संपादयतु । अदितिर्भूमिर्देव्यस्मानवतु । कीदृश्यनर्वाऽर्वणा भ्रातृव्येण रहिता भ्रातृव्यो वा अर्वा इति श्रुतेः । अर्वा रिपुः । सर्वोऽपि भूमेर्बन्धुरेव न तु कश्चिदपि शत्रुः । सुवीराः शोभनपुत्राद्युपेता वयं विदथे यज्ञे बृहत्प्रौढं स्तोत्रं वदेम ।

अथ हविषो याज्यामाह—

विश्वान्यन्यो भुवना जजान । विश्वमन्यो अभिचक्षाण एति । सोमापूषणाववतं धियं मे । युवाभ्यां विश्वाः पृतना जयेम, इति ।

अन्यः सोमो विश्वानि भुवनान्योषधिद्वारा जजानोत्पादयामास । अन्यः पूषा विश्वमभिचक्षाणः सर्वतः प्रकाशयमानः प्रतिसंचरति । हे सोमापूषणौ मे

---

1 क. प्रकाशयतु ।

धियं बुद्धिं सत्कर्मविषयामवतं रक्षतम् । युवभ्यां युवयोः प्रसादाद्वयं विश्वाः पृतनाः सर्वाः परकीयसेना जयेम ।

अथ 'यो वरुणगृहीतः स्यात्स एतं वारुणं कृष्णमेकशितिपादमालभेत' इत्यस्य पशोर्वपापुरोडाशहविःषु प्रत्येकं याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

उदुत्तमं वरुणास्तभ्नाद्याम् । यत्किंचेदं कितवासः ।

अव ते हेडस्तत्त्वा यामि, इति ।

'उदुत्तमं वरुणपाशम्' इति वपायाः पुरोनुवाक्या । सा च 'वैश्वानरः' इत्यत्र व्याख्याता । 'अस्तभ्नाद्यामृषभः' इति याज्या । सा च 'उदायुषा स्वायुषा' इत्यत्र व्याख्याता । 'यत्किंचेदं वरुण' इति पुरोडाशस्य पुरोनुवाक्या । 'कितवासो यद्रिपुः' इति याज्या, तदुभयं 'त्वमग्ने वृहद्' इत्यत्र व्याख्यातम् । 'अव ते हेडो वरुण' इति हविषः पुरोनुवाक्या, सा च 'वैश्वानरो नः' इत्यत्र व्याख्याता । 'तत्त्वा यामि ब्रह्मणा' इति याज्या, सा च 'इन्द्रं वो विश्वतस्परीन्द्रम्' इत्यत्र व्याख्याता ।

अथ 'यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामवि वशामादित्येभ्यः कामायाऽऽलभेत' इत्यस्य पशोः सूक्ते वपापुरोडाशहविःषु क्रमेण याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

आदित्यानामवसा न दक्षिणा । धारयन्त आदित्यासस्तिस्रो भूमीर्धारयन् । यज्ञो देवानां शुचिरपः (६), इति ।

मनीषाऽम्बं चर्तस्यासमे कितवासश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

====

'आदित्यानामवसा नूतनेन' इति वपायाः पुरोनुवाक्या । 'न दक्षिणा विचिकिते' इति याज्या । 'धारयन्त आदित्यासो जगत्स्थाः' इति पुरोडाशस्य पुरोनुवाक्या । 'तिस्रो भूमीर्धारयंस्त्रीरुत द्यून्' इति याज्या । 'यज्ञो देवानां प्रत्येति' इति हविषः पुरोनुवाक्या । 'शुचिरपः सूयवसा

अद्रुघः ' इति याज्या । तदेतत्सूक्तं सर्वम् ' इन्द्रं वो विश्वतस्परीन्द्रं नरः' इत्यत्र व्याख्यातम् । अत्रेदं सूक्तं "यो ब्रह्मवर्चसकामः स्यात्तस्मा एतां दशर्षभामालभेत" इति पशौ योजनीयम् । पूर्वोक्ते तु पशौ सूक्त-मुत्तरत्र भविष्यति । तत्र हि कामेन देवा इति कामशब्दोदितो लिङ्गवि-शेषः प्रतीयते । लिङ्गेन हि पाठक्रमस्य बाधो युक्तः । तस्माद्दशर्षभाया आदित्यदेवताकत्वात्तत्रेदं सूक्तमुत्कृष्टव्यम् ।

अत्र विनियोगसंग्रहः—

याज्याः काम्यपशूनां तु वर्णिता अष्टमे क्रमात् ।
ऋचः षट्सूक्त एकस्मिन्विधिशेषो विविच्यते ॥ १ ॥
पीवोऽन्नामिति वायव्ये पशौ सूक्तमुदीरितम् ।
प्रजासूक्तं तूपरे स्यात्सोमा स्रैते पशुप्रदे ॥ २ ॥
उदुत्तमं वारुणे स्यादादित्यानामवेत्यदः ।
दशर्षभाया विज्ञेयं लिङ्गेन क्रमबाधनात् ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथाष्टमे द्वितीयोऽनुवाकः ।

---

प्रथमानुवाके वायव्यादीनां पशूनां सूक्तान्यभिहितानि । द्वितीये वशादीनां पशूनां सूक्तान्युच्यन्ते । तत्र "स एतामैर्षि वशामादित्येभ्यः कामायाऽऽलभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

ते शुक्रासः शुचयो रश्मिवन्तः । सीदन्त्वादित्या अधि बर्हिषि प्रिये । कामेन देवाः सरथं दिवो नः । आयान्तु यज्ञमुप नो जुषाणाः, इति ।

ते प्रसिद्धा आदित्याः प्रिये बर्हिष्यस्मदीये यागेऽधिसीदन्त्वधिष्ठाय सीदन्तु । कीदृशा आदित्याः शुक्रासः कान्तियुक्ताः । शुचयः शुद्धिहेतवः । रश्मि-वन्तो रश्मिभिरनेकैर्युक्ताः । कामेनाभिलषितार्थप्रदेन देवेन सहिता आदित्या

१ क. 'तत्रैवं सू' ।

देवाः सरथं रथसहितं यथा भवति तथा दिवः सकाशान्नोऽस्मान्प्रत्यायान्तु। ततो नोऽस्मदीयं यज्ञमुपेत्य जुषाणाः प्रीतिपूर्वकं सेवमानादिवष्ठन्तु।

अथ वपाया याज्यामाह—

ते सूनवो अदितेः पीवसामिषम्। घृतं पिन्वत्प्रतिहर्यन्नृतेजाः। प्र यज्ञिया यजमानाय येमुरे। आदित्याः कामं पितुमन्तमस्मे, इति।

ये प्रसिद्धा अदितेरदितिदेवतायाः सूनवः पुत्रा ऋतेजा यज्ञनिमित्तमुत्पन्नाः सन्तः पीवसां पीवराणामतिस्थूलानां हविषां मध्य इषमिष्यमाणमस्मदीयपुरोडाशरूपमन्नं पिन्वद्घृतं प्रीतिसाधनमाज्यं च प्रतिहर्यन्प्रत्येकं कामयन्ताम्। यज्ञिया यज्ञयोग्या आदित्या अस्मे मह्यं यजमानाय पितुमन्तमन्नवन्तं काममभिलषितार्थं प्रयेमुरे दत्तवन्तः।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

आ नः पुत्रा अदितेर्यान्तु यज्ञम्। आदित्यासः पथिभिर्देवयानैः (१)। अस्मे कामं दाशुषे सन्नमन्तः। पुरोडाशं घृतवन्तं जुषन्ताम्, इति।

अदितेः पुत्रा आदित्यास आदित्यनामका देवा देवयानैः पथिभिर्देवानां योग्यैर्मार्गैर्नोऽस्मदीयं यज्ञं प्रत्यायान्तु। आगत्य च दाशुषे हविर्दत्तवतेऽस्मे मह्यं यजमानाय काममभिलषितार्थं सन्नमन्तः प्रापयन्तो घृतवन्तं बहुलघृतयुक्तं पुरोडाशं जुषन्ताम्।

अथ पुरोडाशस्य याज्यामाह—

हक्भायत निर्ऋतिं सेधतामतिम्। प्र रश्मिभिर्यतमाना अमृध्राः। आदित्याः काम प्रयतां वषट्कृतिम्। जुषध्वं नो हव्यदातिं यजत्राः, इति।

हे आदित्या हे काम यूयं सर्वे निर्ऋतिं राक्षसजातिं बाधिकां देवतानां स्फायत स्तब्धां कुरुत । अस्मद्बाधसामर्थ्यरहितां कुरुतेत्यर्थः । अमतिम-स्मदीयं बुद्धिमान्द्यं सेधत प्रतिषेधत निवारयतेत्यर्थः । कीदृशा आदित्या रश्मिभिः स्वकीयैः प्रयतमाना अन्धकारनिवारणार्थमुद्योगं कुर्वन्तः । अमृध्रा अमृदवोऽनिष्टनिवारणे तीक्ष्णा इत्यर्थः । तादृशा यूयं प्रयतां परिशुद्धां हव्यदातिं हविर्दानकारणभूतां नो वषट्कृतिमस्माभिः प्रयुक्तं वषट्कारं जुषध्वम् । कीदृशा यूयं यजत्रा यज्ञयोग्याः ।

अथ हविषः पुरोनुवाक्यामाह—

आदित्यान्काममवसे हुवेम । ये भूतानि जनयन्तो विचिख्युः । सीदन्तु पुत्रा अदितेरुपस्थम् । स्तीर्णं बर्हिर्हविरद्याय देवाः ( २ ), इति ।

ये पूर्वोक्ता आदित्या देवा यश्च कामदेवस्तान्सर्वानवसेऽस्मद्रक्षार्थं हुवेमेह कर्मण्यह्वायामः । ये देवा भूतानि जनयन्तः प्राणिजातान्युत्पादयन्तो विचि-ख्युर्विशेषेण ख्यातिं गताः । ते देवा अदितेः पुत्रा हविरद्याय हविर्भक्षणा-योपस्थं समीपे स्थातुं योग्यं स्तीर्णं वेद्यां प्रसारितं बर्हिः सीदन्तु प्राप्नुवन्तु ।

अथ हविषो याज्यामाह—

स्तीर्णं बर्हिः सीदता यज्ञे अस्मिन् । ध्राजाः सेधन्तो अमतिं दुरेवाम् । अस्मभ्यं पुत्रा अदितेः प्रयꣳसत । आदित्याः कामं हविषो जुषाणाः, इति ।

हे आदित्या हे कामास्मिन्यज्ञे स्तीर्णे वेद्यामास्तीर्णे बर्हिः सीदत प्राप्नुत । कीदृशा ध्राजा गतिमन्तोऽमतिमस्मदीयं बुद्धिमान्द्यं दुरेवां दुर्गतिं च सेधन्तः प्रतिषेधन्तस्तादृशा अदितेः पुत्रा यूयं हविषो जुषाणा अस्मदीयं हविः सेवमाना अस्मभ्यं प्रयंसत ग्रभीष्टं प्रयच्छत ।

अथ 'यो ब्रह्मवर्चसकामः स्यात्तस्मा एता ब्रह्मा आलभेत । आग्नेयीं कृष्ण-

ग्रीवी॑ सꣳहिताꣳ सैन्द्री॑ श्वेतां बार्हस्पत्याम्' इति । अत्राऽऽग्नेय्याः सूक्ते वपायाः पुरोनुवाक्यामाह—

अग्ने॒ नय॑ सु॒पथा॑ रा॒ये अ॒स्मान् । विश्वा॑नि देव व॒युना॑नि वि॒द्वान् । यु॒यो॒ध्य॑स्मज्जु॑हुरा॒णमेनः । भूयि॑ष्ठां ते॒ नम॑उक्तिं विधेम, इति ।

हेऽग्ने देव त्वं विश्वानि वयुनानि सर्वान्मार्गान्विद्वाञ्जानन्वर्तसे । अतोऽस्मान्राये धनप्राप्तये सुपथा नय शोभनेन कर्मानुष्ठानमार्गेण प्रापय । जुहुराणं कुटिलं प्रतिबन्धकमेनः पापमस्मद्युयोध्यस्मत्तः पृथक्कुरु । ते तुभ्यं भूयिष्ठामतिबहुलां नमउक्तिं नमस्कारयुक्तां वाचं विधेम कुर्याम् ।

अथ वपाया याज्यामाह—

प्र वः॑ शु॒क्राय॑ भा॒नवे॑ भरध्वम् । ह॒व्यं म॒तिं चा॒ग्नये॒ सुपू॑तम् (२) । यो दैव्या॑नि॒ मानु॑षा ज॒नूꣳषि । अन्तर्विश्वा॑नि वि॒द्मना॒ जिगा॑ति, इति ।

हे ऋत्विजो वो युष्माकमभीष्टसिद्ध्यर्थं शुक्राय निर्मलाय भानवे रश्मियुक्तायाग्नये सुपूतं सुष्ठु पूतं शुद्धमिदं हव्यं मतिं चाग्निध्यानार्थं प्रकर्षेण भरध्वं संपादयत । योऽग्निर्दैव्यानि देवविषयाणि मानुषा मनुष्यविषयाणि जनूंषि जन्मानि विद्मना वेदनेन जिगाति प्राप्नोति । अभिज्ञः सन्देवान्मनुष्यांश्च जनयतीत्यर्थः । पुनरप्यन्तर्देवानां मनुष्याणां च मध्ये यान्यवान्तरजन्मानि यक्षगन्धर्वादीनि ब्राह्मणक्षत्रादीनि च तानि विश्वानि सर्वाणि जिगाति । तस्मा अग्नय इति पूर्वत्रान्वयः ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

अच्छा॒ गिरो॑ म॒तयो॑ देव॒यन्तीः॑ । अ॒ग्निं य॑न्ति॒ द्रवि॑णं॒ भिक्ष॑माणाः । सु॒सं॒दृश॑ꣳ सु॒प्रती॑क॒ꣳ स्वञ्च॑म् ।

---

१ क. चाग्नेययागार्थं । २ क. 'क्षत्रियादी'।

हव्यवाहमरतिं मानुषाणाम्, इति ।

गिरोऽस्मदीयाः स्तुतिरूपा वाचो मतयो ध्यानरूपा बुद्धयश्च देवयन्तीर्देवानिच्छन्त्यो द्रविणं भिक्षमाणा धनं याचमाना अग्निमच्छाग्निमभिमुखीकृत्य यन्ति प्रवर्तन्ते । कीदृशमग्निं सुसंदृशमत्यन्तं सुखेन द्रष्टुं शक्यम् । सुप्रतीकं शोभनावयवोपेतम् । स्वञ्चं शोभनगतिम् । मानुषाणां यजमानानां हव्यवाहं हविषो वोढारं मानुषैर्यद्धविर्दीयते तद्देवान्प्रति वहतीत्यर्थः । रतिरुपरमस्तद्रहितमरतिं निरन्तरं वहतीत्यर्थः ।

अथ पुरोडाशस्य याज्यामाह—

अग्ने त्वमस्मद्युयोध्यमीवाः । अनग्नित्रा अभ्यमन्त कृष्टीः । पुनरस्मभ्यꣳ सुवितायं देव । क्षां विश्वेभिरजरेभिर्यजत्र ( ४ ), इति ।

हेऽग्ने त्वममीवा रोगजातीरस्मद्युयोध्यस्मत्तो वियोजय । या रोगजातयोऽनग्नित्रा उदराग्नित्राणरहिता मन्दाग्निहेतव इत्यर्थः । तादृश्यो भूत्वा कृष्टीर्मनुष्यानभ्यमन्ताभितो बाधितवत्यस्ता ईदृशीर्युयोधीति पूर्वत्रान्वयः । हे यजत्र यजनीय देवाजरेभिर्जरानिवर्तकैर्विश्वेभिः सर्वैरौषधैः क्षां क्षयवतीं[1] पुनरस्मभ्यं युयोध्यस्मत्तो वियोजय । किमर्थं सुविताय शोभनगमनाय नीरोगत्वेन जीवनायेत्यर्थः ।

अथ हविषः पुरोनुवाक्यामाह—

अग्ने त्वं पारया नव्यो अस्मान् । स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी । भवा तोकाय तनयाय शं योः, इति ।

---

१ क. योग्यम् ।

हेऽग्ने त्वं विश्वानि दुर्गाण्यति सर्वानुपद्रवानतिक्रम्य स्वस्तिभिः श्रेयोविशेषैः फलैर्युक्तः सन्नस्मान्पारय कर्मणः समाप्तिं प्रापय । कीदृशस्त्वं नव्यः सर्वदा नूतनो जरामरणरहित इत्यर्थः । नोऽस्माकं पूश्च निवासार्थं पुरी विस्तृता भवतु । उर्वी सस्यनिष्पत्त्यर्था भूमिश्च बहुलाऽत्यधिका भवतु । त्वं च तोकाय पुत्राय तनयाय तत्पुत्राय च शं सुखहेतुर्योर्दुःखवियोगहेतुश्च भव ।

अथ हविषो याज्यामाह—

प्र कारवो मनना वच्यमानाः । देवद्रीचीं नयथ देवयन्तः । दक्षिणावाड्वाजिनी प्राच्येति । हविर्भरन्त्यग्नये घृताची, इति ।

हे कारवः कर्मकर्तार ऋत्विजो यूयं वाच्यमाना मन्त्रपाठरूपं वचनं प्राप्नुवन्तो देवयन्तो देवानिच्छन्तो मनना मननीयामिमां यागक्रियां देवद्रीचीं नयथ देवान्प्रति यथा गच्छति तथा प्रापयत । सा च यज्ञक्रिया दक्षिणां वहतीति दक्षिणावाट् । वाजोऽन्नमस्या अस्तीति वाजिनी । प्रकृष्टं फलमञ्चति गच्छतीति प्राची । घृतमञ्चति प्राप्नोतीति घृताची । अग्नये हविर्भरन्ती सत्येति प्रवर्तते ।

अथ 'सखायावैन्द्रीम्' इत्यस्य पशोः सूक्ते वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति—

इन्द्रं नरो युजे रथम्, इति ।

'इन्द्रं नरो नेमधिता' इति पुरोनुवाक्या । सा च 'इन्द्रं वो विश्वतस्परि' इत्यत्र व्याख्याता । 'युजे रथं गवेषणम्' इति याज्या । सा च 'जुष्टो दमूनाः' इत्यत्र व्याख्याता ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

जगृभ्णा ते दक्षिणमिन्द्र हस्तम् ( ५ ) । वसूयवो वसुपते वसूनाम् । विद्मा हि त्वा गोपतिꣳ शूर गोनाम् । अस्मभ्यं चित्रं वृषणं रयिं दाः, इति ।

हे इन्द्र ते त्वदीयं दक्षिणहस्तं जगृभ्णा वयं गृहीतवन्तो हस्तं धृत्वा प्रार्थयाम इत्यर्थः। कीदृशा वयं वसूयवो धनेच्छावन्तः। वसूनां वसुपत इत्येतदिन्द्रस्य विशेषणम्। यानि वसूनि धनानि हिरण्यानि सन्ति तेषां मध्ये यानि श्रेष्ठानि मणिमुक्तादीनि तत्स्वामिन्नित्यर्थः। हे शूर शत्रूणामभिभवितस्त्वां गोनां गवां मध्ये गोपतिं प्रशस्तगोस्वामिनं हि यस्माद्वयं विद्म तस्मादस्मभ्यं चित्रं नानाविधं वृषणं कामाभिवर्षणक्षमं रयिं दा धनं देहि।

अथ पुरोडाशस्य याज्यामाह—

तवेदं विश्वमभितः पशव्यम्। यत्पश्यसि चक्षसा सूर्यस्य। गवामसि गोपतिरेक इन्द्र। भक्षीमहि ते प्रयतस्य वस्वः, इति।

हे इन्द्र सूर्यस्य चक्षसा प्रकाशेन यद्विश्वं पश्यसि, तदिदं विश्वमभितः सर्वतः पशव्यं पशुयुक्तं तवाधीनमिति शेषः। त्वमेक एव गवां मध्ये गोपतिरसि प्रशस्तगोस्वामी भवसि। प्रयतस्य प्रयतमानस्य ते तव वस्वो वसूनि धनानि भक्षीमह्यनुभूयास्म।

अथ हविषः पुरोनुवाक्यामाह—

समिन्द्र णो मनसा नेषि गोभिः। सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या। सं ब्रह्मणा देवकृतं यदस्ति (६)। सं देवानाꣳ सुमत्या यज्ञियानाम्, इति।

हे इन्द्र त्वं मनसा स्मरणमात्रेण नोऽस्मान्गोभिः संनेषि संयोजय। हे मघवन्सूरिभिर्विद्वद्भिः पुत्रैः संयोजय। स्वस्त्या क्षेमेण संयोजय। देवकृतं देवार्थं निष्पन्नं यन्मन्त्रजातमस्ति तेन ब्रह्मणा मन्त्रजातेन संयोजय। यज्ञियानां यज्ञार्हाणां देवानां सुमत्याऽनुग्रहबुद्ध्या संयोजय।

अथ हविषो याज्यामाह—

आराच्छत्रुमपबाधस्व दूरम्। उग्रो यः शम्बः पुरुहूत तेन। अस्मे धेहि यवमद्गोमत्-

द्रिन्द्र । कृधी धियं जरित्रे वाजरत्नाम्, इति ।

हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र, उग्रः क्रूरो यः शम्बनामकोऽसुरोऽस्ति तेन सहितमारात्समीपे वर्तमानं शत्रुं दूरं यथा भवति तथाऽपबाधस्व । हे इन्द्र यवमद्यवैः प्रभूतैरुपेतं गोमद्बहुभिर्गोभिरुपेतं धनमस्मे धेह्यस्मासु स्थापय । जरित्रे जरणशीले मयि वाजरत्नामन्नेन रत्नैश्च संपूर्णां धियमनुग्रहबुद्धिं कृधि कुरु ।

अथ 'श्वेतां बार्हस्पत्याम्' इत्यस्य पशोः सूक्ते वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति--

आवेधसꣳ स हि शुचिः, इति ।

'आवेधसं नीलपृष्ठम्' इति पुरोनुवाक्या । 'स हि शुचिः शतपत्रः' इति याज्या । एतदुभयं 'यज्ञो राये' इत्यत्र व्याख्यातम् ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह--

बृहस्पतिः प्रथमं जायमानः । महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तुविजातो रवेण । वि सप्तरश्मिरधमत्तमाꣳसि (७), इति ।

योऽयं बृहस्पतिः सोऽयमितरेभ्यो देवेभ्यः प्रथमं पूर्वं जायमानः सन्परमे व्योमन्नुत्कृष्ट आकाशे स्वर्गरूपे ज्योतिषो महोऽन्यदीयात्प्रकाशादत्यन्तं महान्भासते । कीदृशो बृहस्पती रवेण वेदशास्त्ररूपेण शब्देन सप्तास्यः प्रसृतमुखः । अथवा सप्तसंख्याकान्यास्यानि ज्वालारूपाणि यस्याग्नेः सोऽयं सप्तास्यः । रवेण मन्त्रेण होमकाले हविः स्वीकर्तुं वह्निरूपो भवतीत्यर्थः । तुविजातः सर्वेषां मध्ये बलयुक्तत्वेनोत्पन्नः । तादृशो बृहस्पतिः सप्तरश्मिरग्निरूपेण सप्तजिह्वात्मकरश्मियुक्तः संस्तमांसि व्यधमाद्विनाशितवान् ।

अथ पुरोडाशस्य याज्यामाह--

बृहस्पतिः समजयद्वसूनि । महो व्रजान्गोमतो देव एषः । अपः सिषासन्त्सुवरप्रतीतः । बृहस्पतिर्हे

न्त्यमित्रमर्कैः, इति।

अयं बृहस्पतिर्वसूनि धनानि समजयत्सम्यग्जितवान्। तथैव देवो गोमतो बहुभिर्गोभिर्युक्तान्महो महतः प्रौढान्व्रजान्गोगृहान्समजयत्सम्यग्जितवान्। तादृशो बृहस्पतिरपः सिषासन्वृष्टिरूपं जलं दातुमिच्छन्सुवः स्वर्गमप्रतीतः प्रत्यावृत्तिराहित्येन प्राप्तः सर्वदा तत्र स्थित इत्यर्थः। स च बृहस्पतिरर्कैरस्मत्कृतैरर्चनैरमित्रं शत्रुं हन्ति।

अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

बृहस्पते पर्येवा पित्रे, इति।

'बृहस्पते परिदीया रथेन' इति पुरोनुवाक्या। 'एवा पित्रे विश्वदेवाय' इति याज्या। बृहस्पते परिदीया रथेनेत्यसौ 'आशुः शिशानः' इत्यत्र व्याख्याता। 'एवा पित्रे विश्वदेवाय' इत्यसौ 'अग्नाविष्णू महि तद्वाम्' इत्यत्र व्याख्याता।

अथ 'सारस्वतं मेषम्' इत्यस्य पशोः सूक्ते पञ्चानामृचां प्रतीकानि दर्शयति—

आ नो दिवः पावीरवी। इध्मा जुह्वाना यस्ते स्तनः।

सरस्वत्यभि नो नेषि, इति।

'आ नो दिवो बृहतः' इत्येषा वपायाः पुरोनुवाक्या। सा च 'अग्नाविष्णू महि तद्वाम्' इत्यत्र व्याख्याता। 'पावीरवी कन्या' इत्येषा याज्या। सा च 'आग्नेयं यज्ञमध्वरम्' इत्यत्र व्याख्याता। 'इध्मा जुह्वाना युष्मदा नमोभिः' इत्येषा पुरोडाशस्य पुरोनुवाक्या। सा च 'उत नः प्रिया' इत्यत्र व्याख्याता। 'यस्ते स्तनः शशयः' इति याज्या। सा चारण्यककाण्डे प्रवर्ग्यमन्त्रेषु व्याख्यास्यते। 'सरस्वत्यभि नो नेषि वस्यः' इति हविषः पुरोनुवाक्या। सा च 'जुष्टी नरः' इत्यत्र व्याख्याता।

अथ हविषो याज्यामाह—

इयꣳ शुष्मेभिर्बिसखा इवारुजत्। सानु गिरीणां तविषेभिरूर्मिभिः। पारावतघ्नीमवसे

सुवृक्तिभिः । सरस्वतीमाविवासेम धीतिभिः, (८) इति ।

देवयानैर्देवाः सुपूतं यजत्र हस्तमस्ति तमाऽस्यर्मिभिर्द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

इयं सरस्वती नदीरूपोर्मिभिः स्वकीयैस्तरङ्गैः स्वतीरावस्थितानां गिरीणां सानु मूलप्रदेशमरुजद्भग्नमकरोत् । तत्र दृष्टान्तः—बिसखा इव यथा जलमध्ये बिसानि खनितुं प्रवृत्तः पुरुष आयासमन्तरेणैवोन्मूलयत्येवमत्राप्यूर्मिस्पर्शमात्रेण पर्वतमूलानि विशीर्णानि भवन्ति । कीदृशैरूर्मिभिः शुष्मेभिः प्रबलैः । तविषेभिरतिस्थूलैः । वयं तु सरस्वतीं धीतिभिर्ध्यानविशेषैराविवासेम सर्वत आच्छादयामः । किमर्थम् । अवसे रक्षणार्थम् । कीदृशीं सरस्वतीं पारावतघ्नीम् । अवदमवरतीरं पारं परतीरं च स्ववेगेन हन्तीति पारावतघ्नी ताम् । कीदृशीभिर्धीतिभिः सुवृक्तिभिः वृक्तिरन्यचिन्तावर्जनं सुष्ठु वृक्तिर्यासु ध्यानक्रियासु ताः सुवृक्तयस्ताभिरनन्य(रम्य)-चिन्तारहितैर्ध्यानविशेषैर्निरन्तरं ध्यायाम इत्यर्थः ।

अत्र विनियोगसंग्रहः—

ते शुक्रेति वपायां स्यादाग्नेय्यामग्न इत्यथ ।
इन्द्रमैन्द्र्यां तथाऽऽवेधसं श्वेतायामुदीरितम् ॥
आ नो मेष्यां द्वितीयेऽस्मिन्सूक्तपञ्चकमीरितम् ॥१॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमप्रपाठके द्वितीयोऽनुवाकः ॥२॥

अथाष्टमे तृतीयोऽनुवाकः ।

द्वितीये वशादीनां पशूनां सूक्तान्यभिहितानि । तृतीये सौम्यादीनां सूक्तान्युच्यन्ते । तत्र "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयावी" इत्येतस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

सोमो धेनुꣳ सोमो अर्वन्तमाशुम् । सोमो वीर

---

१ क. ख. "पायाः स्या" । २ क. ख. इत्यथः ।

कर्मण्यं ददातु । सादन्यं विदथ्यꣳ सभेयम् ।

पितु[illegible]णं यो ददा[illegible]दस्मै, इति ।

योऽयं सोमो देवः सोऽयमस्मै यजमानाय धेनुं ददातु । तथा स सोम आशुं शीघ्रगामिनमर्वन्तमश्वं ददातु । तथा स सोमः कर्मण्यं श्रौतस्मार्तकर्मयोग्यं वीरं पुत्रं ददातु । कीदृशं वीरं सदनं गृहं तत्र साधुः सादन्यस्तं गृहनिर्वाहकमित्यर्थः । विदथे यज्ञे कुशलं विदथ्यम् । सभायां साधुः सभेयस्तं सभेयम् । स्वकीयस्य पितुः श्रवणं कीर्तिः संपाद्यते येन सोऽयं पितुःश्रवणस्तम् । यो यजमानः सोमाय देवाय ददाशच्चरुपुरोडाशादिकं ददात्यस्मै यजमानायेति पूर्वत्रान्वयः ।

अथ वपाया याज्यायाः पुरोडाशस्य पुरोनुवाक्यायाश्च प्रतीके दर्शयति—

अषाढं युत्सु त्वꣳ सोम क्रतुभिः, इति ।

"अषाढं युत्सु पृतनासु" इति वपाया याज्या । "त्वꣳ सोम क्रतुभिः" इति पुरोडाशस्य पुरोनुवाक्या । एतच्चोभयं "जुष्टी नरः" इत्यत्र व्याख्यातम् ।

अथ पुरोडाशस्य याज्यायाः प्रतीकं दर्शयति—

या ते धामानि हविषा यजन्ति, इति ।

सा च "अग्नेरातिथ्यमसि" इत्यत्र व्याख्याता ।

अथ हविषः पुरोनुवाक्यामाह—

त्वमिमा ओषधीः सोम विश्वाः । त्वमपो अजनयस्त्वं गाः । त्वमातनोर्वन्तरिक्षम् । त्वं ज्योतिषा वि तमो ववर्थ (१), इति ।

हे सोम त्वं विश्वाः सर्वा इमा ओषधीरजनय उत्पादितवानसि । तथा त्वमपो जलान्यजनयः । तथा त्वं गा गवादिपशूनजनयः । तथा त्वमुरु विस्तीर्णमन्तरिक्षमाततन्थ विस्तारितवानसि । तथा त्वं ज्योतिषा तेजसा तमोऽन्धकारं ववर्थ निवारितवानसि ।

हविषो याज्यामाह—

या ते धामानि दिवि या पृथिव्याम् । या पर्व-

त्स्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेडन् ।
राजन्त्सोम प्रति हव्या गृभाय, इति ।

हे सोम राजंस्ते तव द्युलोके या धामानि यानि स्थानानि सन्ति तथा पृथिव्यां यानि सन्ति पर्वतेष्वोषधीष्वप्सु यानि सन्ति सुमना अस्माभिः सह सौमनस्ययुक्तस्त्वं तेभिर्विश्वैस्तैः सर्वैः स्थानैर्युक्तो नोऽस्मान्प्रति हेडन्क्रोधमकुर्वन्हव्या प्रतिगृभाय हवींषि प्रतिगृहाण ।

अथ 'वैष्णवं वामनमालभेत स्पर्धमानः' इत्यस्य पशोः सूक्ते प्रतीकत्रयं दर्शयति—

विष्णोर्नु कं तदस्य प्रियम् । प्र तद्विष्णुः, इति ।

"विष्णोर्नु कं वीर्याणि" इति वपायाः पुरोनुवाक्या । सेयं "युञ्जते मनः" इत्यत्र व्याख्याता । "तदस्य प्रियमभि पाथो अश्याम्" इति वपाया याज्या । सेयम् "उत नः प्रिया" इत्यत्र व्याख्याता । "प्र तद्विष्णुस्तवते" इति पुरोडाशस्य पुरोनुवाक्या । सेयं "जुष्टी नरः" इत्यत्र व्याख्याता ।

अथ पुरोडाशस्य याज्यामाह—

परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नु-
वन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव
त्वम् । परमस्य वित्से ( २ ), इति ।

हे विष्णो देव मात्रया कृत्स्नं जगन्मातुं प्रवृत्तया तनुवा त्रिविक्रमावताररूपया मूर्त्या वृधान हे वर्धमान पर उत्कृष्टोऽसि । ते त्वदीयं महित्वं महिमानं नान्वश्नुवन्ति केऽपि समर्था अनुगन्तुं न क्षमन्ते । ते तव लोकान्मातुं प्रवृत्तस्य पृथिव्या आरभ्योभे रजसी द्वे रञ्जनस्थाने पृथिव्यन्तरिक्षमित्येते त्वदीयपदे इति वयं विद्मः । त्वं पुनः परमस्योत्कृष्टस्य तृतीयस्य पदस्य स्थानं वित्से जानासि ।

अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

विचक्रमे त्रिर्देवः, इति ।

'विचक्रमे पृथिवीमेषः' इति पुरोनुवाक्या । "त्रिर्देवः पृथिवीमेषः"

इति याज्या। एतच्चोभयं "जुष्टी नरः" इत्यत्र व्याख्यातम्।

अथ "इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमालभेत" इत्यस्य पशोः सूक्ते प्रतीकत्रयं दर्शयति—

आ ते महो यो जात एव। अभि गोत्राणि, इति।

"आ ते मह इन्द्र" इति वपायाः पुरोनुवाक्या। "यो जात एव प्रथमो मनस्वान्" इति याज्या। एतच्चोभयमन्वहमासा इत्यत्र व्याख्यातम्। "अभि गोत्राणि सहसा गाहमानः" इति पुरोडाशस्य पुरोनुवाक्या। सा च "आशुः शिशानः" इत्यत्र व्याख्याता।

अथ पुरोडाशस्य याज्यामाह—

आभिः स्पृधो मिथतीररिषण्यन्। अमित्रस्य व्यथया मन्युमिन्द्र। आभिर्विश्वा अभियुजो विषूचीः। आर्याय विशोऽवतारीर्दासीः, इति।

हे इन्द्र, अमित्रस्यास्मद्वैरिणो मन्युं क्रोधं व्यथय व्यथितं निष्फलं कुरु। अस्मासु क्रुद्धः शत्रुर्यदाऽस्मान्हन्तुं न क्षमते तदा तदीयः क्रोधो निष्फलो भवेत्तथा त्वं कुर्वित्यर्थः। किं कुर्वन्स्पृधः शत्रूणां स्पर्धमाना अस्मदीयाः सेना मिथतीस्त्वां प्रत्यभयं याचमाना आभिरस्मदीयाभिः स्तुतिभिररिषण्यन्नहिंसिताः कुर्वन्। अस्मदीयस्तुतिभिस्तुष्टस्त्वमस्मदीयाः सेना यथा न हिंसिता भवन्ति तथा कुर्वित्यर्थः। किंच विश्वाः परकीयाः सर्वाः सेना अभियुजोऽस्मद्वधमभिलक्ष्य प्रयुज्यमाना विषूचीर्नानागतीर्दासीरुपक्षयं प्राप्ता विशः सर्वाः प्रजा अभितुष्टः सन्नवतारीर्विनाशय। यथाऽस्मदीयस्तुत्या तुष्टं त्वां प्रत्यभयं याचमानानामस्मत्सेनानां न हिंसां कृतवानसि तथैवास्मदीयस्तुत्या तुष्टः सन्परकीयसेना विनाशयेत्यर्थः।

अथ हविषः पुरोनुवाक्यामाह—

अयꣳ शृण्वे अध जयन्नुत घ्नन्। अयमुत प्रकृणुते युधा गाः। यदा सत्यं कृणुते मन्युमिन्द्रः (३)। विश्वं दृढं भयत एजदस्मात्, इति।

१ ग. तुष्टस्त्वां प्र॰। २ क. 'नानामर्हिं'।

अयमिन्द्रोऽथ कदाचिज्जयन्वर्तते । उताथवा घ्नन्वर्तत इत्यहं शृण्वे । अयमर्थः—यदा यदेन्द्रस्य वार्तां शृणोमि तदा तदा जयतीति वा वैरिणं हन्तीति वा शृणोमि । उतापि चायमिन्द्रो युधा युद्धेन गाः परकीयाः प्रकृणुते प्रकर्षेण स्वाधीनाः करोति । किंच यदाऽयमिन्द्रः स्वकीयं मन्युं सत्यमवश्यंभाविनं कृणुते करोति तदानीं दृढं कचिदेवावस्थितं स्थावरमेजत्कम्पमानं जङ्गमं च विश्वं सर्वं जगदस्मादिन्द्राद्भयते बिभेति । अयमर्थः—परिहासार्थो यः कोपस्तमन्तरेण यदा हृदयपूर्वकं कोपं करोति तदा सर्वं जगद्बिभेतीति ।

अथ हविषो याज्यामाह—

अनु स्वधामक्षरन्नापो अस्य । अवर्धत मध्य आ नाव्यानाम् । सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन । हन्मनाऽहन्नभिद्यून्, इति ।

अस्येन्द्रस्य स्वधां हविर्लक्षणमन्वापो वृष्टिलक्षणा अक्षरन्स्रवन्ति । नाव्याना नावा तरणीयानां नदीनां मध्य आऽवर्धत जलं सर्वतोऽभिवृद्धमभूत् । अयमिन्द्र ओजिष्ठेनात्यन्तबलयुक्तेन सध्रीचीनेन सह वर्तमानेन मनसा युक्तस्तं प्रसिद्धं मेघमभिद्यून्प्रतिदिनं हन्मना हननसाधनेन स्वायुधेन वज्रेणाहंस्ताडयाति । अयमर्थः—यदाऽयं स्वेच्छया मेघं भिनत्ति तदा वृष्ट्या नदीपूरणक्षमं जलं वर्धत इति ।

अथ “ इन्द्राय मरुत्वते पृश्निसक्थमालभेत ” इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

मरुत्वन्तं वृषभं वावृधानम् । अकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनाय । उग्रꣳ सहोदामिह तꣳ हुवेम, इति ।

इह कर्मणि तमिन्द्रं हुमेवाऽऽह्वयामः । किमर्थं नूतनायावसेऽन्यैरकृतपूर्वाय रक्षणाय । कीदृशमिन्द्रं मरुत्वन्तं मरुद्भिः संयुतम् । वृषभं कामानां वर्षितारम् । वावृधानमतिशयेन वर्धमानम् । अकवारिमकुत्सितारिम् । कुत्सितेनातिस्वल्पेन वैरिणा सह स्पर्धा लज्जायै भवति । दिव्यं दिवि भवम् । शासं शासितारं विश्वासाहं विश्वस्याभिभवितारम् । उग्रमनभिभवनीयम् । सहोदां बलप्रदम् ।

१ क. 'अयं को' । २ क. 'धा इन्न' त्ता' ।

अथ वपाया याज्यामाह—

जनिष्ठा उग्रः सहसे तुराय ( ४ )। मन्द्र ओजिष्ठो बहुलाभिमानः। अवर्धन्निन्द्रं मरुतश्चिदत्र। माता यद्वीरं दधनद्धनिष्ठा, इति।

हे इन्द्र त्वमुग्रः परैरप्रधृष्यो जनिष्ठ उत्पन्नोऽसि। किमर्थं सहसे वैरिबलस्य तुराय हिंसार्थम्। कीदृश इन्द्रो मन्द्रो हर्षयुक्तः। ओजिष्ठो बलवत्तरः। बहुलाभिमानः प्रभूताहंकारः मरुतश्चिन्मरुतोऽपि बलकर्मणि वृत्रवधाधिक इन्द्रमवर्धन्वर्धितवन्तः। किंच धनिष्ठाऽतिशयेन धनवती माताऽदितिरूपा यद्वीरं यमिन्द्रं शूरं दधनद्धारितवती तमिन्द्रमवर्धन्नित्यन्वयः।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

क्व स्या वो मरुतः स्वधाऽऽसीत्। यन्मामेकꣳ समधत्ताहिहत्ये। अहꣳ ह्युग्रस्तविषस्तुविष्मान्। विश्वस्य शत्रोरनमं वधस्नैः, इति।

इन्द्रस्य मरुतां च परस्परसंवादोऽयम्। अहिनामकस्यासुरस्य वधे मरुत इन्द्रस्य साहाय्यमकृत्वा पलायिता अतस्तान्प्रतीन्द्रः कुपित एवं ब्रवीति। हे मरुतो यद्यस्मात्कारणादहिहत्येऽहिनामकशत्रोर्वधे मामेकमेव यूयं समधत्त संयोजितवन्तस्तदानीं वो युष्माकं स्वधा साऽन्ननिमित्ता शक्तिः काऽऽसीत्कुत्र गता। अथवा किं मे युष्माभिः, अहं ह्युग्रोऽहमेवातितीव्रस्तविषो महांस्तुविष्मान्बलवांस्तादृशः सन्विश्वस्य सर्वस्यापि शत्रोर्वधस्नैर्वधबन्धनैरनमं वशीकरणे शक्तोऽस्मि।

अथ पुरोडाशस्य याज्यामाह—

वृत्रस्य त्वा श्वसथादीषमाणाः। विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिन्द्र सख्यं ते अस्तु ( ५ )। अथेमा विश्वाः पृतना जयासि, इति।

पुरा वृत्रवधार्थमिन्द्रः सर्वेषां देवानां स(सा)हाय(य्य)मपेक्षमाणस्तैः सह युद्धार्थमागतः। तदा सर्वे देवा वृत्रस्य श्वासमात्रेण निराकृताः

सन्तो गताः । मरुतस्तु पलायनमकृत्वेन्द्रस्य सख्यमाचरन् । सोऽयं वृत्तान्तो बह्वृचब्राह्मणस्योऽस्मिन्मन्त्रे सूच्यते । तमेतमर्थमिन्द्रं संबोध्य होता कथयति । हे इन्द्र विश्वे सर्वे देवा वृत्रस्य श्वसथात्तदुच्छ्वासादीषमाणाः पलायमानाः सन्तस्त्वामजहुः परित्यक्तवन्तः । ये तु सखायो मरुतो न पलायन्ते तैर्मरुद्भिः सख्यं तवास्तु । अथानन्तरमिमा विश्वाः सर्वाः पृतनाः सेना जयासि जेष्यसि ।

अथ हविषः पुरोनुवाक्यामाह—

वधीं वृत्रं मरुत इन्द्रियेण । स्वेन भामेन तविषो बभूवान् । अहमेता मनवे विश्वश्चन्द्राः । सुगा अपश्चकर वज्रबाहुः, इति ।

हे मरुत इन्द्रोऽहं स्वेनेन्द्रियेण हस्तेन स्वेन भामेन स्वकीयेन कोपेन वृत्रं वधीमवधिषम् । अतस्तविषो बभूवान्महानभवम् । इन्द्रो महानित्येवं लोके, कीर्तिर्जातेत्यर्थः । अहमिन्द्रो वज्रबाहुः सन्विश्वश्चन्द्राः सर्वस्य जगत आह्लादकराः सुगाः सुखेन गन्तुं प्राप्तुं शक्या एता दृश्यमाना वृष्टिलक्षणा अपो मनवे मनुष्यार्थं चकर कृतवानस्मि । सर्वस्य लोकस्यानिष्टनिवारणाय वृत्रं हत्वेष्टप्राप्तये वृष्टिमुत्पादितवानस्मीत्यर्थः ।

अथ हविषो याज्यामाह—

स यो वृषा वृष्णियेभिः समोकाः । महो दिवः पृथिव्याश्च सम्राट् । सतीनसत्वा हव्यो भरेषु । मरुत्वान्नो भवत्विन्द्र ऊती, इति ।

य इन्द्रो वृषत्वादिगुणकः स इन्द्रो नोऽस्मान्प्रति मरुत्वान्मरुद्भिर्युक्त ऊती रक्षणहेतुर्भवतु । के ते गुणा इति तेऽभिधीयन्ते—वृषा कामानां वर्षयिता । वृष्णियशब्दो बलनामसु पठितः । वृष्णियैर्बलैः समोकाः संयुक्तः । महो महत्या दिवः पृथिव्याश्च सम्राट् स्वामी सन्सम्यग्राजमानः । सतीनिशब्दो जलनामसु पठितः । सतीनसत्वा वृष्ट्यात्मकजलप्रदः । भ्रियन्ते संपाद्यन्ते हवींषि येषु यागेष्विति भरा यागास्तेषु हव्य आह्वानार्हः ।

१ क. हत्वा सर्वेष्ट ।

 

अथ "इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

इन्द्रो वृत्रमतरद्वृत्रतूर्ये (६)। अनाधृष्यो मघवा शूर इन्द्रः। अन्वेनं विशो अमदन्त पूर्वीः। अयꣳ राजा जगतश्चर्षणीनाम्, इति।

अयमिन्द्रो वृत्रतूर्ये वृत्रवधनिमित्ते युद्धे वृत्रमतरद्विनाशितवान्। स इन्द्रोऽनाधृष्यः केनापि तिरस्कर्तुमशक्यः। मघवा धनवान्। शूरो विक्रमयुक्तः। पूर्वीः पूर्वकालीना विशः प्रजा एनमिन्द्रमन्वमदन्त वृत्रवधेनेन्द्रे हृष्टे सति प्रजा अपि हृष्टवत्यः। अयमिन्द्रश्चर्षणीनां मनुष्याणां कृत्स्नस्य जगतश्च राजा भूत्वा वर्तते।

अथ वपाया याज्यामाह—

स एव वीरः स उ वीर्यावान्। स एकराजो जगतः परस्पाः। यदा वृत्रमतरच्छूर इन्द्रः। अथाभवद्दमिताऽभिक्रतूनाम्, इति।

योऽयमिन्द्रः स एव वीरो युद्धेषु शूरः। स उ वीर्यावान्स एवोत्साहयुक्तः। स एकराजः कृत्स्नस्य जगत एक एव राजा। परस्पा अतिशयेन पाता। सोऽयं शूर इन्द्रो यदा वृत्रमतरद्विनाशितवानथानन्तरमभिक्रतूनामभिप्रायविरोधाचरणलक्षणकर्मणां दमिता दमनहेतुरभवत्।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

इन्द्रो यज्ञं वर्धयन्विश्ववेदाः। पुरोडाशस्य जुषताꣳ हविर्नः। वृत्रं तीर्त्वा दानवं वज्रबाहुः (७)। दिशोऽदृꣳहदृꣳहिता दृꣳहणेन, इति।

विश्ववेदाः सर्वज्ञोऽयमिन्द्रो यज्ञमस्मदीयं वर्धयन्नोऽस्मदीयस्य पुरोडाशस्य सारांशं हविर्जुषताम्। वज्रबाहुरयं वृत्राख्यं दानवं तीर्त्वा

हत्वा दृंहणेन दृढीकरणसाधनेन दृंहिता दृढीकर्तुमुद्यतः सन्दिशोऽदृंहद्वृत्रकृतोपद्रवेण प्रचलितानां सर्वदिग्वर्तिप्रजानां स्थैर्यं कृतवानित्यर्थः।

अथ पुरोडाशस्य याज्यामाह—

इमं यज्ञं वर्धयन्विश्ववेदाः। पुरोडाशं प्रतिगृभ्णात्विन्द्रः। यदा वृत्रमतरच्छूर इन्द्रः। अथैकराजो अभवज्जनानाम्, इति।

स्पष्टोऽर्थः।

अथ हविषः पुरोनुवाक्यामाह—

इन्द्रो देवाञ्छम्बरहत्य आवत्। इन्द्रो देवानामभवत्पुरोगाः। इन्द्रो यज्ञे हविषा वावृधानः। वृत्रतूर्नो अभयꣳ शर्म यꣳसत्, इति।

शम्बरहत्ये शम्बराख्यस्यासुरस्य हत्ये वधे निष्पन्ने सति स इन्द्रो देवानावद्रक्षितवान्। स चेन्द्रो देवानां मध्ये पुरोगा मुख्योऽभवत्। इन्द्रोऽस्मिन्यज्ञे हविषा वावृधानोऽतिशयेन वर्धते। वृत्रतूर्वृत्रघाती स इन्द्रो नोऽस्मभ्यमभयं भयरहितं शर्म सुखं यंसद्यच्छतु।

अथ हविषो याज्यामाह—

यः सप्त सिन्धूꣳरदधात्पृथिव्याम्। यः सप्त लोकानकृणोद्दिशश्च। इन्द्रो हविष्मान्त्सगणो मरुद्भिः। वृत्रतूर्नो यज्ञमिहोपयातु (८), इति।

ववर्थ वित्स इन्द्रस्तु रायास्तु वृत्रतूर्ये वज्रबाहुः पृथिव्यां त्रीणि च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये तृतीयोऽनुवाकः॥ ३॥

योऽयमिन्द्रः पृथिव्यां सप्त सिन्धून्समुद्रानदधात्स्थापितवान् य इन्द्रः सप्त लोकान्भूरादीन्दिशश्चाकृणोत्कृतवान्। मरुद्भिर्देवै

सगणो गणसहित इन्द्रो हविष्मान्हविर्युक्तोऽभूत् । वृत्रतूर्वृत्रघाती स इन्द्र इह लोके नोऽस्मदीयं यज्ञमुपयासदुपागच्छतु ।

अत्र विनियोगसंग्रहः—

सोमो धेनुमिति प्रोक्तं सौम्ये विष्णोर्नु वामने ।
आ ते महो य ऐन्द्रे स्यान्मरुत्वत्यैन्द्रके मरुत् ।
इन्द्रो वृत्रतुरैन्द्रे स्याद्वर्णितं सूक्तपञ्चकम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमे प्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

अथाष्टमे चतुर्थोऽनुवाकः ।

तृतीये सौम्यादिपशुसूक्तान्यभिहितानि । चतुर्थे त्वभिमातिहेन्द्रादिपशुसूक्तान्युच्यन्ते। तत्र "इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

इन्द्रस्तरस्वानभिमातिहोग्रः । हिरण्यवाशीरिषिरः सुवर्षाः । तस्य वयꣳ सुमतौ यज्ञियस्य । अपि भद्रे सौमनसे स्याम, इति ।

योऽयमिन्द्रोऽस्ति यज्ञियस्य यज्ञार्हस्य तस्येन्द्रस्य सुमतावनुग्रहबुद्धौ वयं स्याम तिष्ठेम । कीदृश इन्द्रस्तरस्वांस्तरो जवस्तद्वान् । अभिमातिहा शत्रुघाती । उग्रः शत्रुषु क्रूरः । वाशीति वाङ्नाम । हिरण्यं वाश्यां वाचि यस्यासौ हिरण्यवाशीः । अस्मै शतमस्मै सहस्रमित्येवं सर्वदा धनदानं वक्तीत्यर्थः । इषिर एषणीयः । सुवर्षाः स्वर्गप्रदः । तादृशस्यानुग्रहे स्थित्वा भद्रे कल्याणे सौमनसेऽपि चित्तसमाधानरूपे सुखेऽपि स्याम तिष्ठेम ।

अथ वपाया याज्यामाह—

हिरण्यवर्णो अभयं कृणोतु । अभिमातिहेन्द्रः पृतनासु जिष्णुः । स नः शर्म त्रिवरूथं वियꣳसत् ।

---

१ क. ख ते मन्युमदैन्द्रे ।

यूयं पात स्वस्तिभिः सदा नः, इति ।

अयमिन्द्रोऽस्माकमभयं कृणोतु करोतु । कीदृशो हिरण्यवर्णः सर्वाभरणभूषितत्वेन हिरण्यसदृशवर्णोपेतः । अभिमातिहा शत्रुघाती । पृतनासु परकीयसेनासु जिष्णुर्जयशीलः । स तादृश इन्द्रो नोऽस्मभ्यं त्रिवरूथं त्रिभूमिकं शर्म गृहं वियंसद्विशेषेण यच्छतु । हे इन्द्र यस्त्वं ये च त्वत्सेवकास्ते सर्वे यूयं नोऽस्मान्स्वस्तिभिः क्षेमैः सदा पात ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

इन्द्रꣳ स्तुहि वज्रिणꣳ स्तोमपृष्ठम् । पुरोडाशस्य जुषताꣳ हविर्नः ( १ ) । हत्वाऽभिमातीः पृतनाः सहस्वान् । अथाभयं कृणुहि विश्वतो नः, इति ।

हे वागिन्द्रियेममिन्द्रं स्तुहि । कीदृशं वज्रिणं वज्रयुक्तम् । स्तोमपृष्ठं स्तोमैः साध्यानि पृष्ठस्तोत्राणि यस्यासौ स्तोमपृष्ठस्तम् । स चेन्द्रो नोऽस्मदीयस्य पुरोडाशस्य सारभूतं हविर्जुषताम् । सहस्वान्बलवानिन्द्रोऽभिमातीः पृतना वैरिसेनाः सर्वा हत्वाऽथानन्तरं नोऽस्माकं विश्वतः सर्वस्मादभयं कृणुहि कुरु ।

पुरोडाशस्य याज्यामाह—

स्तुहि शूरं वज्रिणमप्रतीतम् । अभिमातिहनं पुरुहूतमिन्द्रम् । य एक इच्छतपतिर्जनेषु । तस्मा इन्द्राय हविरा जुहोत, इति ।

अप्रतिकूलत्वेन प्राप्तमप्रतीतं शूरादिशब्दैर्विशेषितमिन्द्रं हे वागिन्द्रिय स्तुहि । योऽयमिन्द्र एक इदेक एव जनेषु सर्वेषु मध्ये शतपतिः शतसंख्याकानां देवानां स्वामी तस्मा इन्द्राय हे ऋत्विजो हविराजुहोत सर्वतो हुतं कुरुत ।

अथ हविषः पुरोनुवाक्यामाह—

इन्द्रो देवानामधिपाः पुरोहितः । दिशां पतिरभव-
द्वाजिनीवान् । अभिमातिहा तविषस्तुविष्मान् ।
अस्मभ्यं चित्रं वृषणं रयिं दात् ( २ ), इति ।

अयमिन्द्रः सर्वेषां देवानामधिपाः स्वामी सन्पुरोहितो मुखत एव हितकारी दिशां प्राच्यादीनां पतिः पालको वाजिनीवानश्वसमूह-युक्तोऽभवत् । अभिमातिहा शत्रुघाती । तविषो महान् । तुविष्मान्ब-लवान् । तादृश इन्द्रोऽस्मभ्यं चित्रं मणिमुक्तादिरूपेण नानाविधं वृषणं कामाभिवर्षणक्षमं रयिं धनं दाद्ददातु ।

अथ हविषो याज्यामाह—

य इमे द्यावापृथिवी महित्वा । बलेनादृंहदभिमा-
तिहेन्द्रः । स नो हविः प्रतिगृभ्णातु रातये ।
देवानां देवो निधिपा नो अव्यात्, इति ।

अभिमातिहा शत्रुघाती य इन्द्रो महित्वा महता बलेनेमे द्यावापृ-थिव्यावदृंहद्दृढीकृतवान् । स इन्द्रो नोऽस्मभ्यं रातये धनदानाय हविः प्रतिगृभ्णातु स्वी करोतु । देवानामपि देवः पूज्यः । निधिपाः शङ्खप-द्मादिनिधीनां पालकः । इन्द्रो नोऽस्मानव्याद्रक्षतु ।

अथ "इन्द्राय वज्रिणे ललामं प्राशृङ्गम्" इत्यस्य पशोः सूक्ते वपापुरोडाशविषयाणां याज्यानुवाक्यानां प्रतीकानि दर्शयति—

अनवस्ते रथं वृष्णे यत्ते । इन्द्रस्य नु वीर्याणि प्रह्न-
हिंसु, इति ।

'अनवस्ते रथमश्वाय' इति वपायाः पुरोनुवाक्या । 'वृष्णे यत्ते वृषणो अर्कम्' इति याज्या । एतच्चोभयम् 'इन्द्रं वो विश्वतस्परि' इत्यत्र व्याख्यातम् । 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति पुरोडा-

१ क. शयोर्याज्या ः

श पुरोनुवाक्या। 'अहन्नहिमन्वपः' इति याज्या। एतच्चोभयम् 'आ नो भर भगमिन्द्र' इत्यत्र व्याख्यातम्।

अथ हविषः पुरोनुवाक्यामाह-

इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॑। शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः। सेदु॒ राजा॑ क्षेति चर्षणी॒नाम्। अरान्न॒ नेमिः॒ परि॒ता ब॑भूव (३), इति।

अयमिन्द्रो यातो गच्छतो जङ्गमस्यावसितस्य क्वचिदवस्थितस्य स्थावरस्य च राजा स्वामी। किंच वज्रबाहुः सेदु स एवेन्द्रः शमस्य शान्तियुक्तस्य महर्षिवर्गस्य शृङ्गिणः शृङ्गोपेतस्य गवादेरपि चर्षणीनां मनुष्याणामपि राजा भूत्वा क्षेति निवसति। तस्य दृष्टान्तः— अरान्न नेमिर्यथा रथचक्रस्य परितो वर्तमाना नेमिस्तत्र स्थितानरान्व्याप्नोति तथाऽयमिन्द्रः परिता बभूव परितस्तानि स्थावरजङ्गमादीनि प्राप्तवान्।

अथ हविषो याज्यामाह-

अ॒भि सि॒ध्मो अ॑जिगादस्य॒ शत्रू॑न्। वि ति॒ग्मेन॑ वृ॒ष॒भेणा॒ पुरो॑ऽभेत्। सं वज्रे॑णासृजद्वृ॒त्रमिन्द्रः॑। प्र स्वां म॒तिम॑तिरच्छाशदा॒नः, इति।

अस्येन्द्रस्य सिध्मः कार्यसाधको वज्रः शत्रून्सर्वानभि सर्वतोऽजिगात्प्राप्तवान्हतवानित्यर्थः। तिग्मेन तीक्ष्णेन वृषभेण श्रेष्ठेन वज्रेण पुरः शत्रूणां पुराणि व्यभेद्विशेषेण भिन्नवान्। अयमिन्द्रो वज्रेण वृत्रं समसृजत्संसृष्टवान्संसर्गमात्रेण हतवानित्यर्थः। शाशदानः पुनः पुनर्वैरिणो विनाशयन्स्वां मतिं स्वकीयां बुद्धिं प्रातिरत्प्रकर्षेण वार्धितवान्।

अथ "यो भ्रातृव्यवान्स्यात्स स्पर्धमानो वैष्णववारुणीं वशामालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

विष्णुं॑ दे॒वं वरु॑णमू॒तये॒ भग॑म्। मेद॑सा दे॒वा व॒पया॑

यजध्वम् । ता नो यज्ञम गतं विश्वधेना । प्रजावदस्मे
द्रविणेह धत्तम्, इति ।

हे देवा दीप्यमाना ऋत्विजो भगं भजनीयं विष्णुं वरुणं च देवभूतयेऽस्मद्रक्षणार्थं मेदसा मेदोयुक्तया वपया यजध्वं पूजयध्वम् । मेदःशब्देन वपायां लेपरूपो मांससार उच्यते । विष्णुर्वरुणश्चेत्येतौ देवौ विश्वधेना प्रकर्षेण प्रीणयन्तौ ता तौ युवां नोऽस्मदीयं यज्ञं प्रत्यागतमागच्छतम् । आगत्य चेह कर्मणि प्रजावत्पुत्रपौत्रादियुक्तं द्रविणा धनमस्मे धत्तमस्मान्संपादयतम् ।

अथ वपाया याज्यामाह—

मेदसा देवा वपया यजध्वम् । विष्णुं च देवं वरुणं
च रातिम् ( ४ ) । ता नो अमीवा अपबाधमानौ । इमं यज्ञं जुषमाणावुपेतम्, इति ।

हे देवा ऋत्विजो रातिं फलस्य दातारं विष्णुं च वरुणं च देवं मेदोयुक्तया वपया यजध्वं पूजयत । हे विष्णो वरुण ता तौ युवां नोऽस्माकममीवा रोगानपबाधमानाविमं यज्ञं सेवमानावुपेतं समीपमागच्छतम् ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

विष्णूवरुणा युवमध्वराय नः । विशे जनाय महि
शर्म यच्छतम् । दीर्घप्रयज्यू हविषा वृधाना ।
ज्योतिषाऽरातीर्दहतं तमांसि, इति ।

हे विष्णुवरुणौ युवां नोऽस्मदीयायाध्वराय यज्ञाय विशे कुरप्रक्षाय प्रजायै जनाय पुत्रपौत्रादिरूपाय मनुष्याय महि शर्म महत्सुखं

१ ख, ग, प्रधेना । २ क, ख. विष्णुवरुणौ ता ।

यच्छतम् । दीर्घप्रयज्यू चिरं प्रकर्षेण यष्टव्यौ, हविषा वृधानाऽतिशयेन वर्धमानौ ज्योतिषा भवदीयेन तेजसाऽरातीः शत्रूंस्तमांस्यन्धकारांश्च दहतम् ।

अथ पुरोडाशस्य याज्यामाह—

ययोरोजसा स्कभिता रजाᳬंसि । वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिः । विष्णू अगन्वरुणा पूर्वहूतौ (५), इति ।

ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि रञ्जनात्मकानि पृथिव्यादिस्थानानि स्कभिता स्तम्भितानि दृढीकृतानीत्यर्थः । वीर्येभिस्तत्तद्युद्धगतैः पराक्रमैर्वीरतमाऽत्यन्तं शूरौ शविष्ठाऽतिशयेन बलवन्तौ यौ विष्णुवरुणौ सहोभिर्बलैरप्रतीतौ सन्तौ प्रतिकूलरहितौ पत्येते ऐश्वर्यं प्राप्नुतः । तौ विष्णुर्वरुणश्चेत्येतौ पूर्वहूतौ प्रथममाहूतौ युवामगन्नागच्छतम् ।

अथ हविषः पुरोनुवाक्यामाह—

विष्णूवरुणावभिशस्तिपा वाम् । देवा यजन्त हविषा घृतेन । अपामीवाᳬं सेधतᳬं रक्षसंश्च । अथा धत्तं यजमानाय शं योः, इति ।

देवा ऋत्विजो हे विष्णुवरुणावभिशस्तिपाऽपवादात्पातारौ वां युवां घृतेन हविषा घृतयुक्तेन पश्वङ्गलक्षणेन हविषा यजन्त पूजयन्तु । अमीवां रोगं रक्षसश्च सक्षांस्यप्यपसेधतं निराकुरुतम् । अथानन्तरं यजमानाय शमिष्टप्राप्तिनिमित्तं सुखं योरनिष्टवियोगं च धत्तं संपादयतम् ।

अथ हविषो याज्यामाह—

अᳬंहोमुचा वृषभा सुप्रतूर्ती । देवानां देवतमा शविष्ठा । विष्णूवरुणा प्रतिहर्यतं नः । इदं नरा

प्रयत्तमूतये हविः, इति ।

हे विष्णुवरुणौ नरा पुरुषश्रेष्ठौ युवां नोऽस्माकमूतये रक्षणाय प्रयतं प्रकर्षेण समर्पितमिदं हविः प्रतिहर्यतं कामयतम् । कीदृशौ युवामंहोमुचा पापान्मोचयितारौ । वृषभा श्रेष्ठौ । सुप्रतूर्ती सुष्ठु वैरिणां हिंसकौ । देवानां मध्ये देवतमाऽतिशयेन दीप्तिमन्तौ । शविष्ठाऽतिशयेन शक्तिमन्तौ ।

अथ "द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धः" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

मही नु द्यावापृथिवी इह ज्येष्ठे । रुचा भवतां शुचयद्भिरर्कैः (६) । यत्सीं वरिष्ठे बृहती विमिन्वन् । नुवद्ध्योक्षा पप्रथानेभिरेवैः, इति ।

द्यावापृथिवी देवते अर्कैरस्मदीयैरर्चनीयैस्तुष्टे सत्याविह भवतामस्मिन्कर्मणि तिष्ठताम् । कीदृश्यौ द्यावापृथिव्यौ मही महत्यौ । नु प्रसिद्धं । रुचा स्वकीयेन तेजसा ज्येष्ठे अत्यन्तप्रशस्ते । कीदृशैरर्कैः शुचयद्भिरस्मत्पापं शोधयद्भिः । यद्ये द्यावापृथिव्यौ सीं फलसीमानं विमिन्वन्निश्चितवत्यौ ते द्यावापृथिव्याविति पूर्वत्रान्वयः । कीदृश्यौ वरिष्ठे गुणैरत्यन्तश्रेष्ठे । बृहती स्वरूपेण विस्तृते । पप्रथानेभिरातिप्रथितैः प्रसिद्धैरेवैरागमनैर्नुवद्ध्य ऋत्विक्पुरुषयुक्तेभ्यो यजमानेभ्योऽक्षा प्रत्यक्षत्वेनावस्थिते पुनः पुनरागत्य भक्तजनानां दृश्ये भवत इत्यर्थः ।

अथ वपाया याज्यामाह—

प्र पूर्वजे पितरा नव्यसीभिः । गीर्भिः कृणुध्वꣳ सदने ऋतस्य । आ नो द्यावापृथिवी दैव्येन । जनेन यातं महि वां वरूथम्, इति ।

पूर्वजे सृष्ट्यादावुत्पन्ने पितरा मातापितृस्थानीये द्यावापृथिव्यौ नव्यसीभिरत्यन्तनूतनाभिर्गीर्भिः स्तुतिभिस्तुष्टे सत्यावृतस्य यज्ञस्य संबन्धिनी सदने निवासाय द्वे स्थाने कृणुध्वं कुरुताम् । प्रशब्दः सदनविशेषणं प्रकृष्टं स्थानं इत्यर्थः । हे द्यावापृथिव्यौ दैव्येन दिवि

भवेन जनेन सह वां युवयोः संबन्धि माहि वरूथं प्रौढं यागगृहं प्रत्यायातमागच्छतम्।

अथ पुरोडाशस्य पुरोनुवाक्यामाह–

स इत्स्वपा भुवनेष्वास। य इमे द्यावापृथिवी

जजान। उर्वी गंभीरे रजसी सुमेके। अवꣳशे

धीरः शच्या समैरत् (७), इति।

यः प्रजापतिरिमे द्यावापृथिव्यौ जजानोत्पादयामास। स इत्स एव प्रजापतिर्भुवनेषु लोकेषु मध्ये स्वपा आस। अपःशब्दः कर्मवाची। शोभनव्यापारो बभूवेत्यर्थः। कीदृश्यौ द्यावापृथिव्यावुर्वी स्वरूपेण विस्तीर्णे। गभीरे गुणैर्गम्भीरे। रजसी रञ्जनात्मिके सुमेके सुनिर्माणे। अवंशे कश्यपभरद्वाजादिगोत्ररूपवंशरहिते सर्वेभ्यो महर्षिभ्यः पूर्वमुत्पन्नत्वान्नास्ति तयोः कश्चिद्वंशः। तादृश्यौ द्यावापृथिव्यौ धीरो धीमान्प्रजापतिः शच्या स्वकीयया शक्त्या समैरत्संयोजितवान्।

अथ पुरोडाशस्य याज्यामाह–

भूरिं द्वे अचरन्ती चरन्तम्। पद्वन्तं गर्भमपदी

दधाते। नित्यं न सूनुं पित्रोरुपस्थे। तं पिपृतꣳ

रोदसी सत्यवाचम्, इति।

द्वे द्यावापृथिव्यौ गर्भं सर्वप्राणिरूपं दधाते धारयतः। कीदृश्यौ द्वे अचरन्ती क्वाप्यविचरन्त्यौ स्थिरे इत्यर्थः। अत एवापदी पादरहिते न हि गमनाभावे पादयोरस्ति कश्चिदुपयोगः। कीदृशं गर्भं भूरिं देवतिर्यगादिरूपेण बहुविधम्। चरन्तं जङ्गमत्वेन संचारयुक्तम्। अत एव पद्वन्तं पादयुक्तम्। तत्र दृष्टान्तः—पित्रोरुपस्थे मातापित्रोरुत्सङ्गे नित्यं न सूनुं पुत्रमिव सर्वदा वर्तमानम्। हे रोदसी द्यावापृथिव्यौ सत्यवाचमवितथवाग्युतं देवादिरूपं गर्भं पिपृतं पालयतम्।

अथ हविषः परोनुवाक्यामाह—

द्यावापृथिवी सत्यमस्तु। पितर्मातर्यदिहोपब्रुवे

याम् । भूतं देवानामवमे अवोभिः । विद्यामेषं वृजनं जीरदानुम्, इति ।

हे पितर्द्युलोक हे मातः पृथिवि वां युवामभिलक्ष्येह कर्मणि यद्वचनमहमुपब्रुवे हे द्यावापृथिव्याविदं मदीयं वचनं सत्यमस्तु । किं तद्वचनमिति तदुच्यते---अवोभिरस्मदीयरक्षणैः सह देवानां सर्वेषामवमे भूतं युवां रक्षके भवतम् । वयमपि भवत्प्रसादादिषमन्नं वृजनं पापवर्जितं जीरदानुं जीवनस्य दातारं विद्याम लभेम ।

हविषो याज्यामाह---

ऊर्वी पृथ्वी बहुले दूरे अन्ते । उपब्रुवे नमसा यज्ञे अस्मिन् । दधाते ये सुभगे सुप्रतूर्ती । द्यावा रक्षतं पृथिवी नो अभ्वात्, इति ।

उर्वी गुणैरधिके पृथ्वी स्वरूपेण विस्तीर्णे बहुले भोगैः प्रभूते दूरे अन्ते सर्वेषां दूरवर्तिन्यौ समीपवर्तिन्यौ च सर्वत्र विद्यमानत्वात् । तादृश्यौ द्यावापृथिव्यावभिलक्ष्याहमस्मिन्यज्ञे नमसा नमस्कारेण युक्तमुपब्रुवे किंचिद्विज्ञापनं ब्रवीमि । किं तद्विज्ञापनमिति तदुच्यते---ये द्यावापृथिव्यौ सुभगे सौभाग्ययुक्ते सुप्रतूर्ती सुष्ठु शत्रुहिंसके दधाते जगद्बिभ्र्म धारयतस्ते द्यावापृथिवी युवामुभे नोऽस्मानभ्वाद्रक्षतमभवनमसद्भावो विनाशस्तस्माद्विनाशात्पालयतम् ।

अथ "ओषधीभ्यो वेहतमालभेत प्रजाकामः" इत्यस्य पशोः सक्ते क्रमेण वपापुरोडाशहविषां षट्प्रतीकानि दर्शयति--

या जाता ओषधयोऽतिविश्वाः परिष्ठाः । या ओषधयः सोमं राज्ञीरश्वावतीं सोमवतीम् । ओषधीरिति मातरोऽन्या वो अन्यामवतु, इति ।

हविर्नो दाद्भूय रातिं पूर्वहूतावैकैरदस्मिन्पश्चे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

'या जाता ओषधयः' इति वपायाः पुरोनुवाक्या । 'अतिविश्वाः परिष्ठास्तेन इव' इति याज्या । 'या ओषधयः सोम राज्ञीः' इति पुरोनुवाक्या । 'अश्वावतीꣳ सोमवतीम्' इति याज्या । "ओषधीरिति मातरः" इति हविषः पुरोनुवाक्या । 'अन्या वो अन्यामवतु' इति याज्या । एतत्सर्वं "या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा" इत्यस्मिन्ननुवाके व्याख्यातम् ।

अत्र विनियोगसंग्रहः—

इन्द्रस्तरस्वानित्येतदभिमातिघ्न ऐन्द्रके ।
अनवो वज्रयुक्तैन्द्रे वशायां विष्णुमित्यदः ॥
मही द्यावापृथिव्यार्थां या जाता वेहतीष्यते ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथाष्टमे पञ्चमोऽनुवाकः ।

चतुर्थेऽनुवाकेऽभिमातिहैन्द्रपश्वादीनां सूक्तान्यभिहितानि । पञ्चमे त्वैन्द्राग्निपश्वादीनां सूक्तान्यभिधीयन्ते । तत्र "ऐन्द्राग्नं पुनरुत्सृष्टमालभेत" इत्यस्य पशोः सूक्ते षण्णामप्यृचां प्रतीकानि दर्शयति—

शुचिं नु स्तोमꣳ श्नथद्वृत्रम् । उभा वामिन्द्राग्नी
प्रचर्षणिभ्यः । आवृत्रहणा गीर्भिर्विप्रः, इति ।

'शुचिं नु स्तोमं नवजातम्' इति वपायाः पुरोनुवाक्या । सा च 'उभा वामिन्द्राग्नी' इत्यत्र व्याख्याता । 'श्नथद्वृत्रमुत सनोति' इति वपाया याज्या । सा चेन्द्राग्नी रोचना दिव इत्यत्र व्याख्याता । 'उभा वामिन्द्राग्नी' इति पुरोडाशस्य पुरोनुवाक्या । 'प्रचर्षणिभ्यः' इति याज्या । 'आवृत्रहणा वृत्रहभिः' इति हविषः पुरोनुवाक्या । 'गीर्भिर्विप्रः प्रमतिम्' इति याज्या । एतच्चोभयं पाशुकहौत्रे व्याख्यास्यते ।

अथ "ब्राह्मणस्पत्यं तूवरमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

१ क. °त्यथ । म° ।

ब्रह्मणस्पते त्वमस्य यन्ता । सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवन्ति देवाः । बृहद्वदेम विदथे सुवीराः, इति ।

ब्रह्मणो मन्त्रजातस्य पतिः पालकः कश्चिद्देवो हे ब्रह्मणस्पते त्वमस्यास्माभिः पठ्यमानस्य सूक्तस्य यन्ता नियामकोऽतो बोध्येतस्य सूक्तस्य तात्पर्यं बुध्यस्व । ततस्तनयं च त्वत्पुत्रसमानं च मां जिन्व प्रीणय । देवा युष्मदादयो विश्वमवन्तीति यदस्ति तद्भद्रं कल्याणम्, अतो रक्षार्थं सुवीराः शोभनापत्ययुक्ता वयं विदथे यज्ञे बृहत्प्रौढं स्तोत्रं वदेम ।

अथ वपाया याज्यामाह—

स ईं॑ सत्येभिः सखिभिः शुचद्भिः । गोधायसं वि धनसैरदर्दत । ब्रह्मणस्पतिर्वृषभिर्वराहैः (१) । घर्मस्वेदेभिर्द्रविणं व्यानट्, इति ।

स ईं स एव ब्रह्मणस्पतिर्गोधायसं गोर्भूमेर्धारकं प्रतिपक्षिणं राजानं व्यतर्दद्विशेषेण हिंसितवान् । कैः सहितः सखिभिः स्नेहयुक्तैः । कीदृशैः सखिभिः सत्येभिः सत्यवादिभिः शुचद्भिः शुद्धियुक्तैर्धनसैर्हविर्लक्षणस्य धनस्य दातृभिः । ईदृशैर्ऋत्विग्भिः पूजितो ब्रह्मणस्पतिर्विरोधिनो विनाशयतीत्यर्थः । न केवलमनिष्टं निवारयति किंत्विष्टमपि प्रापयति । कथमिति तदुच्यते—अयं ब्रह्मणस्पतिर्वृषभिर्वर्षणशीलैर्घर्मस्वेदेभिर्घर्मनिमित्तस्वेदयुक्तपुरुषसदृशैर्वराहैर्मेघैर्द्रविणं सस्यनिष्पत्तिरूपं धनं व्यानड्विशेषेण व्याप्तवान् । वारिवाहशब्दस्य वर्णव्यत्ययेन वराह इति प्रयोगः । यथा घर्मसंतप्ताः पुरुषाः स्विद्यन्ति तथा मेघदेहा ब्रह्मणस्पतिना प्रेरिता जलं स्रावयन्तीत्यर्थः ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

ब्रह्मणस्पतेरभव यथा वशम् । सत्यो मन्युर्महि-

१ क ख. नूपर° ।

कर्मा करिष्यतः । यो गा उदाजत्स दिवे वि चाभ-
जत् । महीव रीतिः शवसा सरत्पृथक्, इति ।

अस्य ब्रह्मणस्पतेः सर्वं जगद्यथा वशमभवद्येन प्रकारेणायमिच्छति तथैव प्रवर्तते । महिकर्मा जगन्नियमनरूपं महान्तं व्यापारं करिष्यतो ब्रह्मणस्पतेर्मन्युः सत्योऽवितथः कोपस्तस्मादेतदिच्छानुसारेण जगत्प्रवर्तते । जगत एतदधीनत्वमेव स्पष्टी क्रियते—गोशब्दोऽत्र जलवाची । य आदित्यो गा उदाजद्घर्मकाले जलानि स्वरश्मिभिर्भूम्या ऊर्ध्वं स्वीकृतवान्स आदित्यः पुनरपि दिवे दिवः सकाशाद्व्यभजद्विशेषेण विभागं कृत्वा वृष्टिकाले जलं प्रेरितवान् । योऽयं घर्मकाले जलस्वीकारो यश्च वृष्टिकाले पुनरपि जलस्य परित्याग एतत्सर्वं जगद्व्यवहारस्योपलक्षणम् । ब्रह्मणस्पतेरीदृशी रीतिर्महीव जगन्नियमनप्रकारो महानेष भूत्वा शवसा तदीयबलेन पृथक्सरद्बहुधा प्रवर्तते ।

अथ पुरोडाशस्य याज्यामाह—

इन्धानो अग्निं वनवद्वनुष्यतः । कृतब्रह्मा शूशुव-
द्रातहव्य इत् । जातेन जातमति स प्रसृंसते । यंयं युजं कृणुते ब्रह्मणस्पतिः, इति ।

ब्रह्मणस्पतिर्देवो यं यं यजमानं युजं कृणुते कर्मानुष्ठानयुक्तं कुरुते, असावसौ यजमानोऽग्निमिन्धानः प्रदीपयन्वनुष्यतः स्वात्मानं हिंसिष्यतः शत्रून्वनवद्वनुयात्प्रातिहिंस्यात् । स च यजमानः कृतब्रह्मा संस्कृतमन्त्रो रातहव्य इद्दत्तहविष्क एव भूत्वा शूशुवदतिशयेन वर्धते । अयं यजमानः सुप्रसृतं जातं वैरिणां जन्म जातेन स्वकीयेन जन्मनाऽतिप्रसंसतेऽतिशयेन प्रस्रंसयत्यधः करोतीत्यर्थः ।

अथ हविषः पुरोनुवाक्यामाह—

ब्रह्मणस्पते सुयमस्य विश्वहा (२) । रायः
स्याम रथ्यो विवस्वतः । वीरेषु वीरा२

---

१ क. ख. 'शुद्धेशविशेषे' । २ क. 'नेव सू' ।

उप॑पृङ्ग्धि न॒स्त्वम् । यदीशा॑नो॒ ब्रह्म॑णा॒ वेषि॑ मे॒
ह॒वम्, इति ।

हे ब्रह्मणस्पते सुयमस्य सुष्ठु नियामकस्य विवस्वतः शत्रून्विनाशयतस्तव प्रसादाद्विश्वहा सर्वेष्वहःसु रायो धनयुक्ता रथ्यो रथयुक्ताः स्याम । त्वं तु नोऽस्मदीयेषु वीरेषु पुत्रेषु वीरान्परकीयान्पुत्रानुपपृङ्ग्ध्युक्षपणीत्वेन संपृक्तान्कुरु । यद्यदीशानोऽस्मत्स्वामी त्वं ब्रह्मणा मन्त्रेण युक्तं मे हवं मदीयं हविर्वेषि प्राप्नोषि, तदतत्सर्वं कुर्विति पूर्वत्रान्वयः ।

अथ हविषो याज्यामाह—

स इज्जने॑न॒ स वि॒शा स जन्म॑ना । स पु॒त्रैर्वाजं॑
भ॒रते॒ धना॒ नृभिः॑ । दे॒वानां॒ यः पि॒तर॑मा॒विवा॑सति ।
श्र॒द्धाम॑ना ह॒विषा॒ ब्रह्म॑णस्प॒ति॑म्, इति ।

योऽयं यजमानो देवानां पितरं पालकं ब्रह्मणस्पतिं श्रद्धामनाः श्रद्धायुक्तेन मनसा ध्यायन्, हविषा दीयमानेनाऽऽविवासति सर्वतो विशेषणाऽऽच्छादयति प्रभूतं हविर्ददातीत्यर्थः । स इत्स एव यजमानो जनेन स्वकीयेन सह वाजं भरतेऽन्नं पोषयति । स इज्जनेनेत्युक्तमेव प्रपञ्चयति—स विशा स यजमानः करप्रदया प्रजया सह वाजं भरते । स जन्मना स यजमानो जातेन सहोदरेण युक्तो वाजं भरते । तथा स यजमानः पुत्रैः सह वाजं भरते । तथा स यजमानो नृभिरन्यैर्मनुष्यैः सह धना भरते मणिमुक्तादीनि धनानि संपादयति ।

अथ "पौष्णं श्याममालभेतान्नकामः" इत्यस्य पशोः सूक्ते तिसृणामृचां प्रतीकानि दर्शयति—

यास्ते॑ पूषन्ना॒वो॑ अ॒न्तः । शु॒क्रं ते॑ अ॒न्यत्पू॒षेमा
आशाः॑, इति ।

'यास्ते पूषन्नावो अन्तः' इत्येषा वपायाः पुरोनुवाक्या । सा च 'यज्ञो राये' इत्यनुवाके व्याख्याता । 'शुक्रं ते अन्यद्यजतं ते अन्यत्' इति वपाया याज्या । सा च 'अग्ने यं यज्ञम्' इत्यत्र व्याख्याता । 'पूषेमा आशाः' इति पुरोडाशस्य पुरोनुवाक्या । सा च 'जुष्टो दमूनाः' इत्यनुवाके व्याख्याता ।

अथ पुरोडाशस्य याज्यामाह—

प्रपथे पथामजनिष्ट पूषा (३)। प्रपथे दिवः

प्रपथे पृथिव्याः। उभे अभि प्रियतमे सधस्थे।

आ च परा च चरति प्रजानन्, इति।

पूषा पोषकोऽयमादित्यः पथामन्तरिक्षवर्तिनां मार्गाणां मध्ये प्रपथे प्रकृष्टमार्गेऽजनिष्टावस्थितः। तथा दिवो द्युलोकस्य संबन्धिनि प्रपथे प्रकृष्टमार्गेऽजनिष्ट। तथा हि पृथिव्याः संबन्धिनि प्रपथेऽजनिष्ट। प्रियतमे अतिशयेन प्रीतिमत्यौ सधस्थ परस्परं सहैवावस्थिते उभे द्यावापृथिव्यावभिलक्ष्यायं पूषा प्रजानन्यजमानेन कृतं कर्म तत्फलं च प्रकर्षेण विद्वानाचरति च पराचरति चाऽऽगच्छति पुनर्गच्छति च। यजमानकृतस्य कर्मणः साक्षी भूत्वा लोकयोरुभयोरपि गमनागमने करोतीत्यर्थः।

अथ हविषः पुरोनुवाक्यामाह—

पूषा सुबन्धुर्दिव आपृथिव्याः। इडस्पतिर्मघवा दस्म॰

वर्चाः। तं देवासो अददुः सूर्यायै। कामेन कृतं

तवसꣳ स्वञ्चम्, इति।

अयं पूषा दिवो द्युलोकवर्तिनो जनस्य बन्धुः। आपृथिव्याः पृथिवीलोकवर्तिनश्च जनस्य बन्धुः। इडस्पतिरन्नस्य पालकः। मघवा धनवान्। दस्मवर्चा दर्शनीयतेजास्तं पूषणं देवास इन्द्रादयः सर्वे देवाः सूर्यायै विवाहदेवताया अददुर्दत्तवन्तः। सूर्या च देवता विवाहप्रकरणे—"सूर्यां यः प्रत्यक्षम्" इत्यादिमन्त्रेषु प्रसिद्धा। कीदृशं पूषणं कामेन कृतं भोगेच्छया प्रेरितं तवसं महान्तं स्वञ्चं शोभनगतिम्।

अथ हविषो याज्यामाह—

अजाश्वः पशुपा वाजपस्त्यः। धियंजिन्वो विश्वे

भुवने अर्पितः। अष्ट्रां पूषा शिथिरामुद्वरीवृजत्

१ क. ख. सूर्यायैतायै।

( ४ ) । संचक्षा॑णो॒ भुव॑ना दे॒व ई॑यते, इति ।

यः पूषा सोऽयमजाश्वोऽश्वस्थाने रथे बध्यत इत्यर्थः । पशुपाः पशूनां पालयिता । वस्त्यं गृहम् । वाजेनान्नेन संपूर्णं गृहं यस्यासौ वाजवस्त्यः । धियं प्राणिनां बुद्धिं जिन्वति प्रीणयतीति धियंजिन्वः । विश्वे भुवने सर्वस्मिँल्लोकेऽर्पितोऽवस्थितः । तादृशः पूषाऽष्ट्रां स्वहस्तेऽवस्थितामायुधविशेषरूपामारां शिथिरां शिथिलां कृत्वोद्दरीवृजदुद्धृत्य वर्जितवान्परित्यक्तवान् । मदमत्तानां गजानां निवारिका येयं दीर्घदण्डा सेयमारा । सा च पूष्णो हस्ते वर्तते । तथा च बह्वृचा आमनन्ति—" यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणः " इति । 'या ते अष्ट्रा ' इति मन्त्रान्तरे समाम्नानादारैवाष्ट्राऽस्मदनुग्रहार्थं भयहेतुमारां वर्जितवानित्यर्थः । स देवः पूषा भुवना संचक्षाणो लोकान्सम्यक्प्रकाशयन्नीयते चेष्टते ।

अथ " मारुतं पृश्निमालभेतान्नकामः " इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

शुची॑ वो ह॒व्या म॑रुतः॒ शुची॑नाम् । शुचिं॑ हिनो॒म्य॑ध्व॒रꣳ शुचि॑भ्यः । ऋ॒तेन॑ स॒त्यमृ॑त॒साप॑ आयन् । शुचि॑जन्मानः॒ शुच॑यः पाव॒काः, इति ।

हे मरुतः शुचीनां शुद्धानां वो युष्माकं शुची हव्या शुद्धानि हवींषि हिनोमि प्रापयामीत्यर्थः । तथा शुचिभ्यो मरुद्भ्यः शुचिं शुद्धमध्वरं हिंसारहितं कर्म हिनोमि संपादयामि । ऋतसापो यज्ञसमवायिनो मरुत ऋतेन यज्ञेन सत्यमवितथं फलमायन्प्राप्तिवन्तः । कीदृशा मरुतः शुचिजन्मानः शुद्धेन जन्मना युक्ताः । शुचय आचरणेनापि शुद्धाः । पावका इतरेषां शोधकाः ।

अथ वपाया याज्यामाह—

प्र चि॒त्रम॒र्कं गृ॑ण॒ते तु॒राय॑ । मारु॑ताय॒ स्वत॑वसे

---

१ क ख. शोपयात्मे ।

भरध्वम्। ये सहांसि सहसा सहन्ते। रेजते अग्ने पृथिवी मखेभ्यः, इति।

हे ऋत्विजो मारुताय मरुतां संघातायार्कमर्चनं प्रभरध्वं प्रकर्षेण संपादयत। कीदृशमर्कं चित्रं नानाविधम्। कीदृशाय मारुताय गृणतेऽस्मद्धितं ब्रुवते। तुराय सेनायुक्ताय। स्वतवसे स्वतःसिद्धबलयुक्ताय। ये मरुतः सहांसि परकीयबलानि सहसा स्वकीयबलेन सहन्तेऽभिभवन्ति। हेऽग्ने मखेभ्यो यागस्वामिभ्यस्तेभ्यो मरुद्भ्यः पृथिवी रेजते कम्पते, अतस्तच्छान्त्यर्थं हविः प्रदातव्यमित्यभिप्रायः।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

अꣳसेष्वा मरुतः खादयो वः (५)। वक्षःसु रुक्मा उपशिश्रियाणाः। वि विद्युतो न वृष्टिभी रुचानाः। अनु स्वधामायुधैर्यच्छमानाः, इति।

हे मरुतो वो युष्माकमंसेषु खादयः शत्रून्खादितुं प्रहर्तुं समर्था आयुधविशेषा आ सर्वत आरूढाः। वक्षःसु त्वदीयेषु रुक्मा रत्नाभरणविशेषा उपशिश्रियाणा उपेत्याऽऽश्रित्य वर्तन्ते। विद्युतो न यथा विद्युत्संपाता रोचन्ते तद्वद्यूयं वृष्टिभिरायुधविशेषैर्वृष्टयाख्यैर्विशेषं रोचमानाः स्थिताः। तथा च मन्त्रान्तरम्—"यत्क्रीडथ मरुत ऋष्टिमन्तः" इति। ऋष्टिविशिष्टत्वाद्वृष्टय इत्युच्यन्ते। तथा स्वकीयैरायुधैः स्वधां परकीयमन्नं जग्ध्वाऽनुयच्छमाना अनुदिनमस्मभ्यं ददतोऽवस्थिताः।

अथ पुरोडाशस्य याज्यामाह—

या वः शर्म शशमानाय सन्ति। त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्यं तानि मरुतो वियन्त।

१ ख. ग. °विशेषैर्नीत्य°। २ क. ग. वृष्टिभी। ३ क. °श्रिता व°। ४ क. °यं वृष्टि°। ५ क. °षैर्वृष्टया°।

रयिं नो धत्त वृषणः सुवीरम्, इति ।

हे मरुतो वो युष्माकं या शर्म यानि शरणानि गृहाणि शशमानाय सन्ति शंसनं कुर्वते यजमानाय दातुं संपादितानि तानि गृहाणि त्रिधातूनि, अशनं पानं खादनमित्येतानि त्रीणि धारयन्तीति त्रिधातूनि । तदेतत्त्रयमन्यत्राऽऽम्नायते- "त्रेधा विहितं वा इदमन्नमशनं पानं खादः" इति । एतैस्त्रिविधैरन्नैरुपेतानि गृहाणि दाशुषे हविर्दत्तवते यजमानायाधियच्छताऽऽधिक्येन धत्त । हे मरुतोऽस्मभ्यमपि तानि गृहाणि वियन्त विशेषेण यच्छत । वृषणः कामानां वर्षितारो यूयं रयिं धनं सुवीरं सुष्ठु वीरपुत्रयुतं धत्त संपादयत ।

अथ हविषः पुरोनुवाक्यामाह-

इमे तुरं मरुतो रामयन्ति । इमे सहः सहस आनमन्ति । इमे शꣳसं वनुष्यतो निपान्ति (६)। गुरुद्वेषो अररुषे दधान्ति, इति ।

इमे मरुतो तुरं तूर्णं रामयन्त्यस्मान्क्रीडयन्ति । इमे मरुतः सहसो बलवतः शत्रोः सहो बलमानमन्त्यानतं कुर्वन्ति विनाशयन्तीत्यर्थः । इमे मरुतः शंसं शंसितारं यजमानं वनुष्यतो हिंसितुः शत्रोः सकाशान्निपान्ति नितरां रक्षन्ति । अररुषे हविष्प्रदानमकुर्वते नास्तिकाय गुरुद्वेषो महान्तं द्वेषं दधन्ति कुर्वन्ति ।

अथ हविषो याज्यामाह-

अरा इवेदचरमा अहेव । प्र प्रजायन्ते अकवा महोभिः । पृश्नेः पुत्रा उपमासो रभिष्ठाः । स्वया मत्या मरुतः संमिमिक्षुः, इति ।

अरा इवेद्यथा रथचक्रस्याराः सर्वतो वर्तमाना अचरमाः प्रथमचरमभावरहितास्तथैवैते मरुतः सर्वे सहोत्पन्नत्वात्प्रथमचरमभावरहिताः । अहेव यथा वाऽहानि षष्टिघटिकात्मकानि न्यूनाधिकभावरहितानि तथैवैते मरुतश्चलनस्वभावेन समानत्वादुत्तमाधमभावरहिताः ।

१ क. वर्षयिता ।

ते च मरुतोऽकवा अकुत्सिता महोभिः स्वकीयैर्माहात्म्यैः प्र प्रजायन्तेऽतिशयेन प्रकृष्टाः संपद्यन्ते । ते च मरुतः पृश्नेः पुत्रा गोरूपायाः पृश्निदेवताया अपत्यानि । उपमासः सर्वेषामुत्तमवस्तूनामुपमारूपा एव । रभिष्ठा अतिशयेन वेगेन युक्ताः । ते च मरुतः स्वया मत्या स्वकीयया बुद्ध्या संमिमिक्षुः सम्यक्स्नेहनं वृष्टिजलं दत्तवन्तः ।

अथ "ऐन्द्रमरुणमालभेतेन्द्रियकामः" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

अनु॑ ते दायि म॒ह इ॑न्द्रि॒याय॑ । स॒त्रा ते॒ विश्व॒मनु॑
वृ॒त्रह॒त्ये॑ । अनु॑ क्ष॒त्रमनु॒ सहो॑ यजत्र । इन्द्र॑ दे॒वेभि॒-
रनु॑ ते नृ॒षह्ये॑, इति ।

हे इन्द्र ते तवेन्द्रियायेन्द्रियाभिवृद्ध्यर्थं महे महती पूजाऽनुदाय्यनुक्रमेण दत्ता । अथवा महे महत इन्द्रियाय यदनुकूलं तद्दत्तम् । तथा वृत्रहत्ये वृत्रवधे सति ते तुभ्यं सत्रा साकं सर्वैर्देवैर्मिलित्वा विश्वमनुदत्तम् । यदा वृत्रवधं कृतवानसि तदा तव विश्वस्वामित्वं सर्वैर्देवैरङ्गीकृतमित्यर्थः । हे यजत्र पूजार्हेन्द्र क्षत्रं क्षत्रियजातिरनुदत्ता सर्वक्षत्रियस्वामित्वं तुभ्यं दत्तमित्यर्थः । तथा सहो बलमनुदत्तम् । नृषह्ये मनुष्याणामभिभवे प्राप्ते देवेभिस्ते तुभ्यमनुदत्तम् । तल्लक्षणमिति शेषः ।

अथ वपाया याज्यामाह—

य इ॒न्द्र॒ शुष्मो॑ मघवन्ते अस्ति (७) । शिक्षा॒
सखि॑भ्यः पुरुहूत॒ नृभ्यः॑ । त्वꣳ हि दृ॒ढा म॑घवा॒न्वि-
चेताः । अपावृ॒धि परि॑ तिं॒ न राधः॑, इति ।

हे मघवन्धनवन्निन्द्र ते तव यः शुष्मो बलमस्ति तद्धे पुरुहूत सखिभ्यस्त्वयि स्निग्धेभ्यो नृभ्यो मनुष्येभ्यो यजमानेभ्यः शिक्षा शिक्षितं शुष्मं बलं देहि । हे मघवन्निन्द्र त्वं हि यस्मात्कारणाद्दृढा बलाधिक्यादत्यन्तदृढो विचेता विविधजगदभिज्ञश्च तस्मात्कारणाद्राधोऽन्नमपावृध्यभिवर्धय । परिवृतिं न परिवारमप्यभिवर्धय ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

इन्द्रो राजा जगतश्चर्षणीनाम् । अधिक्षमि विषुरूपं यदस्ति । ततो ददातु दाशुषे वसूनि । चोदद्राध उपस्तुतश्चिदर्वाक्, इति ।

अयमिन्द्रः कृत्स्नस्य जगतो विशेषतश्चर्षणीनां मनुष्याणां च राजा, अधिक्षमि क्षमायां भूमेरुपरि विषुरूपं नानाप्रकारं यद्धनमस्ति ततः सकाशाद्दाशुषे हविर्दत्तवते यजमानाय वसून्यपेक्षितानि धनानि ददातु। उपस्तुतो यजमानेन स्तूयमानः सन्नर्वागभिमुखो भूत्वा राधश्चिदन्नमपि चोदत्प्रेरयतु ददात्वित्यर्थः ।

अथ पुरोडाशस्य याज्यामाह—

तमु ष्टुहि यो अभिभूत्योजाः । वन्वन्नवातः पुरुहूत इन्द्रः । अषाढमुग्रꣳ सहमानमाभिः । गीर्भिर्वर्ध वृषभं चर्षणीनाम्, इति ।

शत्रूणामभिभूतौ शक्तमोजो बलं यस्यासावभिभूत्योजास्तादृशो य इन्द्रोऽस्ति तमु तमेवेन्द्रं हे वागिन्द्रिय स्तुहि । अयमिन्द्रः पुरुहूतो बहुभिर्यजमानैराहूतः । अवातो वायुरहितो निश्चल इत्यर्थः । तादृशो वन्वन्नभिमतप्रदानं कुर्वन्वर्तते । अषाढमन्यैरभिभवितुमशक्यम् । उग्रं तीव्रम् । सहमानं शत्रूनभिभवन्तम् । चर्षणीनां वृषभं मनुष्याणां कामाभिवर्षणहेतुम् । आभिर्गीर्भिर्वेदोक्ताभिः स्तुतिभिर्वर्ध हे वागिन्द्रिय वर्धस्व ।

अथ हविषः पुरोनुवाक्यामाह—

स्थूरस्य रायो बृहतो य ईशे । तमु ष्टवाम विदथेष्विन्द्रम् । यो वायुना जयति गोमतीषु । प्र धृष्णुया नयति वस्यो अच्छ, इति ।

---

१ क. °ते । आपा° ।

य इन्द्रः स्थूरस्य स्थूलस्य बहुलस्येत्यर्थः । बृहतो महतोऽनर्घस्येत्यर्थः । तादृशस्य रायो धनस्येशे स्वामी भवति । तमु तमेवेन्द्रं विदथेषु यज्ञेषु स्तवाम नानाविधैः स्तोत्रैः स्तुतिं करवाम । य इन्द्रो वायुना सहितो गोमतीषु गोमहिषादियुक्तासु परसेनासु जयति जयं प्राप्नोति । धृष्णुया स्वकीयेन धृष्णुत्वेन प्रागल्भ्येन वस्यो वसीयसो धनवत्तमान्पुत्रादीनिच्छास्मदाभिमुख्येन प्रकर्षेण नयति ।

अथ हविषो याज्यामाह—

आ ते शुष्मो॑ वृषभ एतु प॒श्चात् । ओत्त॒राद॑ध॒रागा पु॒रस्ता॑त् । आ वि॒श्वतो॑ अ॒भि समे॒त्व॒र्वाङ् । इन्द्र॑ द्यु॒म्नꣳ सुव॑र्वद्धेह्य॒स्मे ( ८ ), इति ।

वराहैर्विश्वहाऽजनिष्ट पूषोद्वरीवृजत्खादयो वः पान्त्यस्त्याभिर्नव च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

हे इन्द्र वृषभः श्रेष्ठस्ते तव शुष्मो बलं पश्चादस्मत्तः पश्चिमभाग एत्वागच्छतु । तथैवोत्तरादुत्तरभागेऽप्यागच्छतु । अधरागधो भागेऽप्यागच्छतु । पुरस्तात्पूर्वभागेऽप्यागच्छतु । विश्वतः सर्वेषु प्रदेशेष्वभ्यस्मानभिलक्ष्यार्वाङ्समीपवर्ती समेतु सम्यक्प्राप्नोतु । हे इन्द्र सुवर्वत्स्वर्गयुक्तं द्युम्नं धनमस्मे धेह्यस्मासु संपादय ।

अत्र विनियोगसंग्रहः—

पुनरुत्सृष्ट ऐन्द्राग्नं शुचिं नु स्तोमसूक्तकम् ।
ब्रह्मणस्पत इत्येतद्ब्राह्मणस्पत्यतूपरे ॥ १ ॥
यास्ते पूषन्निति त्वन्नप्रदे स्यामे हि पौष्णके ।
शुची व इति पृश्नौ स्यान्मारुतेऽन्नस्य दातरि ॥
अनु ते दाय्यैन्द्रके स्यादरुणे हीन्द्रियप्रदे ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्येऽष्टमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

१ क. त्मतः ।

अथाष्टमे षष्ठेऽनुवाकः ।

पञ्चम ऐन्द्राग्नपश्वादीनां सूक्तान्यभिहितानि । षष्ठे सावित्रादिपशूनां सूक्तान्यभिधीयन्ते । तत्र " सावित्रमुपध्वस्तमालभेत " इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

आ देवो यातु सविता सुरत्नः । अन्तरिक्षप्रा वहमानो अश्वैः । हस्ते दधानो नर्या पुरूणि । निवेशयन् च प्रसुवन् च भूम, इति ।

सविता देव आयात्वागच्छतु । कीदृशः सुरत्नः शोभनै रत्नैर्युक्तः । अन्तरिक्षप्राः स्वकीयै रश्मिभिरन्तरिक्षं पूरयिता । अश्वैर्वहमानः स्वकीयैरश्वै रथं वाहयन् । नर्या नरेभ्यो हितानि पुरूणि बहूनि रत्नानि यजमानाय दातुं हस्ते दधानः । भूम बहुलं जगत्प्राणिजातं निवेशयंश्च रात्रौ स्वस्वगृहेऽवस्थापयन्नपि प्रसुवंश्च दिवसे स्वस्वव्यापारेषु प्रेरयन्नपि वर्तत इति शेषः ।

अथ वपाया याज्यामाह—

अभीवृतं कृशनैर्विश्वरूपम् । हिरण्यशम्यं यजतो बृहन्तम् । आस्थाद्रथꣳ सविता चित्रभानुः । कृष्णा रजाꣳसि तविषीं दधानः, इति ।

अयं सविता रथमास्थादारूढवान् । कीदृशं रथं कृशनैरभीवृतं कृशनशब्दः सुवर्णवाची सुवर्णैरभितोऽलंकृतमित्यर्थः । विश्वरूपमनेकैराकारैरुपेतम् । हिरण्यशम्यं युगाच्छिद्रे प्रक्षेपणीयः काष्ठविशेषः शम्या सुवर्णमयीभ्यां शम्याभ्यामुपेतम् । बृहन्तमतिप्रौढम् । कीदृशः सविता यजतो यष्टव्यः । चित्रभानुर्बहुविधरश्मियुक्तः । तविषीं स्वकीयं बलं प्राप्य कृष्णा रजांसि दधानः क्वचित्कृष्णानि रूपाणि क्वचिद्रक्तानि रूपाणि धारयन्वर्तते । एतद्रूपान्तराणामप्युपलक्षणम् । अत एव च्छन्दोगाः—" असौ वा आदित्यो देवमधु " इत्येतस्यां मधुविद्यायां—' यदेतदादित्यस्य रोहितं रूपं यदेतदादित्यस्य शुक्लं रूपं यदेतदादित्यस्य कृष्णं रूपम् ' इति बहुविधानि रूपाण्याम्नन्ति ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

सधा नो देवः सविता सवाय । आसाविषद्वसुपतिर्वसूनि (१) । विश्रयमाणो अमतिमुरूचीम् । मर्तभोजनमध रासते न, इति ।

सधा स एव सविता देवो वसुपतिर्धनपतिर्भूत्वा नोऽस्माकं सवाय कर्मानुष्ठानाय वसूनि धनान्यासाविषत्सर्वतः संपादितवान् । किं कुर्वन्—उरूचीं विस्तीर्णां गतिमप्रतिमस्मदीयां मन्दप्रज्ञां विश्रयमाणो विप्रतिषेधन् । अथानन्तरं मर्तभोजनं मनुष्यैर्भोक्तुं योग्यमन्नं न रासतेऽस्मभ्यं ददाति ।

अथ पुरोडाशस्य याज्यामाह—

वि जनाञ्छ्यावाः शितिपादो अख्यन् । रथꣳ हिरण्यप्रउगं वहन्तः । शश्वद्विशः सवितुर्दैव्यस्य । उपस्थे विश्वा भुवनानि तस्थुः, इति ।

श्यावाः श्यामवर्णाः शितिपादः श्वेतैः पादैर्युक्ताः सवितुरश्वा जनाञ्जन्तून्व्यख्यन्विशेषेण ज्ञापितवन्तः। अश्वेषु गच्छत्सु हि आदित्यो गच्छतीत्येवं जानन्ति। कीदृशा अश्वा रथं वहन्तः । कीदृशं रथं हिरण्यप्रउगम्, ईषाग्रयोर्योगः प्रउग इत्युच्यते, सुवर्णमयः प्रउगो यस्य रथस्य सोऽयं हिरण्यप्रउगस्तम् । दैव्यस्य देवेभ्यो हितस्य सवितुरुपस्थ उत्सङ्गे दिशः प्राच्याद्या विश्वा भुवनानि पृथिव्यादयः सर्वे लोकाश्च शश्वत्तस्थुर्निरन्तरं तिष्ठन्ति । सवितृप्रकाशमध्ये वर्तमानमेव तदुत्सङ्गेऽवस्थानम् ।

अथ हविषः पुरोनुवाक्यामाह—

वि सुपर्णो अन्तरिक्षाण्यख्यत् । गभीरवेपा असुरः सुनीथः । क्वेदानीꣳ सूर्यः कश्चिकेत । कतमां द्याꣳ रश्मिरस्याऽऽततान (२), इति ।

सुपर्णः पक्षिसदृश आदित्यः। आकाशगामित्वात्पक्षिसादृश्यम्। तादृश आदित्योऽन्तारिक्षाण्याकाशप्रदेशविशेषान्व्यख्याद्विशेषेण प्रकाशितवान्। पृथिव्यन्तरिक्षद्युलोकान्सर्वान्प्रकाशयतीत्यर्थः। कीदृशः सविता गभीरवेपाः, वेपश्शब्दः कर्मवाची, उदयास्तमयलक्षणगभीरकर्मेत्यर्थः। असुरः प्राणप्रदः। अत एवान्यत्राऽऽम्नायते—"योऽसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति" इति। सुनीथः प्रशस्तः। एवंभूत आदित्य इदानीं रात्रौ क्व प्रदेशे वर्तत इत्येवं कश्चिकेत को वा जानाति। अस्य सूर्यस्य रश्मिः कतमां द्यामाततान कं नामाऽऽकाशभागं व्याप्नोतीति को वा जानाति। रात्रौ सूर्यस्य तद्रश्मेश्चावस्थानदेशस्य बुद्धिमद्भिरपि दुर्विज्ञेयत्वादयमचिन्त्यमहिमेत्यर्थः।

अथ हविषो याज्यामाह—

भगं धियं वाजयन्तः पुरंन्धिम्। नराशꣳसो ग्नास्पतिर्नो अव्यात्। आऽये वामस्य संगथे रयीणाम्। प्रिया देवस्य सवितुः स्याम, इति।

भगं सौभाग्यं धियं सत्कर्मविषयां प्रज्ञां सवितुः प्रसादाद्वाजयन्तः प्राप्नुवन्तो वर्तामहे। नोऽस्माकं पुरन्धिं बहुविषयां प्रज्ञामयं देवोऽव्याद्रक्षतात्। कीदृशोऽयं नराशंसो नरैः शंसनीयः। ग्नास्पतिश्छन्दसां पालयिता। "छन्दाꣳसि वै ग्नाः" इति श्रुत्यन्तरात्। देवपत्न्यो वा ग्नाशब्देनाभिधीयन्ते। "उत ग्ना वियन्तु देवपत्नीः" इति मन्त्रवर्णात्। अयशब्द एतव्यं प्राप्तव्यमाचष्टे। आ समन्तादये प्राप्तव्ये रयीणां धनानां संगथे संगमे निमित्तभूते सति वामस्य सर्वेषां वननीयस्य सवितुर्देवस्य वयं प्रियाः स्याम।

अथ "वैश्वदेवं बहुरूपमालभेतान्नकामः" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

आ नो विश्वे अस्क्रा गमन्तु देवाः। मित्रो अर्यमा वरुणः सजोषाः। भुवन्यथा नो विश्वे वृधासः। करन्त्सुषाहा विथुरं न शवः, इति।

मित्रोऽर्यमा वरुण इत्याद्याः सजोषाः समानप्रीतयो विश्वे सर्वे देवा अस्क्रा

१ क स्वकर्म॰।

आभिमुख्येन कर्तारः सन्तो नोऽस्मान्प्रत्यागमन्त्वागच्छन्तु । विश्वे देवा नो वृधासोऽस्मान्वर्धयितारो यथा भुवन्भवन्ति शवोऽस्मदीयं बलं सुषाहा सुषहं परेषामभिभवितृ विथुरं नाचलितं यथा करन्कुर्वन्ति तथाऽस्मानागच्छन्त्विति पूर्वत्रान्वयः ।

अथ वपाया याज्यामाह—

शं नो देवा विश्वदेवा भवन्तु । शꣳ सरस्वती सह धीभिरस्तु ( ३ ) । शमभिषाचः शमु रातिषाचः । शं नो दिव्याः पार्थिवाः शं नो अप्याः, इति ।

विश्वदेवशब्दो वसुरुद्रादिशब्दवद्गणविशेषवाची । विश्वे( श्व )देवाख्या देवा नोऽस्माकं शं सुखहेतवो भवन्तु । सरस्वती देवी धीभिर्बुद्ध्यभिमानिनीभिर्देवताभिः सह शं सुखहेतुरस्तु । अभितः सचन्ते समवयन्तीत्यभिषाचो बान्धवास्ते शं सुखहेतवो भवन्तु । रातिर्मित्रं तेन सचन्त इति रातिषाचो मित्रद्वारा संबध्यमानाः पुरुषा उ तेऽपि शं सुखहेतवो भवन्तु । दिवि भवा दिव्याः पृथिव्यां भवाः पार्थिवा अपोऽन्तरिक्षं तत्र भवा अप्याः "ये देवा दिव्येकादश स्थ" इत्यत्र पठिता लोकत्रयवर्तिनो देवाः शं सुखहेतवो भवन्तु ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

ये सवितुः सत्यसवस्य विश्वे । मित्रस्य व्रते वरुणस्य देवाः । ते सौभगं वीरवद्गोमदप्नः । दधातन द्रविणं चित्रमस्मे, इति ।

ये विश्वे देवाः सत्यसवस्य सत्यप्रेरणस्य सवितुर्मित्रस्य वरुणस्य च संबन्धिनि व्रते कर्मणि समागतास्ते सर्वे यूयं सौभगं सौभाग्यमप्नः कर्मविशेषं द्रविणं धनं चास्मे दधातनास्मासु संपादयत । कीदृशं सौभगं वीरवद्बहुभिर्वीरैः पुत्रैर्युक्तम् । गोमद्बहुभिर्गोभिर्युक्तम् । कीदृशं द्रविणं चित्रं मणिमुक्तादिभेदेन बहुविधम् ।

अथ पुरोडाशस्य याज्यामाह—

अग्ने याहि दूत्यं वारिषेण्यः । देवाँ अच्छा ब्रह्मकृता

गणेन । सरस्वतीं मरुतों अश्विनाऽपः । यक्षि देवान्रत्न-
धेयाय विश्वान् ( ४ ), इति ।

हेऽग्ने देवानच्छा देवानभिलक्ष्य दूत्यं याहि दूतकर्म कुरु । वारिषेण्यो मा रीरिषः कार्यविघातेनास्मान्मा हिंसीः । कान्देवानभिलक्ष्येति तदुच्यते—ब्रह्म परिवृढमिदं कर्म करोतीति ब्रह्मकृत्तेन कर्मकारिणा वैश्वदेवगणेन सह सरस्वत्यादीन्देवानभिलक्ष्य दूत्यं कृत्वा रत्नधेयाय रत्नसंपादनाय विश्वान्देवान्यक्षि पूजय ।

अथ हविषः पुरोनुवाक्यामाह—

द्यौः पितः पृथिवि मातरध्रुक् । अग्ने भ्रातर्वसवो मृडता
नः । विश्व आदित्या अदिते सजोषाः । अस्मभ्यं शर्म
बहुलं वियन्त, इति ।

येयं द्यौस्तद्रूप हे पितस्त्वमध्रुग्द्रोहरहितः । हे पृथिवि मातस्त्वमप्यध्रुक् । हेऽग्ने भ्रातस्त्वमप्यध्रुक् । हे वसवो यूयमप्यद्रुहः । ते यूयमस्माकं द्रोहमनाचरन्तो नोऽस्मान्मृडत सुखयत । हे विश्वे देवा हे आदित्या हेऽदिते यूयं सजोषाः समानप्रीतयोऽस्मभ्यं बहुलं शर्म सुखं वियन्त विशेषेण यच्छत ।

अथ हविषो याज्यामाह—

विश्वे देवाः शृणुतेमं हवं मे । ये अन्तरिक्षे य उप द्यवि
ष्ठ । ये अग्निजिह्वा उत वा यजत्राः । आसद्यास्मिन्बर्हिषि
मादयध्वम्, इति ।

हे विश्वे देवा मे हवं मदीयमाह्वानं शृणुत । ये यूयमन्तरिक्षे स्थान्तरिक्षलोके स्थ ये चोप समीपे पृथिव्यां स्थिता ये च द्यवि दिवि लोके स्थ ये यूयमग्निजिह्वा अग्निद्वारेण हविषः स्वीकर्तार उत वाऽन्येऽपि वा यजत्रा यष्टव्यास्ते सर्वेऽप्यस्मिन्बर्हिषि याग आसद्योपविश्य मादयध्वं तृप्ता भवत । अस्मानपि तर्पयत ।

---

१ क हृष्टा ।

अथ "मैत्रावरुणीं द्विरूपामालभेत" इत्यस्य पश्वोः सूक्ते पुरोनुवाक्यामाह—

आ वां मित्रावरुणा हव्यजुष्टिम् । नमसा देवाववसाऽऽव-
वृत्याम् (५) । अस्माकं ब्रह्म पृतनासु सह्या अस्माकम् ।
वृष्टिर्दिव्या सुपारा, इति ।

मित्रावरुणा हे मित्रावरुणौ देवाववसाऽस्मद्रक्षणेन निमित्तभूतेन वां युवयो-र्हव्यजुष्टिं हविषः प्रीतिं नमसा नमस्कारेण सहाऽऽववृत्यां पुनः पुनरावर्तयामि । अतो भवत्प्रसादादस्माकं पृतनासु परकीयसेनासु ब्रह्म मन्त्रजातं सह्याः सहवां परकीयसेना अभिभवतु । किं चास्माकं भवत्प्रसादाद्दिवि भवा दिव्या वृष्टिः सुपारा सुष्ठु पारयित्री फलं प्रापयन्ती भवतु ।

अथ वपाया याज्यामाह—

युवं वस्त्राणि पीवसा वसाथे । युवोरच्छिद्रा मन्तवो ह सर्गाः ।
अवातिरतमनृतानि विश्वा । ऋतेन मित्रावरुणा सचेथे,
इति ।

हे मित्रावरुणौ पीवसाऽतिस्थूलौ युवं युवामुभौ वस्त्राणि बहुविधानि वसाथे आच्छादयतः । युवोर्युवयोर्मन्तवो मननरूपा अनुग्रहविशेषाः सर्गा भवद्भिः सृष्टा अच्छिद्रा अच्छिन्ना निरन्तरं भवदनुग्रहादस्मासु वर्तन्त इत्यर्थः । विश्वा सर्वाण्यनृतान्यस्मदीयापराधरूपाण्यवातिरतं युवां विनाशितवन्तौ । हे मित्राव-रुणौ, ऋतेन सत्येन शास्त्रीयमार्गेण सचेथे अस्मान्संयोजयथः ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

तत्सु वां मित्रावरुणा महित्वम् । ईर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथ स्वसरस्य धेनाः । अनु वामेकः पविरा-
ववर्ति (६), इति ।

हे मित्रावरुणौ वां युवयोस्तन्महित्वं माहात्म्यं सत्यत्वं सुष्ठु वर्तते । किं तन्माहात्म्यमिति तदुच्यते—ईर्मा गमनशील आदित्ये तस्थुषी रश्मिद्वारेणावस्थिता अपोऽहभिः सर्वैरहःसु दुदुह्रे युवां दुग्धवन्तौ । आदित्यमण्डले रश्मिद्वारा यो

जलसंग्रहः पुनरपि संगृहीतस्य यद्वर्षणं तदुभयमाश्चर्यरूपं भवदीयं माहात्म्यम्। स्वयं सरति सर्वदा गच्छतीति स्वसर आदित्यस्तस्य संबन्धिना वृष्टिफलेन धेना धातव्याः पोषणीयाः, विश्वाः सर्वाः प्रजाः पिन्वथ प्रीणयथः। अनु वृष्टिकालानन्तरमेव वां युवयोर्मध्य एको मित्र आदित्यः पविः स्वकीयेनाऽऽतपेन पङ्कयुक्ताया भूमेः शोषकः सन्नाववर्ति पुनः पुनरावर्तते।

अथ पुरोडाशस्य याज्यामाह—

यद्बꣳहिष्ठं नातिविधे सुदानू। अच्छिद्रꣳ शर्म भुवनस्य गोपा। ततो नो मित्रावरुणाववीष्टम्। सिषासन्तो जीगिवाꣳसः स्याम, इति।

भुवनस्य लोकस्य गोपा रक्षकौ सुदानू शोभनस्य फलस्य दातारौ हे मित्रावरुणौ यद्यस्मात्कारणाद्बंहिष्ठमत्यन्तबहुलमच्छिद्रं विनाशरहितं शर्म सुखं नातिविधे भवदनुग्रहं विना प्रकारान्तरेणास्माभिर्नात्यन्तं लभ्यं ततः कारणाद्धे मित्रावरुणौ नोऽस्मानवीष्टं रक्षितवन्तौ। सिषासन्तो भवद्दत्तं फलं लब्धुमिच्छन्तो वयं जीगिवांसो जेतुं प्राप्तवन्तः स्याम।

अथ हविषः पुरोनुवाक्यामाह—

आ नो मित्रावरुणा हव्यदातिम्। घृतैर्गव्यूतिमुक्षतमिडाभिः। प्रति वामत्र वरमा जनाय। पृणीतमुद्नो दिव्यस्य चारोः, इति।

हे मित्रावरुणौ युवां हव्यदातिं हविर्दानहेतुं नो गव्यूतिमस्मदीयं गोसमूहमिडाभिस्तृणादिभक्ष्यविशेषैः सह तज्जनितेन घृतेनाऽऽज्येनाऽऽसमन्तादुक्षतं सिञ्चतम्। बहुविधगोग्रासद्वारा घृतसंपूर्तिं कुरुतमित्यर्थः। हे मित्रावरुणौ वां युवामत्रास्मिन्देशे जनाय सर्वजनोपकारार्थं दिव्यस्य दिवि भवस्य चारोरुद्नः समीचीनस्योदकस्य वरं श्रेष्ठं सारं प्रति पृणीतं प्रतिक्षेत्रं पूरयतम्।

---

१ क. वृष्टिफलेन। २ ग. शोषकः। ३ ख. °म। अग्नि ... ।

अथ हविषो याज्यामाह—

प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमुक्षतं घृतेन (७) । आ नो जने श्रवयतं युवाना । श्रुतं मे मित्रावरुणा हवेमा, इति ।

हे मित्रावरुणौ नो जीवसेऽस्माकं जीवनार्थं बाहवा भवदीयौ बाहू प्रसिसृतं प्रसारयतं बाहू प्रसार्यास्मानादाय रक्षतमित्यर्थः । नो गव्यूतिमस्मदीयं गोसमूहमा समन्ताद्घृतेनोक्षतं सिञ्चतम् । युवाना नित्यतरुणौ परस्परमिश्रितौ वा, युवां नोऽस्माञ्जने जनमध्ये श्रवयतं प्रख्यापयतम् । हे मित्रावरुणौ मे मदीयमिमा हवा श्रुतमिदमाह्वानं शृणुतम् ।

अथ "रौद्रीᳲ रोहिणीमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

इमा रुद्राय स्थिरधन्वने गिरः । क्षिप्रेषवे देवाय स्वधाम्ने । अषाढाय सहमानाय मीढुषे । तिग्मायुधाय भरता शृणोतन, इति ।

हे ऋत्विजो हे पुत्रपौत्रा वा शृणोतन मदीयं वाक्यं शृणुत । किं वाक्यमिति तदुच्यते—रुद्रायेमा वेदोक्ता गिरः स्तुतिरूपा वाचो भरत संपादयत । कीदृशाय रुद्राय स्थिरधन्वने दृढेन धनुषा युक्ताय । क्षिप्रेषवे शीघ्रगामिबाणयुक्ताय । देवाय द्योतमानाय स्वधाम्ने स्वकीयस्थानयुक्ताय स्वधाशब्दवाच्येनान्नेन युक्ताय वा । अषाढाय परैरभिभवितुमशक्याय । सहमानाय परानभिभवितुं समर्थाय । मीढुषे वृष्ट्यादिसेचनसमर्थाय । तिग्मायुधाय तीक्ष्णैरायुधैरुपेताय ।

अथ वपाया याज्यामाह—

त्वा दत्तेभी रुद्र शंतमेभिः । शतᳲ हिमा अशीय भेषजेभिः ।

व्यस्मद्द्वेषो वितरं व्य१ँहः । व्यमीवा१ँश्चातयस्वा विषूचीः (८), इति ।

हे रुद्र त्वा दत्तेभिस्त्वयाऽस्मभ्यं दत्तैः शंतमेभिः सुखतमैर्भेषजेभिरौषधैः शतं हिमाः शतसंख्याकान्संवत्सरानशीय प्राप्नुयाम् । द्वेषो द्वेषिणः शत्रूनस्मद्विचातयस्वास्मत्तो वियोजयस्व नात्र वियोगमात्रं किंतु विलक्षणातिशयेन वियोगं कुरु । अंहः पापं विचातयस्व । अमीवान्रोगान्विषूचीर्विविधगतियुक्तान्कृत्वा विचातयस्व ।

अथ पुरोडाशस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

अर्हन्बिभर्षि मा नस्तोके, इति ।

“अर्हन्बिभर्षि सायकानि धन्वा” इत्येषा पुरोनुवाक्या । सा च प्रवर्ग्यमन्त्रकाण्डे व्याख्यास्यते । ‘मा नस्तोके तनये’ इति याज्या । सा च [illegible] इत्यनुवाके व्याख्याता ।

अथ हविषः पुरोनुवाक्यामाह—

आ ते पितर्मरुता१ँ सुम्नमेतु । मा नः सूर्यस्य संदृशो युयोथाः । अभि नो वीरो अर्वति क्षमेत । प्रजायेमहि रुद्र प्रजाभिः, इति ।

हे मरुतां पितः पालक रुद्र ते सुम्नं त्वया संपादितत्वेन त्वदीयं सुखमा समन्तादेत्वस्मान्प्राप्नोतु । किंच त्वमस्मान्सूर्यस्य संदृशः सूर्यसंबन्धिनो दर्शनान्मा युयोथा मा वियोजय । सूर्यानुगृहीतं चक्षुष्पाटवमस्माकं सर्वदाऽस्त्वित्यर्थः । नोऽस्माकं वीरः पुत्रोऽर्वत्यश्वस्य पृष्ठेऽभिक्षमेत सर्वप्रकारेण समर्थोऽस्तु । हे रुद्र त्वत्प्रसादाद्वयं प्रजाभिः प्रजायेमहि बह्वीः प्रजा उत्पादयामः ।

अथ हविषो याज्यामाह—

एवा बभ्रो वृषभ चेकितान । यथा देव न हृणीषे न हँसि । हावनश्रूर्नो रुद्रेह

बोधि। बृहद्वदेम विदथे सुवीराः, इति ।

हे देव यथा न हृणीषे न कुप्यसि न हंसि च न मारयस्यप्येवमेव त्वामाह्वयामीति शेषः। रुद्रस्य विशेषणानि—बभ्रो पिङ्गलवर्ण वृषभ कामानां वर्षक चेकितान सर्वज्ञ हे रुद्र हावनश्रूराह्वानस्य श्रोता सन्निह कर्माणि नोऽस्मान्बोधि बुध्यस्वास्मदीयां हूतिं जानीहीत्यर्थः । वयं सुवीराः शोभनापत्ययुक्ताः सन्तो विदथे यज्ञे बृहद्वदेम प्रौढं स्तोत्रं पठामः ।

अस्मिन्नेव रौद्रे पशौ विकल्पिते सूक्ते षण्णामृचां प्रतीकानि दर्शयति—

परि णो रुद्रस्य हेतिः स्तुहि श्रुतम् । मीढुष्टमार्हन्बिभर्षि ।

त्वमग्ने रुद्र आ वो राजानम् (९), इति ।

वसूनि ततानास्तु विश्वान्ववृत्यां ववर्ति घृतेन विषूचीः श्रुतं द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

'परि णो रुद्रस्य हेतिर्वृणक्तु' इति वपायाः पुरोनुवाक्या । 'स्तुहि श्रुतं गर्तसदं युवानम्' इति याज्या । 'मीढुष्टम शिवतम' इति पुरोडाशस्य पुरोनुवाक्या । एतत्त्रयं रुद्राध्याये व्याख्यातम् । 'अर्हन्बिभर्षि' इति पुरोडाशस्य याज्या । सा च प्रवर्ग्यमन्त्रेषु व्याख्यास्यते । 'त्वमग्ने रुद्रो असुरः' इति हविषः पुरोनुवाक्या । 'आ वो राजानमध्वरस्य' इति याज्या । एतच्चोभयं त्वमग्ने रुद्र इत्यनुवाके व्याख्यातम् ।

अत्र विनियोगसंग्रहः—

आ देव इति सावित्रे उपध्वस्ते सानिर्म्रदे ।
आ नो विश्वे वैश्वदेवे बहुरूपेऽश्नमदे ॥ १ ॥
आ वां मित्रा द्विरूपायां मैत्रावरुणनामानि ।
इमा रुद्राय रोहिण्यां रौद्र्यां गवि समीरितम् ।
परि णो रुद्र इत्येतत्तत्रैव हि विकल्पितम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

१ प. परिवृणक्ति । २ क. वदामः । ३ क रौद्र्यामात्र स॰ ।

अथाष्टमे सप्तमोऽनुवाकः ।

---

षष्ठे सावित्र्यादिपशूनां सूक्तान्यभिहितानि । सप्तमे सौर्यादिपशूनां सूक्तान्यभिधीयन्ते। तत्र 'यो ब्रह्मवर्चसकामः स्यात्तस्मा एताꣳ सौरीं श्वेतां वशामालभेत' इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

सूर्यो॑ दे॒वीमु॒षस॒ꣳ रोच॑माना॒ मर्यः॑। न योषा॑म॒भ्येति प॒श्चात्।
यत्रा॒ नरो॑ दे॒वय॑न्तो युगानि॑ । वि॒त॒न्व॒ते प्रति॑ भ॒द्राय॑
भ॒द्रम्, इति ।

योऽयं सूर्योऽस्ति सोऽयं रोचमाना दीप्यमानामुषसमुषोभिधां देवीमभिलक्ष्य पश्चादेति पृष्ठभागे गच्छति । तत्र दृष्टान्तो मर्यो न योषा यथा मर्त्यो योषामभिलक्ष्य पृष्ठतो गच्छति तद्वत् । उषा देवी प्रथमं प्रभातं करोति पश्चात्सूर्य उदेतीत्यर्थः । यत्र यस्यामुषसि प्रवृत्तायां नरो मनुष्या यजमाना देवयन्तो देवानात्मार्थमिच्छन्तो युगानि दंपतिरूपाणि युग्मानि भूत्वा भद्राय कल्याणाय भद्रं वितन्वते कल्याणं कर्मानुतिष्ठन्ति । यस्यामुषासि कर्मानुष्ठानप्रवृत्तिस्तामुषसमभ्येतीति पूर्वत्रान्वयः ।

अथ वपाया याज्यामाह—

भ॒द्रा अश्वा॑ ह॒रितः॒ सूर्य॑स्य। चि॒त्रा एद॑ग्वा अनु॒माद्या॑सः।
न॒म॒स्यन्तो॑ दि॒व आ पृ॒ष्ठम॑स्थुः। परि॒ द्यावा॑पृथि॒वी य॑न्ति
स॒द्यः, इति ।

एतच्छन्दपर्याय एदग्वशब्दः सूर्यस्याश्वमाचष्टे। अत एव मन्त्रान्तरमाम्नायते— "एदग्वेन त्वा सूर्यो देवतां गमयतु" इति । सूर्यस्यैदग्वा अश्वा दिवः पृष्ठं द्युलोकस्योपर्यास्थुरास्थितवन्तः । कीदृशा एदग्वा भद्राः कल्याणरूपा अश्वा आशुगामिनो हरितो नीलवर्णाश्चित्रा विचित्रगतियुक्ता अनुमाद्यासो

---

रथयोजनमनुहृष्यन्तो नमस्यन्तो नमस्कारमिच्छन्त इव प्रह्वीभूतास्तथाविधा अश्वाः सद्यस्तस्मिन्नेव क्षणे द्यावापृथिवी परियन्ति लोकद्वयं परिभ्राम्य गच्छन्ति ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्या कर्तोर्विततꣳ संजभार (१) । यदेदयुक्त हरितः सधस्थात् । आद्रात्री वासस्तनुते सिमस्मै, इति ।

विततं विस्तीर्णं रश्मिजालं कर्तोर्मध्या कृष्यादिक्रियाया मध्ये संजभार संहृतवानिति यदस्ति तदेव सूर्यस्य देवत्वं प्रकाशकत्वं तदेव महित्वं माहात्म्यम् । अयमर्थः—सूर्यरश्मिसंचारे सति तदीयप्रकाशेनानुगृहीता मनुष्याः सर्वेषु देशेषु बहुविधानि कृष्यादिकर्माण्यारभन्ते तदा यामचतुष्टयमात्रेण सर्वं रश्मिजालं संहृत्यास्तमेति । यतो रश्मिजालस्य जगत्प्रकाशनाय क्षणमात्रेण प्रसारणं पुनः संहरणं च नाल्पमहिम्नः संभवत्यतो महदेतन्माहात्म्यमिति । यदेद्यदैव सधस्थात्कर्मानुष्ठातॄणां सहावस्थानयोग्यादस्माद्देशान्मेरुमतीत्य गन्तुं हरितः स्वकीयानश्वानयुक्त सूर्यः स्वरथे योजयत्यादनन्तरमेव सिमस्मै सर्वस्मै प्राणिजाताय तदुपकारार्थं रात्री वासस्तनुते लोकप्रसिद्धरात्री निवासं करोति । अयमर्थः— मेरुं प्रदक्षिणीकुर्वन्नादित्यो यदैवास्मान्मेरुपार्श्वादपरपार्श्वं गन्तुमुद्युक्तस्तदानीमेव रात्रिर्भवतीति ।

अथ पुरोडाशस्य याज्यामाह—

तन्मित्रस्य वरुणस्याभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः । कृष्णमन्यद्धरितः संभरन्ति, इति ।

अयं सूर्यो द्योरुपस्थे द्युलोकस्योपरि रूपं कृणुते स्वकीयं रूपं करोति प्रादुर्भवतीति यदस्ति तदेतत्प्रादुर्भूतं रूपं मित्रस्य वरुणस्य तदुभयोरुपलक्षितस्य

---

१ क. °द्विर्ण कु° । २ ग. °योप° ।

सर्वस्य जगतोऽभिचक्षेऽभितो दर्शनाय संपद्यते। अस्य सूर्यस्यानन्तं पाजोऽत्यधिकं रश्मिजालरूपं बलमन्यद्वक्ष्यमाणापेक्षया पृथगेव भूत्वा रुशद्दीप्यते। मध्याह्नकालेऽत्यधिकेन तेजसा प्रकाशते। अत एवान्यत्राऽऽम्नातम्—"बृहस्पतेर्मध्यंदिनः। तत्पुण्यं तेजसाऽह्नः। तस्मात्तर्हि तेक्ष्णिष्ठं तपति" इति। अन्यत्पूर्वोक्तान्मध्यंदिनात्पृथगेव रात्रौ कृष्णं रूपं हरितः सूर्यस्याश्वाः संभरन्ति संपादयन्ति। एतेऽश्वा यदा मेरोः पश्चिमभागे गच्छन्ति तदानीमत्र कृष्णं रूपं संपद्यते।

अथ हविषः पुरोनुवाक्यामाह—

अद्या देवा उदिता सूर्यस्य। निरꣳहसः पिपृतानिरवद्यात्। तन्नो मित्रो वरुणो मामहन्ताम। अदितिः सिन्धुः पृथिवी उत द्यौः (२), इति।

हे देवा अद्यास्मिन्दिने सूर्यस्योदितोदितेनोदयेनास्मानंहसः पापान्निष्कृष्य पिपृतात्पालयत। तथाऽवद्याल्लौकिकादपि द्वेषान्निष्कृष्य पिपृतात्पालयत। तद्युष्माभिः क्रियमाणमस्मत्पालनं मित्रादयः सर्वे देवा मामहन्तामतिशयेन पूजयन्त्वनुमोदन्तामित्यर्थः। सिन्धुर्नदीविशेषः समुद्रो वा। उतशब्दः समुच्चयार्थः।

अथ हविषो याज्यामाह—

दिवो रुक्म उरुचक्षा उदेति। दूरेअर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्येण प्रसूताः। आयन्नर्थानि कृणवन्नपाꣳसि, इति।

अयं तरणिः सूर्य उदेति। कीदृशो दिवो रुक्मः स्वर्गस्य भासकः। उरुचक्षा उरुषु विस्तीर्णेषु पृथिव्यादिलोकेषु प्रकाशकः। दूरेअर्थो दूरदेशविषयेऽर्थो गमनरूपं प्रयोजनं यस्यासौ दूरेअर्थः। बहुदूरगमनं च पुराणे स्मर्यते—

योजनानां सहस्रे द्वे द्वे शते द्वे च योजने।
एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते॥ इति।

---

१ क. द्वे दिवा।

तादृशोऽयं भ्राजमानो दीप्यमानो वर्तते । नूनमवश्यं जनाः सर्वे सूर्येण प्रसूताः प्रेरिताः सन्तोऽर्थान्यर्थ्यमानानि कृष्यादिफलान्यायन्प्राप्नुवन्ति । अपांसि वैदिकानि कर्माणि कृणवन्कुर्वन्ति ।

अथ तस्मिन्नेव हविषि विकल्पितामन्यां पुरोनुवाक्यामाह—

शं नो॑ भव॒ चक्ष॑सा॒ शं नो॒ अह्ना॑ । शं भा॒नुना॒ श॒ꣳ हि॒माशं घृ॒णेन॑ । यथा॒ शम॒स्मै शम॒सद्दु॒रो॒णे । तत्सू॑र्य॒ द्रवि॑णं धे॒हि चि॒त्रम्, इति ।

हे सूर्य त्वं नोऽस्माकं चक्षसा चक्षुरनुग्रहेण शं सुखहेतुर्भव । तथा नोऽस्माकमह्ना दिननिष्पादनेन शं भव । भानुना रश्मिरूपप्रकाशनेन शं भव । हिमा हिमेन रश्मीनुपसंहृत्य शैत्यप्रदानेन शं भव । घृणेन घर्मप्रदानेन शं भव । वसन्तग्रीष्मयोः शैत्यप्रदानमृत्वन्तरेषु घर्मप्रदानमिति विवेकः । प्राणिनां हि वसन्तादौ शैत्यापेक्षा वर्षादिष्वौष्ण्यपेक्षाऽतस्तदुभयं प्रार्थ्यते । अस्मै यजमानाय गृहाद्बहिः संचरते यथा शमसद्येन प्रकारेण सुखं भवति दुरोणे गृहे च यथा शमसद्येन प्रकारेण सुखं भवति हे सूर्य तद्धेहि तथा कुरु । किंच चित्रं मणिमुक्तादिरूपेण नानाविधं द्रविणं धेहि संपादय ।

अथ हविषो विकल्पितामन्यां याज्यामाह—

चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कम् । चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः (३) । आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षम् । सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च, इति ।

चित्रं ताम्रारुणबभ्रुत्वादिरूपेण विचित्रं सूर्यमण्डलमुदगादुदयं प्राप्नोत् । तदेव वैचित्र्यमन्यत्राऽऽम्नातम्—"असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः" इति । कीदृशं मण्डलं देवानामनीकं दीप्यमानबहुरश्मिरूपाणां देवानां सैन्यसदृशम् । तथा मित्रावरुणाग्न्यादीनां सर्वेषां दृष्ट्यनुग्राहकत्वेन चक्षुःस्थानीयम् । जगतो जङ्गमस्य प्राणिजातस्य तस्थुषश्च स्थावरस्याप्यात्मा प्रत्यगात्मत्वेन हृदयेऽवस्थितः सूर्यो लोकत्रयमाप्राः सर्वतः स्वचैतन्येन स्वरश्मिना च पूरितवान् ।

अथ " त्वाष्ट्रं षडवमालभेत " इत्यस्य पशोः सूक्ते वपायाः पुरोडाशस्य याज्यानुवाक्ययोश्चत्वारि प्रतीकानि दर्शयति–

त्वष्टा दधच्छन्नस्तुरीपम् । त्वष्टा वीरं पिशङ्गरूपः, इति ।

' त्वष्टा दधदिन्द्राय ' इति वपायाः पुरोनुवाक्या । सा चेयं 'समिद्ध इन्द्र उषसाम् ' इत्यत्र व्याख्याता। 'तन्नस्तुरीपमध पोषयित्नु' इति वपाया याज्या। सा च 'अग्निना रयिमश्नवत्' इत्यत्र व्याख्याता । त्वष्टा वीरं देवकामम्' इति पुरोडाशस्य पुरोनुवाक्या । सा च ' समिद्धो अञ्जन् ' इत्यत्र व्याख्याता । ' पिशङ्गरूपः सुभरः ' इति पुरोडाशस्य याज्या । सा च 'अग्निना रयिमश्नवत्' इत्यत्र व्याख्याता ।

अथ हविषः पुरोनुवाक्यामाह–

दशेमं त्वष्टुर्जनयन्त गर्भम् । अतन्द्रासो युवतयो बिभ-र्त्रम् । तिग्मानीकँ स्वयशसं जनेषु । विरोचमानं परिषीं नयन्ति, इति ।

प्राच्याद्या दश दिश इममग्निं गर्भस्थानीयं त्वष्टुः सकाशाज्जनयन्तोदपादयन् । पुरा कदाचित्सर्वत आन्ध्ये सति प्रकाशार्थं दशस्वपि दिक्षु त्वष्टा वह्निमुत्पादितवानित्याख्यायिका ब्राह्मणान्तरे द्रष्टव्या । कीदृश्यो दिशोऽतन्द्रासः प्राणिधारणरूपे स्वव्यापारे कदाचिदप्यालस्यरहिताः । युवतयो नित्यतरुणस्वभावाः । कीदृशमग्निं विभर्त्रं दाहपाकप्रकाशप्रदानेन सर्वस्य जगतः पोषकम् । तिग्मानीकं तीक्ष्णज्वालारूपेण सैन्योपेतम् । स्वयशसं स्वतःप्रसिद्धयशोयुक्तम् । जनेषु प्राणिषु विरोचमानमुदराग्निरूपेण बहिष्प्रकाशकत्वेन च विशेषेण दीप्यमानम् । तादृशमग्निं परिषीं परितोऽवस्थितासु तत्तद्गृहसीमासु सर्वे प्राणिनो नयन्ति ।

अथ हविषो याज्यामाह–

आविष्ट्यो वर्धते चारुरासु । जिह्मानामूर्ध्वः स्वयशा उपस्थे (४) । उभे त्वष्टुर्बिभ्यतुर्जायमानात् । प्रतीची

१ क. °चित्पर्वतस्योपरि प्र° ।

सि॒ꣳहं प्रतिं॒जोषयेते, इति ।

आविष्ट्य आविर्भूतश्चारुः शोभनः सूर्य आसु जिह्मानामासां कुटिलानां तिर्यगवस्थितानां दिशां मध्य उपस्थ उपरिभागे स्वयशाः स्वाधीनयशस्को वर्धते । योऽयमादित्यरूपेणोपरि वर्तते स एवाग्निरूपेण त्वष्टुः सकाशाज्जायते । जायमानात्तस्मादग्नेरुभे द्यावापृथिव्यौ [1]बिभ्यतुर्भीते आस्ताम् । अत्यन्तदहननिमित्तेयं भीतिः । ते च भीते सत्यौ प्रतीची प्रतीच्यामभिमुखे भूत्वा सिंहं सिंहसदृशं दुरासदमग्निं प्रतिपद्य जोषयेते प्रीणयतः । ततः प्रीतोऽग्निर्नात्यन्तं धक्षतीति तयोरभिप्रायः ।

अथ "मैत्रꣳ श्वेतमालभेत" इत्यस्य पशोः सूक्तं वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति—

मि॒त्रो जना॒न्प्रसमित्र, इति ।

'मित्रो जनान्यातयति' इति पुरोनुवाक्या । 'प्रसमित्र मर्तो अस्तु' इति याज्या । एतच्चोभयं 'त्वमग्ने बृहद्वयः' इत्यत्र व्याख्यातम् ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

अ॒यं मि॒त्रो न॒मस्यः॑ सु॒शेवः॑ । राजा॑ सु॒क्ष॒त्रो अ॑जनिष्ट

वे॒धाः । तस्य॑ व॒यꣳ सु॑म॒तौ य॒ज्ञिय॑स्य । अपि॑ भ॒द्रे सौम-

न॒से स्या॑म, इति ।

अयं पशुना पूज्यमानो मित्रो देवो नमस्यः सर्वैर्नमस्कार्यः । सुशेवः सुष्ठु सेवितुं शक्यः । राजा सर्वेषां स्वामी । सुक्षत्रः शोभनबलयुक्तः । वेधाः प्राणिनां विधाता भूत्वाऽजनिष्ट प्रादुर्भूतः । यज्ञियस्य यज्ञयोग्यस्य तस्य मित्रस्य सुमतावनुग्रहरूपायां बुद्धौ वयं स्यामावस्थिता भूयास्म । अपि च भद्रे कल्याणे सौमनसे चित्तस्वास्थ्ये स्यामावस्थिता भूयास्म ।

अथ पुरोडाशस्य याज्यामाह—

अ॒न॒मी॒वास॒ इड॑या म॒द॑न्तः । मि॒तज्ञ॑वो॒ व॒रि॑म॒न्ना पृ॑थि॒व्याः ।

आ॒दि॒त्यस्य॑ व्र॒तमु॑प॒क्षय॑न्तः (५) । व॒यं मि॒त्रस्य॑ सु॒म॒तौ

स्या॑म, इति ।

---

[1] क. अन्तर्दाह्यमि° ।

वयं यजमाना मित्रस्य देवस्य सुमतावनुग्रहबुद्धौ स्याम सर्वदाऽवस्थिता भूयास्म। कीदृशा वयमनमीवासो रोगरहिताः। इडया मदन्तोऽन्नसमृद्ध्या हृष्यन्तः। मितज्ञवो भूमाववस्थितजानुकाः। लोके हि स्वामिनः संनिधौ विज्ञापनां कुर्वन्तो भृत्यास्तथा वर्तन्ते। पृथिव्याः संबन्धिनि वरिमन्वरिष्ठे देवयजन आ समन्तादादित्यस्य मित्रनाम्न आदित्यविशेषस्य संबन्ध्येतत्पशुरूपं कर्मोपक्ष्यन्तोऽनुतिष्ठन्तः।

अथ हविषः पुरोनुवाक्यामाह—

मित्रं न ईꣳ शिम्या गोषु गव्यवंत्। स्वाधियो विदथे

अप्स्वजीजनन्। अरेजयताꣳ रोदसी पाजसा गिरा।

प्रति प्रियं यजतं जनुषामवः, इति।

स्वाधियः स्वतन्त्रबुद्धय ऋत्विजो नोऽस्मदीय ईं विदथेऽस्मिन्यज्ञे शिम्याऽनुष्ठानेन जनयितव्यास्वप्सु निमित्तभूतासु सतीषु मित्रं देवमजीजनन्नुत्पादितवन्तोऽस्मिन्कर्मण्याहुतवन्त इत्यर्थः। तत्र दृष्टान्तो गोषु गव्यवद्यथा गोषु गव्यं क्षीरादिकं जनयन्ति तथाऽस्मिन्कर्मणि मित्रं हविर्भोक्तृत्वेनोत्पादितवन्तः। रोदसी द्याव्यापृथिव्यौ पाजसा मित्रस्य बलेनारेजयतामकम्पतां मित्रस्याऽऽज्ञया वर्तेते इत्यर्थः। यजतं यजनीयं प्रियं मित्रं प्रतिजनुषां जन्मवतामस्माकमवो रक्षणं गिरा वाचा प्रार्थयामह इति शेषः।

अथ हविषो याज्यामाह—

महाꣳ आदित्यो नमसोपसद्यः। यातयज्जनो गृणते सुशेवः।

तस्मा एतत्पन्यतमाय जुष्टम्। अग्नौ मित्राय हविराजु-

होत, इति।

य आदित्योऽदितेः पुत्रो मित्रो महानाकारेण बहुलः। नमसोपसद्यो नमस्कारेण सेवनीयः। यातयज्जन एतदाराधनार्थं प्रयत्नं कारयद्भिर्जनैर्युक्तः। गृणते स्तुतिं कुर्वते यजमानाय सुशेवः सुखेन सेवितुं शक्यः। पन्यतमायातिशयेन

१ क. ॰नस्थापितज्ञा॰।

स्तुत्यार्थं तस्मै पूर्वोक्तगुणयुक्ताय मित्राय जुष्टं प्रियमेतद्धविरस्मावाहवनीये हे ऋत्विज आजुहोत ।

अथ " आश्विनं धूम्रमालभेत " इत्यस्य पशोः सूक्तं वपायाः पुरोनुवाक्यामाह—

आ वा॑ᳫ᳚ रथो॒ रोद॑सी बद्बधा॒नः (६) । हि॒र॒-
ण्ययो॒ वृष॑भिर्या॒त्वश्वैः॑ । घृ॒तव॑र्तनिः प॒विभी॑
रुचा॒नः । इ॒षां वो॒ढा नृ॒पति॑र्वा॒जिनी॑वान्, इति ।

हेऽश्विनौ वां युवयो रथोऽश्वैर्युक्त आयात्वस्मद्यज्ञं प्रत्यागच्छतु । कीदृशो रथो रोदसी द्यावापृथिव्यौ बद्बधानोऽतिशयेन बाधमानः । हिरण्ययः सुवर्णमयः । घृतवर्तनिर्घृतं वर्तन्यां मार्गे यस्य रथस्य सोऽयं घृतवर्तनी रथमार्गः सर्वोऽपि घृतसमानेन जलेन पूर्ण इत्यर्थः । पविभिर्वज्रसमानैरायुधै रुचानो दीप्यमानो रथस्योपरि बहून्यायुधानि तिष्ठन्तीत्यर्थः । इषां भक्तेभ्यो देयानामन्नानां वोढा । नृपतिर्नृणां पालयिता । वाजिनीवान्वाजिनीभिरन्नहेतुभिर्युक्तः । कीदृशैरश्वैर्वृषभिः सेचनसमर्थैः ।

अथ वपाया याज्यामाह—

स प॑प्रथा॒नो अ॒भि पञ्च॒भूम॑ । त्रि॒ब॒न्धुरो॒ मन॒-
साऽऽया॑तु यु॒क्तः । वि॒शो॒ येन॒ गच्छ॑थो देव॒-
यन्तीः॑ । कुत्रा॑चि॒द्याम॑मश्विना॒ दधा॑ना, इति ।

स रथो मनसा युक्त आयातु स्मरणमात्रेणास्मदीयं यज्ञमागच्छतु । कीदृशो रथः पञ्चभूमाभिपप्रथानः । भूमशब्दो भुवनवाची । पञ्चसंख्याकानि भुवनानि पृथिव्यन्तरिक्षद्युलोकपाताललोकजनलोकरूपाण्यभिलक्ष्य पप्रथानोऽतिशयेन प्रथमानः । बन्धुरशब्देन सारथिस्थानमुच्यते । त्रीणि बन्धुराणि यस्यासौ त्रिबन्धुरो रथे बद्धश्वेषु योजितेषु कक्ष्यात्रये सारथय उपविश्य तान्सर्वानश्वान्प्रेरयन्ति। हेऽश्विनौ युवां येन रथेन देवयन्तीर्देवानात्मन इच्छन्तीर्विशो प्रजा गच्छथः स

रथः पूर्वोक्तगुणकः। हेऽश्विनौ कुत्रचिद्यत्र क्वापि यानं गमनं दधाना मनसि धारयन्तौ तेनैव रथेन गच्छथ इति शेषः।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

स्वश्वा यशसाऽऽयातमर्वाक् । दस्रा
निधिं मधुमन्तं पिबाथः । वि वा१ं
रथो वध्वा यादमानः (७)। अन्ता-
न्दिवो बाधते वर्तनिभ्याम्, इति ।

हे दस्राऽश्विनौ स्वश्वा शोभनैरश्वैर्युक्तौ तथा यशसा युक्तावर्वागायातमस्मदभिमुखमागच्छतम्। आगत्य च मधुमन्तं माधुर्ययुक्तं निधिं निधिसमानं वपादिकं पिबाथो भिक्षयथः। वध्वा सहितयोर्वां युवयोरयं रथो यादमान इतस्ततो भ्रमन्वर्तनिभ्यां चक्रधाराभ्यां चक्रमार्गाभ्यां वा दिवोऽन्तान्द्युलोकस्य पर्यन्तान्विशेषेण बाधते।

अथ पुरोडाशस्य याज्यामाह—

युवोः श्रियं परि योषा वृणीत ।
सूरो दुहिता परितक्मियायाम् ।
यद्देवयन्तमवथः शचीभिः । परि-
घ्रंसं वां मना वां वयो गाम्, इति ।

हेऽश्विनौ सूरो दुहिता सूर्यस्य कन्यका या योषाऽस्ति सा परितक्मियायां परितो गमनलक्षणायां क्रियायां युवोः श्रियं युवयोराश्रयभूतं रथं परिवृणीत परितो वृतवती। अयमर्थः। सूर्यस्य दुहितरं परिवरितुं सर्वे देवाः कांचिन्मर्यादां चक्रुस्तस्यामश्विनौ जितवन्तौ। तदानीमियं दुहिता गमनार्थं तदीयं रथं वव्र इति। इदमुपाख्यानं शाखान्तरे द्रष्टव्यम्। यद्देवयन्तं यस्मात्कारणाद्देवान्कामयमानं यजमानं हेऽश्विनौ शचीभिः स्वशक्तिभिरवथो रक्षथस्तस्मात्कारणात्परिघ्रसं घस्रो दिनमित्यर्थस्तस्य परितः सायंप्रातःकालयोरित्यर्थः। तयोः कालयोर्वां युवां वयो हविर्लक्षणमन्नं गां गच्छतु। कीदृशं वयो वां मना युवयोर्मननीयम्।

१ क 'वं प्रापेति'।

अथ हविषः पुरोनुवाक्यामाह—

यो ह स्य वा॑ꣳ रथिरा वस्त॑ उस्राः ।
रथो॑ युजानः प॑रियाति॑ व॒र्तिः ।
ते॑न नः शं यो॑रुषसो॑ व्युष्टौ ।
न्य॑श्विना वहतं य॒ज्ञे अ॒स्मिन्, इति ।

हे रथिरौ रथयुक्तावश्विनौ वां युवयोः संबन्धी यो ह यः खलु रथोऽस्ति स्यः स एष रथ उस्रा उस्रैः स्वनिष्ठमणिमुक्तादिरश्मिभिर्वस्ते स्वात्मानमाच्छादयति मण्यादिभिरलंकृत इत्यर्थः । स च रथो युजानोऽश्वयुक्तः सन्वर्तिन्यां मार्गे परियाति परितो गच्छति । तेन रथेन नोऽस्माकं शं सुखप्राप्तिहेतुं योर्दुःखवियोगहेतुं चोषसो व्युष्टौ व्युष्टायामुषसि प्रातःकालेऽस्मिन्यज्ञे हेऽश्विनौ निवहतं तदुभयं नितरां प्रापयतम् ।

अथ हविषो याज्यामाह—

युवं भुज्युमव॑विद्धꣳ समुद्रे (८) ।
उदूहथुरर्णसो अस्रिधानैः । पत-
त्रिभिरश्रमैरव्यथिभिः । दꣳसना-
भिरश्विना पारयन्ताम्, इति ।

हेऽश्विनौ युवं युवामुभौ समुद्रेऽवविद्धं निमग्नं भुज्युं कंचिद्राजानं भुज्युनामकमर्णस उदकादुदूहथुरूर्ध्वमानीतवन्तौ । केन साधनेनेति तदुच्यते । अस्रिधानैरमन्दवेगैः पतत्रिभिः पक्षिविशेषैः । अश्रमैः श्रमरहितैः । अव्यथिभिर्भयरहितैः । कीदृशावश्विनौ दंसनाभिर्व्यापारविशेषैः पारयन्ता तीरं प्रापयन्तौ । भुज्युनाम्नो राज्ञोऽश्विभ्यां समुद्रादुद्धरणमन्यत्रापि "तमूहथुर्नौभिरात्मन्वतीभिः" इति मन्त्रे स्पष्टमाम्नातम् ।

अथ तृतीयकाण्डोक्तस्य "अग्नीषोमीयामालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

अग्नीषोमा यो अद्य वा॑म् । इदं वचः

सपर्यति । तस्मै धत्तं सुवीर्यम् ।
गवां पोषं स्वश्व्यियम्, इति ।

हेऽग्नीषोमौ योऽयं यजमानोऽस्मिन्कर्मणि वां युवामिदं वचोऽनेन वचसा प्रयुज्यमानेन मन्त्रेण सपर्यति परिचरति तस्मै यजमानाय सुवीर्यं शोभनसामर्थ्यं गवां पोषं गोसमृद्धिं स्वश्व्यं शोभनाश्वसमूहं च धत्तं संपादयतम् ।

अथ वपाया याज्यामाह—

यो अग्नीषोमा हविषा सपर्यात् । देव-
द्रीचा मनसा यो घृतेन । तस्य
व्रतं रक्षतं पातमंहसः (९) ।
विशे जनाय महि शर्म यच्छतम्, इति ।

हेऽग्नीषोमौ यो यजमानो हविषा पशुरूपेण सपर्यात्परिचरति यश्च देवद्रीचा देवान्प्राप्नुवता मनसा मननीयेन घृतेन परिचरति तस्य यजमानस्य व्रतमिदं कर्म विघ्नेभ्यो रक्षतम् । तं च यजमानमंहसः पापात्पातं रक्षतम् । विशे प्रजायुक्ताय यजमानाय जनाय मनुष्याय यजमानाय महि शर्म महत्सुखं यच्छतम् ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

अग्नीषोमा य आहुतिम् । यो वां
दाशाद्धविष्कृतिम् । स प्रजया
सुवीर्यम् । विश्वमायुर्व्यश्नवत्, इति ।

हेऽग्नीषोमौ योऽयं यजमान आहुतिं दाशाद्दद्यात् । तदेव पुनर्वाक्यान्तरेण स्पष्टी क्रियते—यो यजमानो वां युवाभ्यां हविष्कृतिं हविर्योग्येन( ण ) संस्कारेण संस्कृतामाहुतिं दाशाद्दद्यात् । मन्त्रेण क्रियया चाविकलं यथा भवति तथाऽनुतिष्ठेदित्यर्थः । स यजमानः प्रजया पुत्रपौत्रादिरूपया सह सुवीर्यं शोभनसामर्थ्ययुक्तं विश्वमायुः शतसंवत्सरपर्यन्तमायुर्व्यश्नवद्विशेषेण प्राप्नोति ।

---

१ क. 'योऽत्वं'।

अथ पुरोडाशस्य याज्यामाह—

अग्नीषोमा चेति तद्वीर्यं वाम्। यदमुष्णी-
तमवसं पणिं गोः। अवातिरतं प्रथयस्य
शेषः। अविन्दतं ज्योतिरेकं बहुभ्यः, इति।

हेऽग्नीषोमौ पणिं पणिनाम्नः कस्यचिदसुरस्य गोर्यावत्यो गावः सन्ति ताः सर्वा अमुष्णीतं युवामपहृतवन्ताविति यदेतदस्ति तदेतद्वां वीर्यं. युवयोः शौर्यं चेति चेतसि सर्वो जनो विजानाति। पणिनामकः कश्चिदसुरो देवेभ्यो भीतः स्वकीया गाः स्वीकृत्य क्वचित्पलायनमकरोत्। तदानीमेतावग्नीषोमौ ताः सर्वा गा बलादानीतवन्तौ। सेयमाख्यायिका शाखान्तरे द्रष्टव्या। हेऽग्नीषोमौ तथा युवां प्रथयस्य प्रथयनाम्नः कस्यचिदसुरस्य शेषः शेषमपत्यं वृत्रनामानमसुरमवातिरतमिन्द्रद्वारा विनाशितवन्तौ। ततस्तमोरूपस्यासुरस्य वृत्रस्य नाशाद्बहुभ्यो बहुयजमानोपकारार्थं ज्योतिरेकं संपूर्णं चन्द्रमण्डलरूपं ज्योतिः प्रकाशमविन्दतं लब्धवन्तौ। इदं च वृत्रवधाख्यानं—"त्वष्टा हतपुत्रः" इत्यनुवाके प्रपञ्चितम्। तत्र हि "घ्नन्ति वा एनं पूर्णमासः" इति वाक्ये तमोरूपस्य वृत्रस्य वधे सति पौर्णमासदिने संपूर्णचन्द्रमण्डलरूपस्य प्रकाशस्याऽऽविर्भावः श्रुतस्तत्सर्वत्र संगृह्योक्तम्।

अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

अग्नीषोमाविमꣳ सुमेऽग्नीषोमा
हविषः प्रस्थितस्य (१०), इति।

जभार द्यौरग्नेरुपस्थ उपक्ष्यन्तो बद्धधानो यादमानः समुद्रे हꣳसः प्रस्थितस्य।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमा-
ध्याये सप्तमोऽनुवाकः ॥७॥

---

'अग्नीषोमाविमꣳ सुमे शृणुतम्' इति पुरोनुवाक्या। 'अग्नीषोमा हविषः प्रस्थितस्य' इति याज्या। एतच्चोभयं 'सप्रत्नवं निकाव्यः' इत्यत्र व्याख्यातम्।

---

१ क. 'बहुयजमानोप'।

अत्र विनियोगसंग्रहः—

सूर्यो देवी श्वेतसौर्ये ब्रह्मवर्चसकामिनः ।
शं नो भवेति मन्त्रौ द्वौ पूर्ववैव विकल्पितौ ॥ १ ॥
त्वष्टा दधदिति त्वाष्ट्रवडवे पशुकामिनः ।
मित्रो जनेति मैत्रे स्यात्संग्रामे समयार्थिनः ॥ २ ॥
आ वां रथ इति त्वेतदाश्विने धूम्रलाञ्छिते ।
अग्नीषोमा वशायां स्यादजायामन्नकामिनः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमेऽष्टमोऽनुवाकः ।

---

सप्तमे सौर्यादिपशूनां सूक्तान्यभिहितानि । अष्टमे वेहतादिपशूनां सूक्तान्युच्यन्ते । ते च पशवः शाखान्तरे समाम्नाताः । तत्र सूत्रकारेणोदाहृतम्—"साम्नाय्ये वेहतमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

अहमस्मि प्रथमजा ऋतस्य । पूर्वं देवेभ्यो
अमृतस्य नाभिः । यो मा ददाति स इदेव
माऽऽवाः । अहमन्नमन्नमदन्तमद्मि, इति ।

बह्वृचा आरण्यकाण्डे त्रिविधमन्नमामनन्ति—"त्रेधा विहितं वा इदमन्नमशनं पानं खादः" इति । तस्याशनादेस्त्रिविधस्यान्नस्याभिमानिनी या देवता-स्तदीयानि वचनान्यस्मिन्सूक्ते प्रतिपाद्यन्ते । अहमन्नस्वामी देव ऋतस्य यज्ञस्य प्रथमजाः प्रथमं जनयिताऽस्मि । यज्ञस्य हविर्जन्यत्वाद्धविषोऽन्नरूपत्वात् । तादृशोऽहमन्नस्वामी पूर्वं पुरा देवेभ्यो देवार्थममृतस्य नाभिर्बन्धकोऽस्मि । न ह्यतिबध्नात्यमृतमिति नाभिः । देवा ह्यमृतमुपजीवन्ति । अमृतं चान्नविशेषस्त-स्मादहमेवामृतस्य संपादकः । यः श्रद्धालुः पुमान्मा मामन्नरूपं ददाति ब्राह्मणादिभ्यः प्रयच्छति स इदेव स दाता स्वयमेव मा मामन्नदेवमावा आवृणोति स्वी करोतीत्यर्थः । द्वौ हि लोके पुरुषौ दाता चादाता च । तत्राऽऽद्यः कालान्तरे भोक्तुं मां संगृह्णाति । यावदन्नमिदानीं दीयते तावत्येव कालान्तरे शतधा सहस्रधा वर्धते । तस्माद्दातैव मां संगृह्णाति । यस्त्व-

न्तिमो मामदत्त्वा स्वयमेवात्ति अहमेवान्नमद्मीत्यभिमन्यते तमन्नमदत्तामिमा-निममन्नदेवोऽहमद्मि तं विनाशयामि । अदातुः कालान्तरेऽन्नाभावात् ।

अथ वपाया याज्यामाह—

पूर्वमग्नेरपि दहत्यन्नम् । यत्तौ हाऽऽसाते अहमुत्तरेषु ।
व्यात्तमस्य पशवः सुजम्भम् । पश्यन्ति धीराः प्रचरन्ति
पाकाः, इति ।

यदिदमन्नमग्नेरपि पूर्वमदातृभिर्भुज्यते तदिदमन्नं तं भोक्तारं दहति । अथ भुक्तमन्नमुदराग्निर्दिनमात्रेण दहति पाचयति । अदाता तु भोक्ता भुज्यमानेनान्नेन तदानीमेव दह्यते नरकहेतोः प्रत्यवायस्य तदैवोत्पन्नत्वात् । अत एवाऽऽहुः— "अदाता विषमश्नुते" इति । यत्तौ हा प्रयत्नवन्तावेवाऽऽसाते दाता चादाता चेत्युभौ तिष्ठतः । दाता हि दानार्थं प्रयत्नं करोति । इतरस्तु भोजनार्थम् । तयोर्मध्ये ये पुरुषा दातुः पक्षे वर्तन्ते त एवोत्तराः श्रेष्ठाः । तेषूत्तरेषु दातृषु कालान्तरेष्वहमक्षीणो वसानि । ये पशवो मूढा अदातारस्तान्प्रत्यस्यान्नदेवस्य मुखं व्यात्तं विवृत्तं सुजम्भं तीक्ष्णदन्तोपेतं वर्तते । खादाम्यदातॄनिति सर्वदोद्युक्त इत्यर्थः । एतमन्नदेवस्याभिप्रायं दातारो धीरा बुद्धिमन्तः पश्यन्ति जानन्ति । अत एवाददतः पाका बाला मूढाः प्रचरन्ति प्रकर्षेण भक्षयन्त्येव न तु किंचिदपि ददति ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

जहाम्यन्यं न जहाम्यन्यम् । अहमन्नं वशमिच्चरामि
(१) । समानमर्थं पर्येमि भुञ्जत् । को मामन्नं मनुष्यो
दयेत, इति ।

अन्नदेवोऽहमन्नमदातारं जहामि परित्यजामि । अन्यं तु दातारं न जहामि । अहमन्नमन्नदेवरूपोऽहं वशमित्स्ववशमेव यथा भवति तथा चरामि । अदातुः परित्यागो दातुः स्वीकारश्चेत्येतत्स्ववशत्वम् । यः पुमान्भोगदानयोः समानः सन्धनमर्थयते तं समानमर्थयितारं भुञ्जत्पालयन्नहं पर्येमि परितः प्राप्नोमि । यस्तु

१ क. दानप° ।

भोगमात्रलम्पटस्त्वं न पालयामि नापि तं पर्येमीत्यभिप्रायः । एवमदातृप-रित्यागेन दातृपक्षपातेन च वर्तमानं मां को मनुष्यो दयेत रक्षेन्निवारयेत् । न कोऽपि मां निवारयितुं शक्त इत्यर्थः ।

अथ पुरोडाशस्य याज्यामाह—

पराके अन्नं निहितं लोक एतत् । विश्वैर्देवैः पितृभिर्गु-प्तमन्नम् । यदद्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव, इति ।

पूर्वस्मिन्मन्त्रे वशमिच्चरामि मां को दयेतेति यत्स्वातन्त्र्यमुक्तं तदुपपादयितुं स्वमाहात्म्यमत्र वर्ण्यते । द्विविधो ह्यन्नस्य व्यवहारः पारलौकिक ऐहिकश्चेति । तत्र पराके परलोके दूरस्थे पित्रादिलोक एतदन्नं निहितम् । दाता हि देवलोके पितृलोके वा ममेदं भूयादित्यभिप्रेत्यैव ब्राह्मणेभ्यो ददाति । अतो दत्तमन्नं दूरस्थे लोके निहितं भवति । तच्चान्नं तत्तल्लोके विश्वैः सर्वैर्देवैः पितृभिश्च स्वार्थं गुप्तं रक्षितं भवति । यदग्नौ हुतं यच्च ब्राह्मणेभ्यो दत्तं तदेवोपजीव्य देवाः पितरश्च वर्तन्ते । एवं पारलौकिकोऽन्नव्यवहार उक्तः । ऐहिकोऽपि व्यवहार उच्यते । यदन्नमद्यते प्राणिभिर्भक्ष्यते यच्च विदग्धं सद्भाण्डेऽपि भवति पर्युषितत्वेन वा पूती भवति तादृशं लुप्यते नष्टं भवति । यच्च परोप्यते स्वकीयैश्वर्यप्रकटनाय बहिः परित्यज्यते सा सर्वाऽप्यैहिकामु-ष्मिकान्नरूपा मेऽन्नस्वामिनो देवस्य शततमीः शतसंख्यापूरणी तनूः । स च सर्वोऽपि लेश एवेत्यर्थः । ईदृशं मदीयं माहात्म्यम् ।

अथ हविषः पुरोनुवाक्यामाह—

महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवं च पृश्नि पृथिवीं च साकम् । तत्संपिबन्तो न मिनन्ति वेधसः । नैतद्भूयो भवति नो कनीयः ( २ ), इति ।

पुनरपि माहात्म्यमेव प्रपञ्च्यते । तत्रायं दृष्टान्तः । यथा लोके बहुक्षीरप्र-दाया गोः सकृद्दुग्धेन महान्तौ चरू प्रौढौ कुम्भौ पूरयति एवमत्रापि पृश्नि स्वल्पमपि दत्तमन्नं दिवं च पृथिवीं च साकं लोकद्वयमपि सह पूरयति । अग्नौ

१ क. ख. संगृहीतं ।

ब्राह्मणेषु वा दत्तमन्नं मन्त्रपूतं सत्सहस्रधा फलति । अत एवान्यत्राऽऽम्नायते— "यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते" इति । तदन्नं संपिबन्तः सम्यग्भक्षयन्तो वेधसो बुद्धिमन्तो न मिनन्ति न हिंसन्ति स्वात्मानमन्नं वा न विनाशयन्ति । दानपूर्वकं भक्षणं सम्यग्भक्षणं तत्कुर्वन्तः पुरुषा अन्नं न हिंसन्ति, तत्तस्यान्नस्य च वर्धमानत्वात् । स्वात्मानमपि न हिंसन्ति प्रवृद्धस्यान्नस्य च चिरभोक्तृत्वात् । अपि चैतद्भोजनार्थमन्नं न भूयो नापि कनीयः । भूयस्त्वे स्यादजीर्तिः कनीयस्त्वे नास्ति क्षुन्निवृत्तिः ।

एतदेवाभिप्रेत्य स्मर्यते—

"नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः" इति ।

एवं दानपुरःसरं युक्तेन प्रमाणेन भुञ्जानान्पुरुषाँल्लोकद्वये पालयतीत्यर्थः ।

अथ हविषो याज्यामाह—

अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु<br>जीवातुमाहुः । अन्नं ब्रह्माणो जरसं<br>वदन्ति । अन्नमाहुः प्रजननं प्रजानाम्, इति ।

सर्वव्यवहारकारणत्वादस्यान्नस्य माहात्म्यमविवादम् । तत्कथमिति तदुच्यते— योऽयं प्राणवायुरूर्ध्वं संचरति यश्चापानवायुरधः संचरति तावुभावन्नजन्यबलादेव संचरतः । अतस्तयोरन्नात्मकत्वमाहुः । रसवैषम्येण व्याधिद्वारा मारकत्वादन्नं मृत्युमाहुः । तमेवान्नदेवं जीवातुं जीवनौषधमाहुः । तच्च लोके प्रसिद्धम् । ब्रह्माण आयुर्वेदशास्त्राभिज्ञा ब्राह्मणा अन्नमेव जरसं वदन्ति जराहेतुमाहुः । केनचिदाहारविशेषेण सहसाऽतिपलितत्वप्राप्तिरित्यायुर्वेदप्रसिद्धिः । अन्नमेवेन्द्रियवृद्धिद्वारा प्रजानां प्रजननमुत्पादकमाहुः ।

अथ हविष एव विकल्पितामन्यां पुरोनुवाक्यामाह—

मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि<br>वध इत्स तस्य । नार्यमणं पुष्यति नो<br>सखायम् । केवलाघो भवति केवलादी, इति ।

योऽयमदाता सोऽयमप्रचेताः प्रकृष्टज्ञानरहितो मोघं व्यर्थमेवान्नं विन्दते लभते ।

---

१ क. °सा वलीपलितत्वादिप्रा° ।

 

तदेतत्सत्यं ब्रवीमि न केवलं वैयर्थ्यं किंतु सोऽयमदत्तोऽन्नपदार्थस्तस्य दानरहितस्य पुरुषस्य वध इव वध एव वधवद्बाधकमेवेत्यर्थः । तत्र वैयर्थ्यं तावत्स्पष्टी क्रियते । योऽयमदाता सोऽयमन्नेनार्यमादिकं देवं न पुष्यत्यग्नावाहुत्यभावात् । सखायमतिथ्यादिरूपं मनुष्यं न पुष्यति दानाभावात् । अतः परलोकेऽनुपयोगेन वैयर्थ्यम् । वधहेतुत्वं स्पष्टी क्रियते—केवलादी केवलं भुङ्क्ते न तु ददाति सोऽयं केवलाघो भवति। पापमेव संपादयति न तु किंचिदपि पुण्यम् । सोऽयं वध एव नरकहेतुत्वात् ।

अथ हविषो विकल्पितां याज्यामाह—

अहं मेघः स्तनयन्वर्षन्नस्मि । मामदन्त्यहमद्म्यन्यान् (३) । अहꣳ सदमृतो भवामि ।
मदादित्या अधि सर्वे तपन्ति, इति ।

योऽयं मेघः स्तनयन्गर्जन्वर्षंश्च वर्तते सोऽयं मेघोऽप्यहमन्नदेवोऽस्मि । अग्नौ हुतस्यान्नस्य मेघरूपेण परिणतत्वात् । अत एव स्मर्यते—"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः" इति । दातारो ये सन्ति ते मामदन्ति सुखेन भक्षयन्ति । अन्यांस्तु दानरहितानहमेवाद्मि विनाशयामि । अहमेव दातॄणां पथ्यं सदमृतो भवाम्यमरणहेतुर्भवामि देवत्वं प्रापयामीत्यर्थः । सर्वेऽप्यादित्या मदन्ननिमित्तत्वादधिकत्वेन तपन्ति । अन्नाभावे ते स्वयमेव न जीवेयुः कुतस्तपेयुरित्यर्थः ।

यदुक्तं सूत्रकारेण—" वाचे बेहतम् " इति, गर्भघातिनी गौर्वेहदित्युच्यते, तस्य पशोः सूक्ते प्रतीकद्वयं दर्शयति—

देवीं वाचमजनयन्त यद्वाग्वदन्ति, इति ।

" देवीं वाचमजनयन्त देवाः " इति वपायाः पुरोनुवाक्या । ' यद्वाग्वदन्ति' इति याज्या । तदुभयम् " उत नः प्रिया " इत्यत्र व्याख्यातम् ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

अनन्तामन्तादधिनिर्मितां महीम् । यस्यां देवा अदधुर्भोजनानि । एकाक्षरां द्विपदाꣳ षट्पदां च । वाचं देवा उपजीवन्ति विश्वे, इति ।

देवा इन्द्रादयो यस्यां वाचि भोजनान्यदधुः संपादितवन्तः । इन्द्राय स्वाहेति मन्त्रेण हुतं भुङ्क्तेऽतो वाङ्निमित्तं तद्भोजनम् । तां वाचं स्वभोजनहेतुं विश्वे सर्वे देवा उपजीवन्ति । सर्वेषामपि देवानां मन्त्रपुरःसरं दत्तमेवान्नं जीवनहेतुः । कीदृशीं वाचमनन्तां न हि लौकिकवैदिकशब्दानामन्तः पारोऽस्ति । अत एव महाभाष्यकार उदाजहार—बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता दिव्यं च वर्षसहस्रमध्ययनकालः शब्दपारायणस्यान्तं च न जगामेति । अन्तादधिनिर्मिताम् । पूर्वसृष्टेरन्तः परमेश्वरस्वरूपं तस्मिन्हि जगल्लीयते । तस्मादन्तात्परमेश्वरादधिकत्वेन निर्मितां तामेकाक्षरां प्रणवरूपां द्विपदां संस्कृतापशब्दरूपां षट्पदां प्राकृतपैशाचिकादिभाषाभेदेन षड्विधामत एव महीं महतीम् ।

अथ पुरोडाशस्य याज्यामाह—

वाचं देवा उपजीवन्ति विश्वे । वाचं गन्धर्वाः
पशवो मनुष्याः । वाचीमा विश्वा भुवनान्यर्पिता (४)। सा नो हवं जुषतामिन्द्रपत्नी, इति ।

पूर्वमन्त्रोक्तरीत्या सर्वे देवा आहुतिकालीनमन्त्ररूपां वाचमेवोपजीवन्ति । गन्धर्वादयश्च वाचैव व्यवहरन्ति । पशूनामपि हम्भारवादिरूपया वाचैव व्यवहारो दृश्यते । तस्मादिमा विश्वा भुवनानि सर्वलोकनिवासिन एते प्राणिनो वाच्यर्पिता वाचमेवाऽऽश्रित्य वर्तन्ते । येयमीदृशी वाक्सेयमिन्द्रपत्नीन्द्रस्य पालयित्री सती नो हवमस्मदीयमिदं हविर्जुषताम् ।

अथ हविषः पुरोनुवाक्यामाह—

वागक्षरं प्रथमजा ऋतस्य । वेदानां माताऽमृतस्य नाभिः । सा नो जुषाणोपयज्ञमागात् ।
अवन्ती देवी सुहवा मे अस्तु, इति ।

येयं वाक्सैवाक्षरमविनश्वरं परमात्मस्वरूपं तत उत्पन्नत्वात् । सा चर्तस्य यज्ञस्य प्रथमजा प्रथममुत्पादयित्री । मन्त्रैर्हि कर्माण्युत्पाद्यन्ते । अत एवाऽऽथर्वणिका आमनन्ति—" तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् "

१ क. ख. 'मन्त' इयत्ताऽस्ति ।

इति । सा चर्ग्वेदादीनां माता । तेषां वाग्विशेषरूपत्वात् । अमृतस्य नाभिरमृतत्वं हि देवत्वम् । वाचि नह्यते बध्यते मन्त्रपूर्वकानुष्ठानेन तत्प्राप्तिः । सा वाग्देवी जुषाणा प्रीतियुक्ता सती नोऽस्मदीयं यज्ञमुपागात्प्राप्नोतु । सा च देव्यवन्त्यस्मान्रक्षन्ती मे मम सुहवा सुखेनाऽऽह्वातुं शक्याऽस्तु ।

अथ हविषो याज्यामाह—

यामृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवास्तपसा श्रमेण । तां देवीं वाचꣳ हविषा यजामहे । सा नो दधातु सुकृतस्य लोके, इति ।

मन्त्रकृतः संप्रदायप्रवर्तकरूपेण मन्त्राणां कर्मकर्तारो मनीषिणो बुद्धिमन्तो धारणशक्तियुक्ता ऋषयो वसिष्ठाद्याः श्रमेण तपसा बहुप्रयाससाध्येन तपसा युक्तास्तथा देवाश्च यां वाचमन्वैच्छन्ननुप्राप्तुमिच्छामकुर्वन् । अत एव स्मर्यते—

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ इति ।

तां तादृशीं वाचं देवीमनेन हविषा यजामहे । सा च देवी सुकृतस्य कर्मणः फलभूते लोके नोऽस्मान्दधातु स्थापयतु ।

अथ हविष एव विकल्पितां याज्यामाह—

चत्वारि वाक्परिमिता पदानि (५) । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति, इति ।

येयं वाक्सा परिमितेयत्तया परिच्छिन्नानि चत्वारि पदानि चतुरोऽवयवान्प्राप्य वर्तते । परा पश्यन्ती मध्यमा वैखरीत्येते चत्वारः पादाः । तानि चत्वार्यपि पदानि ये ब्राह्मणा मनीषिणः शास्त्रज्ञास्ते विदुर्न त्वितरे मूढाः । तत्र हेतुरुच्यते—त्रीणि परा पश्यन्ती मध्यमेत्येतानि पदानि गुहायां शरीरमध्ये निहितानि स्थापितानि वर्तन्ते नेङ्गयन्ति न तु बहिः प्रसरन्ति । वाचस्तुरीयं वैखरीया(ख्या)ख्यं पदं मनुष्याः सर्वे वदन्त्युच्चारयन्ति ।

एतच्च शिक्षाकारेण स्पष्टीकृतम्—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम् ॥
कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥
स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः ।
इति वर्णविदः प्राहुर्निपुणं तं निबोधत ॥ इति ।

तस्माच्छरीरमध्ये गूढं पादत्रयं मनीषिण एव जानन्ति । मूढास्तुरीयमेव वदन्ति ।

यदुक्तं सूत्रकारेण—“ श्रद्धायै वेहतम् ” इति, तस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

श्रद्धयाऽग्निः समिध्यते । श्रद्धया विन्दते हविः । श्रद्धां भगस्य मूर्धनि । वचसाऽऽवेदयामसि, इति ।

शास्त्रार्थे विश्वासातिशयरूपा चित्तवृत्तिः श्रद्धा । तदभिमानिनी देवताऽपि तन्नामिकैव । श्रद्धया विश्वासातिशयेनानन्यया भक्त्याऽयमग्निः समिध्यते सम्यक्प्रज्वाल्यते । हविश्च श्रद्धया लभ्यते । भगस्य सौभाग्यस्य मूर्धन्युपरि स्थितां श्रद्धां वचसा वाक्येनाऽऽवेदयामासि । जनानामग्रे सौभाग्यहेतुः श्रद्धेति प्रख्यापयामः ।

अथ वपाया याज्यामाह—

प्रियꣳ श्रद्धे ददतः । प्रियꣳ श्रद्धे दिदासतः । प्रियं भोजेषु यज्वसु (६) । इदं म उदितं कृधि, इति ।

हे श्रद्ध इदानीं ददतो मे प्रियं भवत्वभीष्टं सिध्यतु । इतःपरमपि दातु-

मिच्छतो मे प्रियं भवतु। भोजेषु भोगपरेषु जन्तुषु यज्वसु यजमानेषु च प्रियं भवतु। इदमनन्तरोक्तं यज्वसु मे प्रियमुदितं कृध्यत्यधिकं कुरु।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

यथा देवा असुरेषु। श्रद्धामुग्रेषु चक्रिरे। एवं भोजेषु यज्वसु। अस्माकमुदितं कृधि, इति।

यथा लोके देवा उग्रेष्वसुरेषु श्रद्धां चक्रिरेऽवश्यमेते हन्तव्या इति दृढा-मिच्छां कृतवन्तः। एवमस्माकं फलभोगेषु तत्साधकेषु यज्वस्वपि प्रियमु-दितं कुरु।

अथ पुरोडाशस्य याज्यामाह—

श्रद्धां देवा यजमानाः। वायुगोपा उपासते। श्रद्धाᳪं हृद-य्ययाऽऽकूत्या। श्रद्धया हूयते हविः, इति।

हे देवा इन्द्रादय एते यजमाना वायुगोपाः स्वकीयप्राणरक्षकाः सन्तः श्रद्धामुपासते सेवन्ते। उक्तार्थ एव स्पष्टी क्रियते—हृदय्यया हृदये भवयाऽऽ-कूत्या संकल्पक्रियया श्रद्धामुपासतेऽत्यादरेणोपासत इत्यर्थः। हविरपि श्रद्ध-यैव हूयते।

अथ हविषः पुरोनुवाक्यामाह—

श्रद्धां प्रातर्हवामहे (७)। श्रद्धां मध्यंदिनं परि। श्रद्धाᳪं सूर्यस्य निम्रुचि। श्रद्धे श्रद्धापयेह मा, इति।

श्रद्धां श्रद्धाख्यां देवीं प्रातर्हवामहे प्रातःकाले समाह्वयामः। तथा मध्यं-दिनं परि मध्यंदिनसमीपमपि श्रद्धामाह्वयामः। सूर्यस्य निम्रुच्यस्तमयवेलाया-मपि श्रद्धामाह्वयामः। हे श्रद्धे देवीह कर्माणि मां श्रद्धापय विश्वासयुक्तं कुरु।

अथ हविषो याज्यामाह—

श्रद्धा देवानधिवस्ते। श्रद्धा विश्वमिदं

जगत्। श्रद्धां कामस्य मातरम्। हविषा वर्धया-
मसि, इति।

इयं श्रद्धा देवी देवानधिवस्ते देवेष्वधिवसति। विश्वं सर्वमिदं जगत्, श्रद्धामयम्, इच्छाविश्वासव्यतिरेकेण कस्यापि व्यवहारस्याभावात्। कामस्य मातरं काम्यमानफलस्योत्पादिकां श्रद्धां देवीमनेन हविषा वर्धयामस्यभिवृद्धां संतुष्टां कुर्मः।

यदुक्तं सूत्रकारेण—"ब्रह्मण ऋषभम्" इति तस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

ब्रह्म जज्ञानं प्रथमं पुरस्तात्। वि सीमतः सुरुचो वेन
आवः। स बुध्निया उपमा अस्य विष्ठाः (८)। सतश्च
योनिमसतश्च विवः, इति।

यदेतज्जगत्कारणं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिप्रसिद्धं तदेतत्प्रथमं सृष्ट्यादौ जज्ञानं जगदाकारेणोत्पद्यमानं सत्पुरस्तात्पूर्वस्यां दिशि वेनः कमनीय आदित्यो भूत्वा सुरुचः सुष्ठु दीप्यमानः सीमतः पूर्वदक्षिणपश्चिमोदग्दिग्विशेषसीम्नो विभज्याऽऽवरावृणोत्। स वेन आदित्यो बुध्निया बुध्नं मूलं तत्र भवा आकाशवाय्वग्निजलपृथिव्यो विष्ठा विभज्यावस्थिता अकरोदिति शेषः। तथा सतश्च विद्यमानस्य गिरिनदीसमुद्रादेरसतश्चाविद्यमानस्य योनिं कारणं प्र (णमुप)मा भ्रान्तिरूपं विवर्विवृतवान्सर्वजगद्व्यवस्थां निर्मितवानित्यर्थः।

अथ वपाया याज्यामाह—

पिता विराजामृषभो रयीणाम्। अन्तरिक्षं विश्वरूप
आविवेश। तमर्कैरभ्यर्चन्ति वत्सम्। ब्रह्म सन्तं ब्रह्मणा
वर्धयन्तः, इति।

योऽयं वेन आदित्यः पूर्वमुक्तः सोऽयं विराजां विशेषेण राजमानानां रयीणां धनानां पिता पालयिता, ऋषभः श्रेष्ठो विश्वरूपः पूर्वाह्णादिषु वसन्तादिषु कालविशेषेषु च बहुरूपस्तादृशोऽयमिदमन्तरिक्षमाविवेश प्रतिदिनं प्रविशति। ब्रह्म सन्तं परब्रह्मस्वरूप एव भूत्वाऽवस्थितं तमादित्यं ब्रह्मणा

मन्त्रेण वर्धयन्तो ब्राह्मणा अर्कैरर्चनीयैरभ्यर्च्यन्त्यभितः पूजयन्ति । तत्र दृष्टान्तो वत्सं यथा दोग्धुकामाः पुरुषा वत्समुपलालयन्त्येवं फलकामा आदित्यमभ्यर्चन्ति ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

ब्रह्म देवानजनयत् । ब्रह्म विश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्मितम् । ब्रह्म ब्राह्मण आत्मना, इति ।

यज्जगत्कारणं ब्रह्म तदेव देवानिन्द्रादीनजनयत् । तथैव तद्ब्रह्मान्यदपि विश्वं सर्वमिदं जगदजनयत् । ब्रह्मणः सकाशात्क्षत्रं निर्मितं क्षत्रियजातिर्निर्मिता । यत्परं ब्रह्म तदात्मना स्वस्वरूपेणैव ब्राह्मणोऽभवत् । अस्ति हि ब्राह्मणशरीरे परब्रह्मण आविर्भावविशेषः । अत एवाध्यापनादावधिक्रियते ।

अथ पुरोडाशस्य याज्यामाह—

अन्तरस्मिन्निमे लोकाः (९) । अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूतानां ज्येष्ठम् । तेन कोऽर्हति स्पर्धितुम्, इति ।

अस्मिन्ब्रह्मण्यन्तर्मध्य इमे भूरादयो लोका अवस्थिताः । तथैवान्तर्मध्ये विश्वं सर्वमिदं जगत्स्थावरजङ्गमरूपमवस्थितम् । तस्मात्कारणाद्ब्रह्मैव भूतानामाकाशादिपञ्चमहाभूतानां प्राणिनां च मध्ये ज्येष्ठमतिशयेन श्रेष्ठं प्रशस्तं च । तेन तादृशेन ब्रह्मणा को नामान्यः पुरुषः स्पर्धितुमर्हति । तत्समानस्य स्पर्धा युक्ता । न चास्ति कश्चित्समानः । अत एव श्वेताश्वतरशाखायामभिधीयते— " न तत्समश्चाभ्यधिकश्च दृश्यते " इति ।

अथ हविषः पुरोनुवाक्यामाह—

ब्रह्मन्देवास्त्रयस्त्रिꣳशत् । ब्रह्मन्निन्द्रप्रजापती । ब्रह्मन्ह विश्वा भूतानि । नावीवान्तः समाहिता, इति ।

---

१ क. °वयमाभि° । २ क ख. ज्येष्ठं । ३ क. °त्समानोऽभ्य° ।

हे ब्रह्मन्यथोक्ते ब्रह्मणि त्रयस्त्रिंशद्देवाः "ये देवा दिव्येकादश स्थ" इति-मन्त्रोक्ताः समाहिताः। तथा ब्रह्मन्परब्रह्मण्येव देवस्वामिनाविन्द्रप्रजापती समाहितौ। तथा ब्रह्मण्येव विश्वा भूतानि सर्वाणि स्थावरजङ्गमान्यन्तःसमाहितानि सम्यगवस्थितानि। तत्र दृष्टान्तो नावीवेति यथा समुद्रनद्यादितरणवेलायां चेतनाचेतनानि वस्तूनि नौमध्येऽवस्थाप्यन्ते तद्वत्।

अथ हविषो याज्यामाह—

चतस्र आशाः प्रचरन्त्वग्नयः। इमं
नो यज्ञं नयतु प्रजानन्। घृतं
पिन्वन्नजरꣳ सुवीरम् (१०)।
ब्रह्म समिद्भवत्याहुतीनाम्, इति।

यथोक्ते ब्रह्मणि चतस्र आशाश्चतुर्विधाः प्राच्यादिदिशः प्रत्यग्नय आहवनीयाद्याः प्रचरन्तु प्रकर्षेण वर्तन्ताम्। पूर्वस्यां दिश्याहवनीयो दक्षिणस्यां दिश्यन्वाहार्यपचनः पश्चिमायां दिशि गार्हपत्य उदिच्यां दिश्याग्नीध्रीयः। तथाविधः सर्वाधारपरमात्मा नोऽस्मदीयमिमं यज्ञं प्रजानन्प्रकर्षेणानुसंदधानो नयतु समाप्तिं प्रापयतु। किं कुर्वन्नजरमविनश्वरं सुवीरं शोभनापत्यहेतुभूतमिदं घृतमाहुतिरूपं पिन्वन्पिबन्। किं बहुना, आहुतीनामस्माभिरनुष्ठीयमानानां ब्रह्म समिद्भवति परब्रह्मैव सम्यक्प्रकाशकं भवति।

यदुक्तं सूत्रकारेण—"आ गावो अग्मन्नित्युपहोमाः" इति। तत्राष्टानामृचां मध्ये प्रथमामाह—

आ गावो अग्मन्नुत भद्रमक्रन्। सीदन्तु
गोष्ठे रणयन्त्वस्मे। प्रजावतीः पुरुरूपा इह
स्युः। इन्द्राय पूर्वीरुषसो दुहानाः, इति।

या एता गावः सन्ति ता आऽग्मन्निहाऽऽगच्छन्तु। उतापि च भद्रं कल्याणमक्रन्कुर्वन्तु। अस्मदीये गोष्ठे सीदन्तु तिष्ठन्तु। अस्मेऽस्मान्रणयन्तु रमयन्तु। इहास्मद्गृहे प्रजावतीर्बहुवत्सोपेताः पुरुरूपाः श्वेतकृष्णादिरूपेण बहुरूपाः स्युर्भ-

१ क. °म्यग्यव°। २ क. बेहुवपत्योपे°।

धेनुः । उषस उषःकालात्पूर्वीः पूर्वासु रात्रिष्विन्द्रायेन्द्रार्थं सांनाय्यमाशिरं च दुहानास्तिष्ठन्तु ।

अथ द्वितीयामाह–

इन्द्रो यज्वने पृणते च शिक्षति ।
उपेद्ददाति न स्वं मुषायति ।
भूयोभूयो रयिमिदस्य वर्धयन् ।
अभिन्ने खिल्ले निदधाति देवयुम्, इति ।

योऽयं यज्वा यागानुष्ठायी यश्च पृणन्यागकाले हविः पूरयन्वर्तते, अथवा गां ददाति तयोरुभयोरर्थं इन्द्रः शिक्षति फलं ददाति । उपेत्पुनरपि ददाति । स्वमात्मानं न मुषायति न मुष्णाति । यजमानं प्रति भूयो भूयो ददानोऽपि कदाचिदपि न तिरो भवतीत्यर्थः । अस्य यजमानस्य भूयो भूयः पौनःपुन्येन रयिमिद्धनमेव वर्धयन्देवयुं देवानात्मन इच्छन्तं यजमानमभिन्ने स्वनिवासस्थाने भेदरहिते खिल्ले खिलीभूते यागरहितैरगम्ये निदधाति स्थापयति । स्वकीयलोक एव तं गमयतीत्यर्थः ।

अथ तृतीयाचतुर्थ्योः प्रतीके दर्शयति–

न ता नशन्ति न ता अर्वा (११), इति ।

" न ता नशन्ति न दभाति तस्करः " इति तृतीया । " न ता अर्वा रेणुककाटः " इति चतुर्थी । एतच्चोभयम्–" उत नः प्रिया " इत्यत्र व्याख्यातम् ।

अथ पञ्चमीमाह–

गावो भगो गाव इन्द्रो मे अच्छात् ।
गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इन्द्रः ।
इच्छामीद्धृदा मनसा चिदिन्द्रम्, इति ।

---

१ क. 'हानाः सीदन्तु ।

या गावस्ता भगः सौभाग्यम्। सतीषु हि गोषु क्षीरादिसंपत्तिलक्षणसौभाग्यं भवति। अच्छादच्छा निर्मला गाव एव मे ममेन्द्रः स्वामी। यथा स्वामी पालयति तथा निर्मला गावो मां पालयन्तीत्यर्थः। तथा गाव एव प्रथमस्य मुख्यस्य सोमस्याभिषुतस्य भक्षो भजनीयः। सोमो हि दध्यादिश्रपणार्थं गोभजनं करोति। या इमा गावः सन्ति हे जनासो मनुष्यास्ता गाव एव स इन्द्रः। इन्द्रो हि गाः पालयति। तस्मादभेदोपचारः। हृदा हृत्कमलनिष्ठेन मनसा चिन्मनसैव गोरक्षार्थमिन्द्रमिच्छामि।

अथ षष्ठीमाह—

यूयं गावो मेदयथा कृशं चित्। अश्लीलं
चित्कृणुथा सुप्रतीकम्। भद्रं गृहं कृणुथ
भद्रवाचः। बृहद्वो वय उच्यते सभासु, इति।

हे गावो यूयं कृशं चित्कृशमपि पुरुषं वत्सं वा मेदयथा मेदस्विनं पुष्टं कुरुत। अश्लीलं चिदश्लीलं कुरूपमपि पुरुषं सुप्रतीकं कृणुथ घृतादिना पोषयित्वा शोभनावयवं कुरुथ। भद्रवाचः कल्याणवाचो गावो गृहं भद्रं कृणुथ हम्भारवयुक्ताभिर्गोभिर्वत्सैश्च संपूर्णं गृहं रमणीयं भासते। हे गावो वो युष्मदीयं वयोऽन्नं क्षीरघृतादिकं सभासु यज्ञशालासु बृहदुच्यते महत्त्वेन प्रस्तूयते।

अथ सप्तमीमाह—

प्रजावतीः सूयवसꣳ +रुशन्तीः।
शुद्धा अपः सुप्रपाणे पिबन्तीः।
मा वः स्तेन ईशत माऽघशꣳसः।
परि वो हेती रुद्रस्य वृञ्ज्यात्, इति।

एता गावः प्रजावतीर्वत्सोपेताः सूयवसं शोभनं तृणादिकं रिशन्तीर्भक्षयन्त्य इत्यर्थः। सुप्रपाणे सुष्ठु प्रकर्षेण पातुं शक्ये तटाकादौ शुद्धा अपः पिबन्ती-

+ रिशन्तीरिति भाष्यानुरोधेन पाठः।

१ क. 'तीर्बहूवपत्योपे'।

विमलं जलं पिबन्त्यो वर्तन्तामिति शेषः । हे गावः स्तेनश्चोरो वो मेशत युष्मा-नपहर्तुमीश्वरो मा भूत् । अघशंसोऽघं पापं शंसति मारय ताडयेत्यादिभिर्भ-र्त्सनं करोतीत्यघशंसः सोऽपि वो मेशत । तथा रुद्रस्य क्रूरस्य देवस्य हेतिरा-युधं वः परिवृञ्ज्याद्युष्माकं परितो वर्जनं करोतु ।

अथाष्टमीमाह—

उपेदमुपपर्चनम् । आसु गोषूपपृ-
च्यताम् । उपर्षभस्य रेतसि ।
उपेन्द्र तव वीर्ये (१२), इति ।

चरामि कनीयोऽन्यान्नींपता पदानि यज्वसु हवामहे विष्ठा लोकाः सुवरिमर्वा-पिबन्तीः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमा-ध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

इदं च वक्ष्यमाणं सर्वमुपपृच्यतां समीपे युज्यताम् । किं किमिति तदुच्यते—उपपर्चनं समीपे संपर्कयोग्यतृणादिकमासु गोषूपपृच्यतां समीपे युज्यताम् । ऋषभस्य रेतस्युपपृच्यतां गर्भ इति शेषः । हे इन्द्र तव वीर्ये त्वदीये रक्षण-सामर्थ्य उपपृच्यतां गाव इति शेषः ।

अत्र विनियोगसंग्रहः—

अहमष्टावन्यशाखाकथिताचार्थवेहति ।
देवीं वाचे वेहति स्याच्छ्रद्धे श्रद्धार्थवेहति ॥
ब्रह्म ब्रह्मार्थ ऋषभ आ गाव उपहोमकाः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये द्वितीयकाण्डेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

१ क. पाप्मानं ।

अथ नवमोऽनुवाकः ।

अष्टमेऽन्नार्थपश्वादीनां सूक्तान्यभिहितानि । नवमे शुक्लकृष्णपश्वादीनां सूक्तान्युच्यन्ते । यदुक्तं सूत्रकारेण—"सूर्याचन्द्रमोभ्यां यमौ श्वेतं च कृष्णं चैकयूपे" इति । यमावेकस्मिन्गर्भे सहोत्पन्नौ । तयोः पश्वोः सूक्ते वपयोः पुरोनुवाक्यामाह—

ता सूर्याचन्द्रमसा विश्वभृत्तमा महत् । तेजो वसुमद्राजतो दिवि । सामात्माना चरतः सामचारिणा । ययोर्व्रतं न मसे जातु देवयोः, इति ।

ययोः सूर्याचन्द्रमसोर्देवयोः संबन्धि व्रतं कर्म जातु कदाचिदपि न मसे कश्चिदपि मातुं न शक्तः । एतदीयं कर्मैतावता फलेन युक्तमिति न कोऽपि परिच्छेत्तुं शक्नोति । तौ तथाविधौ सूर्याचन्द्रमसौ दिवि राजतो द्युलोके दीप्येते । कीदृशौ विश्वभृत्तमाऽतिशयेन विश्वस्य भर्तारौ पोषकावत एव महन्महान्तौ तेजस्तेजस्विनौ वसुमद्धनवन्तौ । सामशब्देन सामभेदाद्युपायेषु चतुर्षु प्रथमोपायोऽभिधीयते । तदात्मकौ प्रजापालने सामोपायप्रधानावित्यर्थः । अत एव सामचारिणौ साम्नोपायेन सर्वजगदनुग्राहकप्रकाशरूपेण चरणशीलौ चरतः परिभ्रमतः ।

अथ वपयोर्याज्यामाह—

उभावन्तौ परियात अर्म्या । दिवो न रश्मी॑स्तनुतो व्यर्णवे । उभा भुवन्ती भुवना कविक्रतू । सूर्या न चन्द्रा चरतो हतामती, इति ।

उभावन्तौ पृथिव्याः पूर्वः पश्चिमश्चेत्येतावसानभागावर्म्या गत्या परियातः परिक्रमणं कुरुतो दिवो न दिवीवार्णवे समुद्रसमानेऽन्तरिक्षे रश्मीन्वितनुतः प्रसारयतो भुवना भुवन्ती लोकान्भावयन्तावुत्पादयन्तौ कविक्रतू कविर्मेधावी क्रतुः कर्ता कवी च तौ क्रतू च कविक्रतू हतामती हता विनाशिता प्राणिनाममति-

रन्धकारनिमित्तमज्ञानं याभ्यां तौ हतामती सूर्या न चन्द्रा सूर्यश्चन्द्रश्चेत्येतावुभौ चरतः संचारं कुरुतः ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

पती द्युमद्विश्वविदा उभा दिवः । सूर्या उभा चन्द्रमसा विचक्षणा ( १ ) । विश्ववारा वरिवोभा वरेण्या । ता नोऽवतं मतिमन्ता महिव्रता, इति ।

द्युमद्द्युमन्तौ दीप्तिमन्तावुभौ देवौ विश्वविदा सर्वज्ञौ दिवः पती द्युलोकस्य पालकौ वर्तेते । सूर्याचन्द्रमसा सूर्याचन्द्रमसेत्येतावुभौ विचक्षणौ कुशलौ । विश्ववारा विश्वेषां शत्रूणां निवारयितारौ वरिवा वरिवस्यमानौ सर्वैः परिचर्यमाणावुभौ देवौ वरेण्या वरणीयौ मतिमन्तावत्यन्तबुद्धियुक्तौ महिव्रता महता व्रतेन कर्मणा युक्तौ । ईदृशौ तावुभौ नोऽस्मानवतं रक्षतम् ।

अथ पुरोडाशस्य याज्यामाह—

विश्ववपरी प्रतरणा तरन्ता । सुवर्विदा दृशये भूरिरश्मी । सूर्या हि चन्द्रा वसु त्वेष दर्शता । मनस्विनोभाऽनुचरतो नु सं दिवम्, इति ।

विश्ववपरी विश्वस्मिञ्जगति रश्मीनावप्तारौ विस्तारयितारौ प्रतरणाऽऽपदां प्रकर्षेण तारयितारौ तरन्ताऽऽकाशसमुद्रं तरन्तौ सुवर्विदा स्वर्गस्य लम्भयितारौ दृशये सर्वलोकस्य दर्शनाय भूरिरश्मी प्रभूतदीप्ती सूर्या हि चन्द्रा सूर्यश्चन्द्रश्चेत्येवं प्रसिद्धौ वसु वासयितारौ त्वेष दर्शता दीप्त्या दर्शनीयौ मनस्विना दृढेन मनसा युक्तावुभा देवावुभौ नु क्षिप्रं दिवं द्युलोकमनुसंचरतः ।

अथ हविषः पुरोनुवाक्यामाह—

अस्य श्रवो नद्यः सप्त बिभ्रति । द्यावा क्षामा पृथिवी दर्शतं वपुः । अस्मे सूर्याचन्द्रमसाऽभिचक्षे । श्रद्धे कमिन्द्र चरतो विचर्तुरम् ( २ ), इति ।

---

१ क. °श्मीनां व° । २ क. °काशाख्यस° ।

हे इन्द्र त्वमस्मेऽस्मदर्थं सूर्याचन्द्रमसैतौ सूर्याचन्द्रमसावभिचक्षेऽभितः कथयसि। श्रद्धे श्रद्धार्थं कं सुखार्थं च विचर्तुरं विशेषेण त्वरा यथा भवति तथा चरत एतावुभौ संचरतः । अस्य तवेन्द्रस्य श्रवः श्रवणीयं दर्शतं दर्शनीयं च वपुः शरीरं सप्त नद्यो गङ्गायमुनाद्याः सप्तसंख्याकाः सरितो द्यावा क्षमा पृथिवी क्षामशब्दोऽन्तरिक्षमभिधत्ते, त्रयो लोकाश्च बिभ्रति धारयन्ति । अयमर्थः । यदे-तद्वृष्टिनिमित्तं जलं तदेतदिन्द्रेणोत्पादितत्वादिन्द्रस्य शरीरं तच्च सर्वेषां प्राणिनां प्रियत्वाच्छ्रवणीयं दर्शनीयं च तदिदं जलरूपं शरीरं सप्तनद्युपलक्षिताः सर्वा नद्यः समुद्रास्त्रयो लोकाश्च धारयन्ति । न हि जलमन्तरेण लोकत्रयव्यवहारः सिध्यतीति ।

अथ हविषो याज्यामाह—

पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाऽ-भिचष्टे । ऋतूनन्यो विदधज्जायते पुनः, इति ।

एतौ सूर्याचन्द्रमसौ मायया परमेश्वरस्य शक्त्याऽनुगृहीतौ पूर्वापरं भूमेः प्राक्प-श्चिमभागौ प्रतिचरतः परिभ्रमणं कुरुतः । शिशू बालकाविव क्रीडन्तावध्वरं कस्यापि हिंसा यथा न भवति तथा परियातोऽथवाऽध्वरमस्माभिरनुष्ठीयमानं यज्ञं प्राप्नुतः । उभयोर्मध्येऽन्य एक आदित्यो विश्वानि भुवनान्यभिचष्टे सर्वतः प्रकाशयति । अन्यश्चन्द्रः प्रतिपदादितिथिशुक्लकृष्णपक्षचैत्रादिमासद्वारा, ऋतू-न्विदधत्पुनः पुनर्जायत उदयं गच्छतीत्यर्थः ।

यदुक्तं सूत्रकारेण "अद्भ्यो वेहतम्" इति, तस्य पशोः सूक्ते पञ्चानामृचां प्रतीकानि दर्शयति—

हिरण्यवर्णाः शुचयः पावका यासाꣳ राजा । यासां देवाः शिवेन मा चक्षुषा पश्यत । आपो भद्रा आदित्पश्यामि, इति ।

"हिरण्यवर्णाः शुचयः पावकाः" इति वपायाः पुरोनुवाक्या । 'यासां राजा वरुणः' इति याज्या । 'यासां देवा दिवि कृण्वन्ति भक्षम्' इति पुरोडाशस्य पुरोनुवाक्या। 'शिवेन मा चक्षुषा पश्यत' इति याज्या । 'आपो भद्रा घृतमि-

दाप आसुः' इति हविषः पुरोनुवाक्या। 'आदित्पश्चाम्युत वा शृणोमि' इति याज्या। एतत्सर्वं 'हिरण्यवर्णाः शुचयः पावकाः' इत्युनुवाके व्याख्यातम्।

यदुक्तं सूत्रकारेण—"तत्र सलिलमुपजुहुयात्" इति। तत्र पूर्वोक्ते कर्मणि नासदासीयसूक्तगतैर्मन्त्रैर्जलद्रवेणोपहोमाः कर्तव्या इत्यर्थः। तस्मिन्सूक्ते प्रथमामृचमाह—

नासदासीन्नो सदासीत्तदानीम्। नासी-
द्रजो नो व्योमापरो यत्। किमाव-
रीवः कुह कस्य शर्मन् (३)।
अम्भः किमासीद्गहनं गभीरम्, इति।

यदा पूर्वसृष्टिः प्रलीनोत्तरसृष्टिश्च नोत्पन्ना तदानीं सदसती द्वे अपि नाभूताम्। नामरूपविशिष्टत्वेन स्पष्टं प्रतीयमानं जगत्सच्छब्देनोच्यते। नरविषाणादिसमानं शून्यमसदित्युच्यते। तदुभयं नाऽऽसीत्। किंतु काचिदव्यक्तावस्थाऽऽसीत्। सा च विस्पष्टत्वाभावान्न सती जगदुत्पादकत्वेन सद्भावान्नाप्यसती। नो सदासीदिति यत्संग्रहेणोक्तं तदेव प्रपञ्च्यते—नाऽऽसीद्रजो रजःशब्देनं सत्त्वरजस्तमोगुणत्रयमुपलक्ष्यते तत्त्रयं नाऽऽसीत्। नो व्योम, आकाशवाचिना व्योमशब्देन भूतपञ्चकमुपलक्ष्यते तदपि नाऽऽसीत्। यथोक्तगुणत्रयपञ्चभूतापेक्षयाऽपरः पदार्थोऽन्यो गिरिनदीसमुद्रादिको यद्यो दृश्यते सोऽपि नाऽऽसीत्। यथा भूतानि नाऽऽसंस्तद्वद्भौतिकमपि नाऽऽसीदित्यर्थः। अनेन भूतभौतिकगुणत्रयनिषेधेन ब्रह्माण्डस्य निषेधः संपन्नः। अण्डाद्बहिर्महत्तत्त्वाद्यावरणानि पौराणिका वदन्ति तदेतदावरणजातमाक्षेपवाचिना किंशब्दत्रयेण निषिध्यते। आवरणस्य दृष्टिविषयभूतं किंचिदाध्रियमाणमपेक्षितम्। तत्राण्डाभावात्किमावरीवः किं नाम वस्तु तैरावरणैराव्रियेत। अतः सावरणकस्यासंभवादावरणमपि न संभवतीत्यर्थः। कुहेति देशाक्षेपः। निमित्ताक्षेपः कस्य शर्मन्निति। कुत्र देशे कस्य भोक्तुः सुखनिमित्तमिदमावरणं स्यात्, न त्वस्ति तदा कश्चिद्देशो नापि सुखस्य भोक्ता कश्चिद्विद्यते। अत्र कश्चिन्मन्दोऽवान्तरप्रलयविषयाम्

१ क. ख. °व। तस्या°ज्ञाणदर्शोंदं°।

"आपो वा इदमग्रे सलिलमासीत्" इति श्रुतिं श्रुत्वा महाप्रलयेऽपि तथाविधं जलमस्तीति भ्राम्यति तद्भ्रमव्युदासाय जलं निषिध्यते। गहनं प्रवेष्टुमशक्यं गभीरमगाधत्वेनावस्थातुमप्यशक्यं यदम्भस्तत्किमासीत्तदपि नाऽऽसीदित्यर्थः।

अथ द्वितीयामृचमाह—

न मृत्युरमृतं तर्हि न। रात्रिया अह्न आसी-
त्प्रकेतः। आनीदवातꣳ स्वधया तदेकम्।
तस्माद्धान्यं न +परः किंच नाऽऽस, इति।

तर्हि तस्मिन्महाप्रलयकाले प्राणिनां मृत्युर्नाऽऽसीत्तेषामेवाभावात्। अत एवामृतं जीवनमपि नाऽऽसीत्। रात्रियाः प्रकेतश्चिह्नं चन्द्रनक्षत्रादि, अह्नः प्रकेतः सूर्यस्त-दुभयमपि नाऽऽसीत्। किंतु तत्सर्वोपनिषत्प्रसिद्धमेकं ब्रह्म वस्तु स्वधया स्वस्मि-न्नाश्रितया सर्वजगत्कारणरूपया मायया सहितमानीच्चेष्टितवत्। नात्र चलनं चेष्टा किंतु सद्भावमात्रमित्यभिप्रेत्यावातमिति विशेष्यते। वायुरहितं निश्चलमि-त्यर्थः। तस्मादेकस्माद्ब्रह्मणोऽन्यत्किंच किमपि परमुत्कृष्टं नाऽऽस नैवाऽऽसीत्। जगतो निषिद्धत्वान्निकृष्टं पूर्वमेव निराकृतम्। तस्मादुत्कृष्टं निकृष्टं च किमपि ब्रह्मव्यतिरिक्तं नाऽऽसीत्।

अथ तृतीयामाह—

तम आसीत्तमसा गूढमग्रे प्रकेतम्। सलि-
लꣳ सर्वमा इदम्। तुच्छेनाभ्वपिहितं यदा-
सीत्। तमसस्तन्महिना जायतैकम्, इति।

तमःशब्देनाविद्यामायाशक्त्यादिशब्दवाच्यं जगद्विकारोपादानं मूलाज्ञानमुच्यते। यथा तमः पदार्थानावृणोत्येवमिदमपि ब्रह्मतत्त्वमावृणोतीति तमःशब्देन व्यवहारः। तादृशं जगद्विकारनिष्पादनक्षमं ब्रह्मण्याश्रितं किंचित्तम आसीत्। तेन तमसा सर्वं जगद्गूढं यथा मृत्पिण्डे घटो गूढो यथा वा बीजे वृक्षो गूढस्तद्वत्। अत एव प्रकेतं प्रकर्षेण ज्ञातुमशक्यम्। तथा च मनुना स्मर्यते—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ इति।

+परमिति पाठो भाष्यानुरोधेन।

तत्र दृष्टान्तः—सलिलमिति यथा वर्षे पतिता वर्षोपलाः सलिलमात्रत्वेनावशिष्यन्ते तथा सर्वं जगदिदं तम आसीत्तमोमात्ररूपेणावशिष्टमित्यर्थः । अत्र हि काणादादयोऽसत्कार्यवादिनः कारणे पूर्वमविद्यमानमेव कार्यमुत्पद्यत इत्याहुः । सत्कार्यवादिनस्तु सांख्यादयः पूर्वं विद्यमानमेव कार्यमव्यक्तं सत्कारणव्यापारेण व्यक्तं भवतीत्याचक्षते । तत्र सत्कार्यवादिनां मतमेव तमसा गूढमिति श्रुत्याऽङ्गीकृतम् । आ समन्ताद्भवत्युत्पद्यत इत्याभूज्जगत्तदेतत्तुच्छेनापिहितम् । तत्त्वज्ञानमात्रेण निवर्त्यत्वात्तत्कारणं मूलाज्ञानं तुच्छं तेनापिहितं प्रलयकाल आच्छादितम् । तादृशं यज्जगदासीत्तज्जगदव्यक्तं सत्पूर्वोक्तादज्ञानरूपात्तमसः सकाशान्महिना महत्त्वेनाभिव्यक्तजगद्रूपेणाजायतोत्पन्नम् । तदिमज्ञानदृष्ट्या जगदाकारेण भासमानमपि परमार्थत एकं ब्रह्मैव ।

अथ चतुर्थीमाह—

कामस्तदग्रे समवर्तताधि (४) ।
मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति +निरविदन् ।
हृदि प्रतीष्या कवयो मनीषा, इति ।

परब्रह्मसंबन्धिनो मनसः प्रथमं रेत आद्यं कार्यं यदासीत्तत्कार्यमग्रे सृष्ट्यादौ कामो भूत्वाऽधिसमवर्तताऽऽधिक्येनाऽऽविरभूत् । अयमर्थः—यदेतदेकमेवाद्वितीयं ' सत्यं ज्ञानमनन्तं ब्रह्म ' इत्येवंरूपं वस्तु सृष्टेः पूर्वं तमसाऽऽवृमासीत्तस्य तमोविशिष्टस्य ब्रह्मणः सिसृक्षारूपं यन्मन आदावुत्पन्नं तस्य मनसः काम एव प्रथमकार्यभूतः पदार्थः । स च काम उपनिषदि स्पष्टमाम्नातः— ' सोऽकामयत बहु स्यां प्रजायेय " इति । एकोऽद्वितीयरूपोऽहमेव बहुविधो भवेयम् । तत्रायमुपायः पूर्वमवस्थितमद्वितयिरूपमनुपमृद्य प्रकर्षेण मायाकल्पितजगद्रूपेणोत्पद्येयेति तस्य वाक्यस्यार्थः । स च कामः सतो बन्धुरिदानीं सत्त्वेन प्रतीयमानस्य भूतभौतिकरूपस्य जगतोऽसच्छब्दाभिधेये तमस्यव्यक्ते बन्धनहेतुः । कामो ह्यज्ञानं सर्वं व्यवहारं बध्नाति । यथा निद्राणे पुरुषे समुत्पन्ना चित्तवृत्तिर्नानाविधं स्वमव्यवहारं बध्नाति । यथा वा जागरणेऽप्यत्यन्त-

+ निरविन्दन्निति पाठो भाष्यानुरोधेन ।

१ क. ख. वर्षोपलो विलीनः स° । २ क. ख. °द्यते त° ३ क. ख. °व्यज्ञपति ।

मलभ्ये विषये समुत्पन्ना तृष्णा सुखदुःखपर्यन्तं मनोराज्यरूपं व्यवहारं बध्नाति, एवमयं परमेश्वरस्य कामो देवतीर्यङ्मनुष्यादिसर्वव्यवहारं बध्नाति । कवयो विद्वांसो वेदान्तपारं गता हृदि हृदयकमले मनीषा स्वबुद्ध्या प्रतीष्य विचार्यासंत्यव्यक्ते तमसि कामं सत उत्पत्स्यमानस्य जगतो बन्धुं बन्धनहेतुं निरविन्दन्निश्चितवन्तः । कामस्य सर्वव्यवहारहेतुत्वं वाजसनेयिनः समामनन्ति— "अथो खल्वाहुः काममय एवायं पुरुषः" इति । व्यासोऽपि स्मरति—

"कामबन्धनमेवेदं नान्यदस्तीह बन्धनम्" इति ।

अस्मदनुभवोऽपि तथा दृश्यते । सर्वो हि पुरुषः प्रथमं किंचित्कामयित्वा तदर्थं प्रयतमानः सुखं दुःखं वा लभते । तस्माच्छ्रुतिस्मृत्यनुभवसिद्धत्वात्काम एव सर्वव्यवहारहेतुरिति विदुषां निश्चयः ।

अथ पञ्चमीमाह—

तिरश्चीनो विततो रश्मिरेषाम् ।
अधस्विदासी३दुपरि स्विदासी३त् ।
रेतोधा आसन्महिमान आसन् ।
स्वधा अवस्तात्प्रयतिः परस्तात्, इति ।

रश्मिः सूर्यरश्मिसमानः कश्चित्स्वयंप्रकाशश्चैतन्यपदार्थः । एषां भूतभौतिकरूपाणां जगद्वस्तूनां मध्ये तिरश्चीनस्तिर्यग्वर्तमानो विततो व्याप्तः स चैतन्यरूपः परमात्माऽमीषां पदार्थानामधोभागेऽवास्थितः । किंवोपरिभागेऽवस्थितः । स्वि-च्छब्दौ विकल्पितपक्षद्वयसूचनार्थौ । प्लुतिर्विचारद्वयद्योतनार्था । अयमभिप्रायः । सोऽयं प्रकाशः कश्चिच्चैतन्यपदार्थः सर्वेषां वस्तूनां मध्ये पर्यालोच्यमानो दीर्घतन्तुवत्तिर्यग्भूतो व्याप्यावभासते । अधः पर्यालोच्यमानस्तत्राप्यवभासते । उपरि पर्यालोच्यमानस्तत्राप्यवभासते । तस्मादध ऊर्ध्वे मध्ये च भासमानत्वादेकत्रैवावस्थित इति वक्तुमशक्यः । यथा घटस्योपादानभूतो मृत्पिण्डो घटस्याधऊर्ध्वमध्यभागेषु सर्वेष्वनुवर्तते. एवं तत्तत्पदार्थोपादानानि तत्तत्कार्येषु व्याप्यैव वर्तन्ते । एवमयं परमात्माऽपि स्वकार्येषु व्याप्य वर्तमानः सन्नध आसीदित्येव वोपर्यासीदित्येव वा निश्चेतुमशक्य इति । सर्व एते पदार्था भूतभौतिकरूपाः पूर्वोक्तस्य विततरश्मिरूपस्य स्वप्रकाशचैतन्यस्य रेतोधाः

१ क स्वयं । २ क. ख. मृत्पदार्थौ ।

साररूपधारिण आसन् । तत्र चिदेकरसस्य हि वस्तुनः सद्रूपं सारं तच्च सर्वे पदार्था धारयन्ति, अस्तीत्येवं स्वरूपेणैव सर्वेषामवभासमानत्वात् । ते च सद्रूपधारिणः सर्वे महिमानो गिरिनद्यादिरूपेण महान्त आसन् । एवं स्वधाशब्दवाच्यमायाविद्यादिशब्देनाभिधीयमाना पारमेश्वरी शक्तिरवस्तादधमं कारणम् । प्रयतिः । सा शक्तिः प्रयतते यस्मिन्परमात्मनि सोऽयं शक्तिप्रयत्नाधारः परमात्मा प्रयतिः । स च परस्तात्परममुत्तमं कारणम् । तावेतौ शक्तिपरमात्मानावेव जगत्कारणभूतौ प्रकृतिपुरुषाविति शास्त्रेषु व्यपदिश्येते ।

अथ षष्ठीमाह—

को अ॒द्धा वे॑द॒ क इ॒ह प्र वो॑चत् । कुत॒ आजा॑ता॒
कुत॑ इ॒यं विसृ॑ष्टिः । अ॒र्वाग्दे॒वा अ॒स्य वि॒सर्ज॑नाय
( ५ ) । अथा॒ को वे॑द॒ यत॑ आ ब॒भूव॑, इति ।

अत्र केचिदागममुपेक्ष्य स्वस्वबुद्धिबलादन्यथाऽन्यथोत्प्रेक्षन्ते । तथा हि—परमाणवो मूलकारणमिति काणादगौतमादयो मन्यन्ते । स्वतन्त्रमचेतनं प्रधानं जगतो मूलकारणमिति कपिलप्रभृतयः। शून्यादितो जगदुत्पत्तिरिति माध्यमिकाः। जगतः कारणमेव नास्ति स्वभावत एवावतिष्ठत इति लोकायतिकाः । ते सर्वेऽपि भ्रान्ता एव । कोऽद्धा वेद जगत्कारणं को नाम पुरुषः साक्षादवगच्छति । अनवगत्य च क इह प्रवोचत्स्वयमदृष्ट्वा को नाम जगत्कारणमीदृगिति वक्तुं शक्नोति । कोऽयमत्र वक्तव्यांश इति चेदुच्यते—इयं विविधा सृष्टिः कुत आजाता कस्मादुपादानकारणात्सर्वत उत्पन्ना पुनरपि कुतो निमित्तादुत्पन्नेति तदिदमुपादानं निमित्तं च वक्तव्यम् । तच्च वक्तुमशक्यम् । कुतोऽशक्तिरिति चेदुच्यते—किं देवा एतद्ब्रूयुः, उतान्यः कश्चिन्मनुष्यः । न तावद्देवा वक्तुं शक्तास्ते ह्यस्य जगतो विसर्जनाय विविधसृष्टेरर्वागेव विद्यन्ते । न तु सृष्टेः पूर्वं ते सन्ति । यदा देवानामपीदृशी गतिस्तदानीं यतो जगदाबभूव तत्कारणं वक्तुमन्यः को वा वेद । देवाश्च मनुष्याश्च सृष्टेः प्रागवस्थां न तावत्प्रत्यक्षेण पश्यन्ति तदानीं स्वय(स्वेषा)मेवाभावात् । नाप्यनुमातुं शक्तास्तद्योग्ययोर्हेतुदृष्टान्तयोरभावात् । तस्मादतिगम्भीरमिदं परमार्थतत्त्वं वेदैकसमधिगम्यमित्यभिप्रायः ।

---

१ क. °दृशामिति ।

अथ सप्तमीमाह—

इयं विसृष्टिर्यत आबभूव । यदि वा दधे
यदि वा न । यो अस्याध्यक्षः परमे
व्योमन् । सो अङ्ग वेद यदि वा न वेद, इति ।

इयं दृश्यमाना भूतभौतिकरूपा विविधा सृष्टिर्यत उपादानकारणादाबभूव सर्वत उत्पन्ना तदुपादानकारणं यदि वा किंचित्स्वरूपं धृत्वाऽवतिष्ठते यदि वा तस्य स्वरूपमेव नास्ति तमिमं निर्णयं यो परमेश्वरोऽस्य जगतोऽध्यक्षः स्वामी सो अङ्ग वेद स एव वेद यदि वा सोऽपि न वेद । ईशित्रीशितव्यादिलौकिकव्यवहारदृष्ट्या सो अङ्ग वेदेत्युक्तम् । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिसर्वव्यवहारातीतपरमार्थदृष्ट्या यदि वा न वेदेत्युक्तम् । अतो मनुष्यादिषु तद्वेदनशङ्काऽपि दूरापेता ।

अथाष्टमीमाह—

किꣳस्विद्वनं क उ स वृक्ष आसीत् ।
यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो
मनसा पृच्छतेदु तत् । यदध्यतिष्ठद्भुव-
नानि धारयन्, इति ।

लोके हि गृहं चिकीर्षुः पुमान्वनं गत्वा तत्र कंचिद्वृक्षं छित्त्वा तदीयैः काष्ठैर्गृहं निर्मिमीते । तद्दृष्टान्तेनात्रापि यतो यस्माद्वनजन्याद्वृक्षाद्द्यावापृथिवी द्युलोकभूलोकौ निष्टतक्षुस्तक्षणेन निर्मितारो निर्मितवन्तः । तादृशं वनं किंस्विद्भवेत् । कश्च तादृशः स वृक्ष आसीत् । हे मनीषिणो बुद्धिमन्तो मनसा स्वकीयेन विचार्य तदिदमर्थद्वयमाचार्यसमीपे पृच्छत । किंच यत्कारणभूतं वस्तु भुवनानि सर्वाँल्लोकान्स्वात्मनि धारयन्नध्यतिष्ठन्नियमनमकरोत्तदिदु तदपि वस्तु पृच्छत ।

अथ नवमीमाह—

ब्रह्म वनं ब्रह्म स वृक्ष आसीत् (६) ।

यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्, इति।

यदुक्तं मनीषिणां प्रश्नत्रयं तस्याऽऽचार्य उत्तरं ब्रूते। यस्माद्वनजन्याद्वृक्षाद्द्यावापृथिव्यौ निर्मिते तद्वनस्थानीयं तद्वृक्षस्थानीयं ब्रह्मैव। तस्य सर्वशक्तित्वात्। यस्योत्पाद्यस्य या सामग्र्यपेक्षिता सा सर्वा तस्मिन्विद्यते। तदेव ब्रह्म सर्वाणि भुवनानि स्वस्मिन्धारयति नियमयति च। हे मनीषिण आचार्योऽहं मनसा निश्चित्य वो युष्मभ्यं विब्रवीमि विविधमुत्तरं ब्रवीमि।

यदुक्तं सूत्रकारेण—"भगाय वाशिताम्" इति। गर्भधारणयोग्या वाशिता। तस्य पशोः सूक्तस्य वपायाः पुरोनुवाक्यामाह—

प्रातरग्निं प्रातरिन्द्र्ँ हवामहे। प्रातर्मित्रावरुणा प्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिम्। प्रातः सोममुत रुद्र्ँ हुवेम, इति।

प्रातःकालेऽग्न्यादीन्देवानाह्वयामः। प्रतिदेवं वाक्यभेदेन प्राधान्यद्योतनाय प्रातःशब्दावृत्तिः। यत्राऽऽवृत्तिर्नास्ति तत्राप्यावृत्तिरुन्नेया।

अथ वपाया याज्यामाह—

प्रातर्जितं भगमुग्र्ँ हुवेम। वयं पुत्रमदितेर्यो विधर्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चित् (७)। राजाचिद्यं भगं भक्षीत्याह, इति।

प्रातःकाले जितं जययुक्तमुग्रं वैरिषु तीव्रं भगं देवं हुवेमाऽऽह्वयामः। कीदृशमदितेः पुत्रमादित्यं य आदित्यो विशेषेण जगतो धारयिता तमिति पूर्वत्रान्वयः। आध्रश्चिद्दरिद्रोऽपि यं देवमभिमतप्रदं मन्यमानो भगं देवं भक्षीत्याह भजनं करोमीति ब्रूते तथा तुरश्चित्कार्येषु त्वरमाणोऽपि यं भगं कार्यसाधकं मन्यमानो भजेयेति ब्रूते तथा राजाचिद्राजाऽपि यं भगं राज्यसाधकं मन्यमानो भजेयेति ब्रूते तं भगमाह्वयाम इति पूर्वत्रान्वयः।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

भग प्रणेतर्भग सत्यराधः । भगेमां धियमु-
दव ददन्नः । भग प्र णो जनय गोभि-
रश्वैः । भग प्रनृभिर्नृवन्तः स्याम, इति ।

हे प्रणेतः प्रकर्षेण नेतुं कुशल हे भग देवास्मान्कर्मणि प्रणयेति शेषः । हे सत्यराधः सत्यधन भगदेवास्मभ्यं धनं देहीति शेषः । हे भग नोऽस्मभ्यमिमां धियं ददत्कर्मानुष्ठानबुद्धिं प्रयच्छन्नुद्वोत्कर्षेण रक्ष । हे भगदेव नोऽस्मान्गोभि-रश्वैः प्रजनय तद्युक्तान्कुर्वित्यर्थः । हे भग त्वत्प्रसादाद्वयं नृभिः पुत्रपौत्रादिभिः पुरुषैर्नृवन्तः पुरुषवन्तः स्याम ।

अथ पुरोडाशस्य याज्यामाह—

उतेदानीं भगवन्तः स्याम । उत प्रपित्व उत
मध्ये अह्नाम् । उतोदिता मघवन्सू-
र्यस्य । वयं देवाना॰ सुमतौ स्याम, इति ।

उतेदानीमस्मिन्कर्मकालेऽपि भगवन्तोऽनेन भगेन देवेन युक्ताः स्याम । उत प्रपित्वे सायंकालेऽपि, उताह्नां मध्ये मध्याह्नकालेऽपि, उतोदितोदयकालेऽपि भगेन देवेन युक्ताः स्याम । हे मघवन्देव वयं सूर्यस्य तव सुमतौ स्यामानुग्रह-बुद्धौ तिष्ठेम ।

अथ हविषः पुरोनुवाक्यामाह—

भग एव भगवाँ अस्तु देवाः ( ८ ) । तेन वयं
भगवन्तः स्याम । तं त्वा भग सर्व इज्जो-
हवीमि । स नो भग पुर एता भवेह, इति ।

हे देवा भगाख्यो देव एव भगवानस्तु सौभाग्यवान्भवतु तेन देवेन भग-वन्तः सौभाग्यवन्तः स्याम । हे भगाख्यदेव तं तादृशं त्वां सर्व इत्सर्व एव लोको जोहवीम्याह्वयतीत्यर्थः । हे भगदेव स त्वमिहास्मिन्कर्मणि नोऽस्माकं पुर एता पुरतो गन्ता भव ।

---

१ क ख. 'वस्यनन्दे' ।

अथ हविषो याज्यामाह-

समध्वरायोषसो नमन्त। दधिक्रावेव शुचये
पदाय । अर्वाचीनं वसुविदं भगं नः ।
रथमिवाश्वा वाजिन आवहन्तु, इति ।

अस्य भगदेवस्य प्रसादादुषस उषःकालदेवता अध्वराय यज्ञनिष्पत्त्यर्थं संनमन्तः समनमन्त । तत्र दृष्टान्तो दधिक्रावेत्यश्वस्य नाम । अश्वो यथाऽऽधानकाले शुचयेऽग्निनिष्पत्तये पदायाऽऽहवनीयायतने संभाराणामुत्तरतः पादेनाऽऽक्रमणाय संप्राप्नोति तथैवोषःकालदेवता अपि प्राप्नुवन्तु । अन्योऽपि दृष्टान्त उच्यते-वाजिनो वेगवन्तोऽश्वा यथा रथमावहन्ति, तथा नोऽर्वाचीनमस्माकमभिमुखं वसुविदं धनस्य लब्धारं भगदेवमावहन्त्विह कर्मण्यानयन्तु ।

अथ हविष एव विकल्पितां याज्यामाह-

अश्वावतीर्गोमतीर्न उषासः । वीरवतीः सदमु-
च्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनाः । यूयं
पात स्वस्तिभिः सदा नः ( ९ ), इति ।

विचक्षणा विचर्तुरः शर्मन्वीधंविसर्जनाय ब्रह्म वनं ब्रह्म स वृक्ष आसीत्तुर-
श्चिद्देवाः प्रपीना एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

अश्वावतीर्बहुभिरश्वैर्युक्ता गोमतीर्बहुभिर्गोभिर्युक्ता वीरवतीः पुत्रपौत्रादिभिर्वीरैर्युक्ता भद्राः कल्याणरूपा घृतं दुहाना घृतक्षीरादिद्रव्याणि संपादयन्त्यो विश्वतः प्रपीनाः सर्वमपि जगत्प्रकर्षेणाऽऽप्याययन्त्य उषासो यथोक्तगुणविशिष्टा उषःकालदेवता भगस्य प्रसादात्सदं सदनं कर्मानुष्ठानस्थानं प्रत्युच्छन्तु प्रभातं कुर्वन्तु । हे उषासो यूयं स्वस्तिभिः क्षेमरूपैः फलप्रदानैर्नोऽस्मान्पात रक्षत ।

अत्र विनियोगसंग्रहः—

ता सूर्येति पशुद्वंद्वे चन्द्रसूर्याख्यदेवते ॥ १ ॥
हिरण्याद्भ्यो वेहति स्यान्नासत्तत्रोपहोमकः ।
प्रातरग्निमिति प्रोक्तं पशौ स्यान्द्भगदेवके ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्येऽष्टमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

पीवोऽन्नान्ते शुक्रासः सोमो धेनुमिन्द्रस्तरस्वाञ्छुचिमा देवो यातु सूर्यो देवीमिहमस्मि ता सूर्याचन्द्रमसा नव ।

पीवोऽन्नामग्ने त्वं पारयानाधृष्यः शुचिं नु स्तोमं विश्रयमाणो दिवो रुक्मोऽन्नं प्राणं ता सूर्याचन्द्रमसा नवसप्ततिः ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणेऽष्टमः प्रपाठकः समाप्तः ॥ ८ ॥

## इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयः काण्डः समाप्तः ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्येऽष्टमः प्रपाठकः समाप्तः ॥८॥

इति श्रीमद्राजाधिराजराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये समाप्तोऽयं द्वितीयः काण्डः ॥ २ ॥

( मूलक्रमेण—अष्ट० २ अध्याय० ८ ( १६ ) अनु० ९ ( १५६ ) ।

( भाष्यक्रमेण—कां० २ प्रपा० ८ ( १६ ) अनु० ९ ( १५६ ) ।

---

१०८

# तृतीयं काण्डम् ।

## तत्र प्रथमप्रपाठकस्याऽऽरम्भः ।

### प्रथमं ऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेभ्द्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
अग्निहोत्रादिकं कर्म द्वितीये काण्ड ईरितम् ।
नक्षत्रेष्ट्यादिकं कर्म तृतीये त्वथ वक्ष्यते ॥ २ ॥
आद्ये प्रपाठके पूर्वभागे याज्यानुवाक्यकाः ।
क्रमेणेष्टिषु वर्ण्यन्त उत्तरस्मिंस्तदिष्टयः ॥ ३ ॥

तत्र प्रथमानुवाके देवनक्षत्राणां याज्यानुवाक्यास्तद्विभागश्च ब्राह्मणे (का० १ प्रपा० ५ अनु० २) सामाम्नातः "कृत्तिकाः प्रथमम् । विशाखे उत्तमम् । तानि देवनक्षत्राणि । अनूराधाः प्रथमम् । अपभरणीरुत्तमम् । तानि यमनक्षत्राणि" इति । तत्र देवनक्षत्रेषु प्रथमस्य पुरोनुवाक्यामाह—

हरिः ॐ ।

अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् ।
इदमासां विचक्षणम् । हविरासं जुहोतन, इति ।

योऽयं कृत्तिकानक्षत्रस्य देवतारूपोऽग्निः स नोऽस्मान्पातु । याश्च सप्त कृत्तिका अम्बादुलेत्येवमाद्यास्तद्रूपं यन्नक्षत्रं तदप्यस्मान्पातु । कीदृशं नक्षत्रं देवं द्योतमानमिन्द्रियमिन्द्रियप्रदम् , आसां कृत्तिकानां तदुपलक्षितस्याग्नेश्चाऽऽसम् , आस्ये मुखे विचक्षणं विविधप्रकाशसाधनमिदं हविर्जुहोतन हे ऋत्विग्यजमाना जुहुत ।

तत्रैव याज्यामाह—

यस्य भान्ति रश्मयो यस्य केतवः । यस्येमा

१ क. त्वत्र ।

विश्वा भुवनानि सर्वा । स कृत्तिकाभिरभिसंव-
सानः । अग्निर्नो देवः सुविते दधातु, इति ।

यस्याग्ने रश्मयो ज्वाला भान्ति दीप्यन्ते यस्य चाग्नेः केतवो ध्वजस्थानीया धूमा भान्ति । सर्वा देवतिर्यगादिसर्वप्रकारोपेतानि विश्वा निरवशेषाणीमा, इमानि भुवनानि यस्याग्नेरधीनानि सोऽग्निर्देवः कृत्तिकाभिः सप्तभिरभिसंवसानोऽभित आत्मानमाच्छादयन्नोऽस्मान्सुविते सुष्ठुप्राप्ते कर्मफले दधातु स्थापयतु ।

द्वितीयस्य नक्षत्रदेवस्य पुरोनुवाक्यामाह—

प्रजापते रोहिणी वेतु पत्नी । विश्वरूपा बृहती
चित्रभानुः ( १ ) । सा नो यज्ञस्य सुविते
दधातु । यथा जीवेम शरदः सवीराः, इति ।

प्रजापतेः पत्नी पालयित्री रोहिणी वेत्विदं हविर्भुङ्क्ताम् । कीदृशी रोहिणी विश्वरूपा स्वेनोत्पाद्यैर्विश्वैर्बहुभी रूपैरुपेता बृहती परिवृढा चित्रभानुर्विचित्रदीप्तिः सा रोहिणी नोऽस्मानस्य यज्ञस्य संबन्धिनि सुविते सुष्ठुप्राप्ते कर्मफले दधातु स्थापयतु । सुवीराः पुत्रपौत्रादिसहिता वयं शरदो बहून्संवत्सरान्यथा जीवेम तथा करोतु ।

अथ तत्रैव याज्यामाह—

रोहिणी देव्युदगात्पुरस्तात् । विश्वा रूपाणि
प्रतिमोदमाना । प्रजापतिꣳ हविषा वर्ध-
यन्ती । प्रिया देवानामुपयातु यज्ञम् , इति ।

सा रोहिणी देवी पुरस्तात्पूर्वस्यां दिश्युदगादुदयं प्राप्तवती । किं कुर्वती विश्वा रूपाणि रूपवतः सर्वान्भावान्प्रतिमोदमाना प्रत्येकं मोदयन्ती प्रजापतिं च हविषा वर्धयन्ती पोषयन्ती देवानां प्रिया प्रीणयित्री यज्ञमस्माकमुपयात्वागच्छतु ।

अथ तृतीयस्य नक्षत्रदेवस्य पुरोनुवाक्यामाह—

सोमो राजा मृगशीर्षेण आगन् । शिवं नक्षत्रं
प्रियमस्य धाम । आप्यायमानो बहुधा जनेषु ।
रेतः प्रजां यजमाने दधातु ( २ ), इति ।

योऽयं सोमो राजा सोऽयं मृगशीर्षेण नक्षत्रेण सहाऽऽगन्नागच्छतु । यच्छिवं कल्याणतरं मृगशीर्षं नक्षत्रं तदस्य सोमस्य प्रियं धाम स्थानं, स च सोमो जनेषु यजमानेषु बहुधा बहुभिः प्रकारैराप्यायमानोऽतिवृद्धिं संपादयन्कारणरूपं रेतः कार्यरूपां प्रजां च यजमाने दधातु स्थापयतु ।

तत्रैव याज्यामाह—

यत्ते नक्षत्रं मृगशीर्षमस्ति । प्रियꣳ राज-
न्प्रियतमं प्रियाणाम् । तस्मै ते सोम हविषा
विधेम । शं न एधि द्विपदे शं चतुष्पदे, इति ।

हे राजन्सोम ते तव संबन्धि मृगशीर्षाख्यं प्रियं प्रीतिहेतुभूतं यन्नक्षत्रमस्ति तत्प्रियाणां वस्तूनां मध्येऽतिशयेन प्रियं प्रियहेतुम् । हे सोम तस्मै नक्षत्राय ते तुभ्यं च हविषा विधेम परिचरेम । नोऽस्मदर्थाय द्विपदे मनुष्याय शं सुखहेतुरेधि भव । चतुष्पदे पशवे च शं भव ।

अथ चतुर्थस्य पुरोनुवाक्यामाह—

आर्द्रया रुद्रः प्रथमान एति । श्रेष्ठो देवानां
पतिरघ्नियानाम् । नक्षत्रमस्य हविषा विधेम ।
मा नः प्रजाꣳ रीरिषन्मोत वीरान्, इति ।

योऽयं रुद्रो देवः सोऽयमार्द्रया नक्षत्रेण सह प्रथमानः प्रसिद्धः सन्नेत्यस्य यज्ञं प्राप्नोतु । कीदृशो रुद्रो देवानां मध्ये श्रेष्ठोऽघ्नियानां गवां पतिः स्वाम्यस्य रुद्रस्य संबन्धि नक्षत्रमार्द्राख्यं हविषा परिचरेम । स चास्माकं प्रजां पुत्रादिकं मा [री]रिषन्मा हिंसीत् । उतापि च वीराञ्शूरान्भृत्यानपि मा [री]रिषत् ।

तत्र याज्यामाह—

हेती रुद्रस्य परि णो वृणक्तु । आर्द्रा नक्षत्रं जुष-
ताꣳ हविर्नः (३) । प्रमुञ्चमानौ दुरितानि विश्वा ।
अपाघशꣳसं नुदतामरातिम्, इति ।

रुद्रस्य हेतिरायुधं नोऽस्मान्परिवृणक्तु सर्वतो वर्जयतु । तदीयमार्द्राख्यं नक्षत्रं

नोऽस्मदीयं हविर्जुषताम् । अथ तौ रुद्र आर्द्रा चोभौ नोऽस्मदीयानि विश्वा सर्वाणि दुरितानि प्रमुञ्चमानौ विनाशयन्तावघशंसमस्मदीयस्य पापस्य शंसकं निन्दकमरातिं शत्रुमपनुदतां निराकुरुताम् ।

अथ पञ्चमस्य पुरोनुवाक्यामाह–

पुनर्नो देव्यदितिः स्पृणोतु । पुनर्वसू नः पुनरेतां यज्ञम् । पुनर्नो देवा अभियन्तु सर्वे । पुनः पुनर्वो हविषा यजामः, इति ।

अदितिर्देवी नोऽस्मान्पुनः स्पृणोतु भूयो भूयः प्रीणयतु । तदीयनक्षत्रदेहौ द्वौ पुनर्वसुनामानौ नोऽस्मदीयं यज्ञं प्रति पुनरेतां भूयो भूय आगच्छताम् । देवाश्च सर्वे नोऽस्मानभिलक्ष्य पुनर्यन्तु भूयो भूयः प्राप्नुवन्तु । वो युष्मानदितिप्रभृतीन्वयं पुनः पुनर्हविषा यजामः ।

तत्रैव याज्यामाह––

एवा न देव्यदितिरनर्वा । विश्वस्य भर्त्री जगतः प्रतिष्ठा । पुनर्वसू हविषा वर्धयन्ती । प्रियं देवानामप्येतु पाथः (४), इति ।

अदितिर्देवी देवानां प्रियं पाथ इदं हविरप्येतु प्राप्नोतु । कीदृश्येवाऽऽगमनशीला । नकारः पुनर्वसुभ्यां सह समुच्चये वर्तते । अनर्वाऽर्वाचीनेन पापेन रहिता विश्वस्य भर्त्री पोषयित्री जगतः प्रतिष्ठाऽऽधारभूताऽनेन हविषा पुनर्वसू नक्षत्रदेहौ वर्धयन्ती ।

अथ षष्ठस्य पुरोनुवाक्यामाह–

बृहस्पतिः प्रथमं जायमानः । तिष्यं नक्षत्रमभि संबभूव । श्रेष्ठो देवानां पृतनासु जिष्णुः । दिशो नु सर्वा अभयं नो अस्तु, इति ।

अयं बृहस्पतिर्जायमान एव प्रथममादौ तिष्यं नक्षत्रमभिलक्ष्य तत्र प्रीति-

---

१ क. ख. °देवी व° ।

युक्तः सन्संबभूवोत्पन्नः । कीदृशो देवानां मध्ये श्रेष्ठः पृतनासु परकीयसेनासु जिष्णुर्जयशीलस्तस्य बृहस्पतेः प्रसादात्सर्वा दिशोनु सर्वास्वपि दिक्षु नोऽस्माकमभयमस्तु ।

तत्रैव याज्यामाह—

तिष्यः पुरस्तादुत मध्यतो नः । बृहस्पतिर्नः परि-
पातु पश्चात् । बाधेतां द्वेषो अभयं कृणुताम् ।
सुवीर्यस्य पतयः स्याम, इति ।

योऽयं तिष्यो नक्षत्रविशेषः सोऽयं नोऽस्मान्पुरस्ताद्बाल्ये परिपातु । उतापि च मध्यतो यौवनेऽपि परिपातु । अयं बृहस्पतिर्नोऽस्मान्पश्चादन्ते वार्धके परिपातु । किंच तौ तिष्यबृहस्पती द्वेषो द्वेष्टृञ्शत्रून्बाधेताम् । अस्माकमभयं कृणुताम् । तयोः प्रसादाद्वयं सुवीर्यस्य शोभनसामर्थ्यस्य पतयः पालकाः स्याम ।

अथ सप्तमस्य पुरोनुवाक्यामाह—

इदꣳ सर्पेभ्यो हविरस्तु जुष्टम् । +आश्रेषा येषामनु-
यन्ति चेतः (५) । ये अन्तरिक्षं पृथिवीं क्षियन्ति । ते नः
सर्पासो हवमागमिष्ठाः, इति ।

सर्पेभ्यो नक्षत्रदेवेभ्य इदमस्मदीयं हविर्जुष्टं प्रियमस्तु । येषां सर्पदेवानां चेत आश्लेषा नक्षत्रदेहा[1] अनुयन्त्यनुवर्तन्ते । ये सर्पा देवा अन्तरिक्षं पृथिवीं च क्षियन्त्यधिवसन्ति ते सर्पासः सर्पाख्या देवा नो हवमस्मदीयं यज्ञं प्रत्यागमिष्ठा अतिशयेनाऽऽगन्तारः सन्तु ।

तत्रैव याज्यामाह—

ये रोचने सूर्यस्यापि सर्पाः । ये दिवं देवीमनुसंचरन्ति ।
येषामाश्रेषा अनुयन्ति कामम् । तेभ्यः सर्पेभ्यो मधुमज्जु-
होमि, इति ।

+ माध्यानुराधेमात्र।ऽऽश्लेषेति पाठः ।

1 क. ख. °देवा अ° ।

येऽप्यन्ये सर्पाः सूर्यस्य रोचने मण्डले वर्तन्ते ये च दिवं देवीं द्युलोकरूपां देवतामनुसंचरन्ति, आश्लेषा नक्षत्रदेहा येषां सर्पदेवानां काममनुयन्तीच्छामनुवर्तन्ते, तेभ्यः सर्पेभ्य आश्लेषादेवेभ्यो मधुमन्मधुरं हविर्जुहोमि।

अथाष्टमस्य पुरोनुवाक्यामाह–

उपहूताः पितरो ये मघासु। मनोजवसः सुकृतः सुकृत्याः। ते नो नक्षत्रे हवमागमिष्ठाः। स्वधाभिर्यज्ञं प्रयतं जुषन्ताम् (६), इति।

ये पितरो मघासु नक्षत्रतनुषूपहूता अनुज्ञाताः। कीदृशा मनोजवसो मनोवेगाः सुकृतः सुष्ठु कर्तुं शक्ताः सुकृत्याः शोभनेन कृत्येन युक्तास्ते पितरो नक्षत्रे मघारूपे निमित्तभूते सति नो हवमागमिष्ठा अस्मदीयं यज्ञं प्रत्यतिशयेनाऽऽगन्तारो भवन्तु। ते पितरोऽद्य समवाः स्वधाभिरन्नैः प्रयतं शुद्धं संस्कृतं यज्ञं जुषन्ताम्।

तत्रैव याज्यामाह–

ये अग्निदग्धा येऽनग्निदग्धाः। येऽमुं लोकं पितरः क्षियन्ति। याꣳश्च विद्म याꣳ उ च न प्रविद्म। मघासु यज्ञꣳ सुकृतं जुषन्ताम्, इति।

ये पितरः शास्त्रोक्तसंस्कृतेनाग्निना दग्धा ये च तद्विपरीता ये चान्ये पितरोऽमुं लोकं क्षियन्ति स्वर्गमधिवसन्ति, यांश्च पितॄन्वयं विद्म यानु च यानप्यन्यान्पितॄन्वयं न प्रविद्म ते सर्वे पितरो मघासु निमित्तभूतासु सुकृतं संस्कृतं यज्ञं जुषन्ताम्।

अथ नवमस्य पुरोनुवाक्यामाह–

गवां पतिः फल्गुनीनामासि त्वम्। तदर्यमन्वरुण मित्र चारु। तं त्वा वयꣳ सनितारꣳ सनीनाम्। जीवा जीवन्तमुपसंविशेम, इति।

वरुणो दुरितानां निवारको मित्रः सर्वेषां हितकार्यत एव चारुः समी–

चीनस्तादृश हेऽर्यमंस्त्वं गवां पतिः पालकोऽसि । तथा फल्गुनीनां नक्षत्रदेहानामपि पालकोऽसि। तत्तस्मात्कारणात्त्वं त्वा तादृशं त्वां वयं जीवा जीवनार्थिन उपसंविशेम संप्राप्नुयाम । कीदृशं त्वां सनीनां सनितारं दातव्यानां धनानां दातारम्, अत एव जीवन्तं समीचीनेन जीवनेनोपेतम् ।

तत्रैव याज्यामाह—

येनेमा विश्वा भुवनानि संजिता । यस्य देवा
अनुसंयन्ति चेतः (७) । अर्यमा राजाऽजर-
स्तुविष्मान् । फल्गुनीनामृषभो रोरवीति, इति ।

येनार्यम्णेमानि सर्वाणि भुवनानि भूतजातानि संजिता सम्यग्जितानि वशीकृतानि देवाः सर्वे यस्यार्यम्णश्चेतोऽनुसंयन्त्यनुवर्तन्ते सोऽयमर्यमा रोरवीत्यंसंदनुग्रहाय देवलोके घोषं करोति । कीदृशोऽर्यमा राजा दीप्तिमानजरो जरारहितस्तुविष्मान्वृद्धिमान्फल्गुनीनामृषभः पूर्वफल्गुनीनक्षत्रदेहानां गोसदृशानां वृषभसदृशः स्वामी ।

अथ दशमस्य पुरोनुवाक्यामाह—

श्रेष्ठो देवानां भगवो भगासि । तत्त्वा विदुः
फल्गुनीस्तस्य वित्तात् । अस्मभ्यं क्षत्रम-
जरꣳ सुवीर्यम् । गोमदश्ववदुप संनुदेह, इति ।

हे भगवो ज्ञानवैराग्यादिषड्गुणयुक्त हे भग भगाख्यदेव त्वं देवानां मध्ये श्रेष्ठोऽसि। तत्तस्मात्कारणात्फल्गुनीरुत्तरफल्गुन्याख्या नक्षत्रदेहास्त्वां विदुः स्वामित्वेनाऽलभन्त। तस्य तव माहात्म्यं वित्तात्त्वमेव विद्धि जानीहि। इहास्मिन्कर्मण्यस्मभ्यमस्मदर्थं क्षत्रं बलमुप समीपे संनुद सम्यक्प्रेरय। कीदृशं क्षत्रमजरं जरया शैथिल्येन रहितं सुवीर्यं शोभनैर्वीर्यैः पुत्रादिभिरुपेतं गोमद्बहुगोयुक्तमश्ववत्प्रशस्ताश्वोपेतम् ।

तत्रैव याज्यामाह—

भगो ह दाता भग इत्प्रदाता । भगो देवीः
फल्गुनीराविवेश । भगस्येत्तं प्रसवं गमेम ।

यत्र॑ दे॒वैः स॑ध॒माद॑ मदेम (८), इति ।

योऽयं भगाख्यो देवः स एव धनधान्यादीनां दाता । किंच भग एव प्रदाता प्रकृष्टानां मणिमुक्तादीनां दाता । स भगो देवीर्द्योतमाना नक्षत्ररूपा उत्तराः फल्गुनीराविवेश स्वामित्वेन प्रविष्टवान् । तस्माद्भगस्येत्तस्यैव भगदेवस्य तं प्रसवमनुज्ञां गमेम गम्यास्म । यत्र यस्मिन्प्रसवे सति देवैः सधमादं मदेम सह हर्षं प्राप्नुयाम तं प्रसवं गमेमेति पूर्वत्रान्वयः ।

एकादशस्य पुरोनुवाक्यामाह—

आया॑तु दे॒वः स॑वि॒तोप॑यातु । हि॒र॒ण्यये॑न
सु॒वृता॒ रथे॑न । वह॒न्हस्त॑ꣳ सु॒भगं॑ वि॒द्म-
नाप॑सम् । प्र॒यच्छ॑न्तं॒ पपु॑रिं॒ पुण्य॒मच्छ॑, इति ।

योऽयं सविता देवः सोऽयमिह कर्मण्यायातु सवितोपयातु च । उपगमनं नाम स्नेहातिशयेन समीपप्राप्तिः । किं कुर्वन्हिरण्ययेन सुवर्णनिर्मितेन सुवृता शोभनवृत्तिकेन रथेन हस्तं हस्ताख्यं नक्षत्रं वहन्कीदृशं हस्तं सुभगं सौभाग्ययुक्तं विद्मनापसं विदितेन कर्मणा युक्तं प्रयच्छन्तमभिमतफलानि ददतं पपुरिं कामानां पूरयितारं पुण्यं पावनमच्छाऽभिमुख्येन वर्तमानम् ।

तत्रैव याज्यामाह—

हस्तः॒ प्रय॑च्छत्व॒मृतं॒ वसी॑यः ।
दक्षि॑णे॒न प्रति॑गृभ्णीम एनत् ।
दा॒तार॑म॒द्य स॑वि॒ता वि॑देय । यो
नो॒ हस्ता॑य प्रसु॒वाति॑ य॒ज्ञम्, इति ।

अयं हस्तो नक्षत्रविशेषोऽमृतं विनाशरहितं वसीयोऽतिश्रेष्ठं धनं प्रयच्छतु । वयमप्येनद्धनं दक्षिणेन हस्तेन पूजितेन प्रतिगृभ्णीमः । यः सविता हस्ताय हस्तनक्षत्रार्थं नोऽस्मदीयं यज्ञं प्रसुवात्यनुजानाति तं सवितारं धनस्य दातारमद्यास्मिन्कर्मणि विदेय लभेय ।

अथ द्वादशस्य पुरोनुवाक्यामाह—

त्वष्टा॒ नक्ष॑त्रम॒भ्ये॑ति चि॒त्राम् ।

सुभꣳससं युवतिꣳ रोचमानाम् ।
(९) । निवेशयन्नमृतान्मर्त्याꣳश्च ।
रूपाणि पिꣳशन्भुवनानि विश्वा, इति ।

अयं त्वष्टा देवश्चित्राख्यं नक्षत्रमभ्येत्याभिमुख्येन गच्छति तया सहैकी भवति । कीदृशीं चित्रां सुभंससं शोभनेन भंससा जघनप्रदेशेन युक्तां युवतिं यौवनयुक्तां रोचमानां दीप्यमानाम् । किं कुर्वन्, अमृतान्देवान्मर्त्यान्मनुष्यांश्च निवेशयन्स्वस्वोचिते रूपे स्थापयंस्तथा रूपाणि निरूपणीयानि विश्वा भुवनानि सर्वाणि भूतजातानि पिंशन्निरूपयन् ।

तत्रैव याज्यामाह—

तन्नस्त्वष्टा तदु चित्रा विचष्टाम् ।
तन्नक्षत्रं भूरिदा अस्तु मह्यम् ।
तन्नः प्रजां वीरवतीꣳ सनोतु ।
गोभिर्नो अश्वैः समनक्तु यज्ञम्, इति ।

अयं त्वष्टा देवो नोऽस्माकं तद्धनं विचष्टां विशेषेण पश्यत्वनुगृह्णात्वित्यर्थः। तथा चित्रा नक्षत्रतनुस्तदु विचष्टां तदेव धनं विशेषेणानुगृह्णातु । किंच तच्चित्राख्यं नक्षत्रं मह्यं यजमानाय भूरिदा अधिकधनप्रदमस्तु । किंच तन्नक्षत्रं नोऽस्मभ्यं प्रजां पुत्रादिरूपां वीरवतीं शूरैर्भटैर्युक्तां सनोतु ददातु । किंच नोऽस्मदीयं यज्ञं गोभिरश्वैश्च समनक्तु समृद्धं करोतु ।

अथ त्रयोदशस्य पुरोनुवाक्यामाह—

वायुर्नक्षत्रमभ्येति निष्ट्याम् । तिग्मशृङ्गो वृषभो रोरुवाणः । समीरयन्भुवना मातरिश्वा । अपद्वेषाꣳसि नुदतामरातीः (१०), इति ।

यो वायुदेवः सोऽयं निष्ट्यां स्वातीं नक्षत्रमभ्येत्याभिमुख्येन प्राप्नोति। कीदृशो वायुस्तिग्मशृङ्गस्तीक्ष्णतेजा वृषभः कामानां वर्षिता रोरुवाणः शब्दायमानः। सोऽयं मातरिश्वा वायुर्भुवना भूतजातानि समीरयन्सम्यक्प्रेरयन्द्वेषांसि द्वेष्यानरातीर्दातव्यं धनमप्रयच्छतः पुरुषानप्यपनुदतामपसारयतु।

तत्रैव याज्यामाह—

तन्नो वायुस्तदु निष्ट्या शृणोतु ।
तन्नक्षत्रं भूरिदा अस्तु मह्यम् ।
तन्नो देवासो अनुजानन्तु कामम् ।
यथा तरेम दुरितानि विश्वा, इति ।

नोऽस्मदीयं तद्विज्ञापनं वायुर्देवः शृणोतु। निष्ट्या स्वाती च तदु तदेव विज्ञापनं शृणोतु। तत्स्वात्याख्यं नक्षत्रं मह्यं भूरिदा बहुधनप्रदमस्तु। देवासः सर्वे देवा नोऽस्मदीयं तं काममभिलषितार्थमनुजानन्तु विश्वा दुरितानि सर्वाणि पापानि यथा तरेम तथाऽनुगृह्णन्तु।

अथ चतुर्दशस्य पुरोनुवाक्यामाह—

दूरमस्मच्छत्रवो यन्तु भीताः ।
तदिन्द्राग्नी कृणुतां तद्विशाखे ।
तन्नो देवा अनुमदन्तु यज्ञम् ।
पश्चात्पुरस्तादभयं नो अस्तु, इति ।

अस्मदस्मत्तो भीताः शत्रवो दूरं यन्तु। तच्च दूरगमनमिन्द्राग्नी देवौ कृणुतां विशाखे नक्षत्रदेहौ च तत्कृणुताम्। नोऽस्मदीयं यज्ञं देवाः सर्वेऽनुमदन्त्वङ्गी कुर्वन्तु। नोऽस्माकं पश्चात्पुरस्ताच्चाभयमस्तु।

तत्रैव याज्यामाह—

नक्षत्राणामधिपत्नी विशाखे । श्रेष्ठाविन्द्राग्नी
भुवनस्य गोपौ (११)। विषूचः शत्रूनप-
बाधमानौ । अप क्षुधं नुदतामरातिम्, इति ।

नक्षत्राणां मध्य इमे द्वे विशाखे अधिपत्नी अध्यधिकं पालयित्र्याविन्द्राग्नी च तद्देवौ श्रेष्ठौ प्रशस्तौ भुवनस्य गोपौ पालकावुभौ, अस्मच्छत्रून्विषूचो विभिन्नगतीन्कृत्वाऽपबाधमानौ पीडयन्तावस्मदीयां क्षुधमरातिं शत्रुं चापनुदतां निराकुरुताम् ।

कृत्तिकादीनां विशाखान्तानां याज्यानुवाक्या उक्ताः । अथ पौर्णमासीदेवतायाः पुरोनुवाक्यामाह—

पूर्णा पश्चादुत पूर्णा पुरस्तात् ।
उन्मध्यतः पौर्णमासी जिगाय ।
तस्यां देवा अधिसंवसन्तः । उत्तमे
नाके इह मादयन्ताम्, इति ।

येऽयं पूर्णा पौर्णमासीदेवता साऽस्माकं पश्चाद्भागे विरोधिन उज्जिगाय । उतापि चेयं पूर्णा पुरस्तात्पूर्वभागेऽप्युज्जिगाय । तथेयं पौर्णमासी मध्यतो मध्यभागेऽप्युज्जिगाय । देवाः सर्वे तस्यामधिष्ठाय सम्यगवसन्त उत्तमे नाके स्वर्गे इह कर्मणि च मादयन्तामस्मान्हर्षयन्तु ।

तत्रैव याज्यामाह—

पृथ्वी सुवर्चा युवतिः सजोषाः ।
पौर्णमास्युदगाच्छोभमाना । आप्याययन्ती दुरितानि विश्वा । उरुं
दुहां यजमानाय यज्ञम् (१२), इति ।

चित्रभानुर्यजमाने दधातु हविर्नः पाथश्चेतो जुषन्तां चेतो मदेम रोचमानामरातीर्गोपौ यज्ञम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके प्रथमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

इयं पौर्णमासी देवतोदगाभ्युदयं प्राप्ता । कीदृशी पृथ्वी विस्तीर्णा सुवर्चाः शोभनदीप्तिर्युवतिर्नित्यतरुणी सजोषा अस्माभिः समानप्रीतिः शोभमाना रमणीया विश्वा दुरितानि सर्वाणि दुर्गत्युपेतानि भूतान्याप्याययन्ती दुर्गविपरिहा-

रेण वर्धयन्ती । तादृशी पौर्णमासी यजमानायोरुं विस्तीर्णं यज्ञं दुहां दुग्धां संपादयतु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ प्रथमे द्वितीयोऽनुवाकः ।

---

प्रथमेऽनुवाके देवनक्षत्राणामिष्टिषु याज्यानुवाक्या उक्ताः । अथ द्वितीये यमनक्षत्राणामिष्टिषु याज्यानुवाक्या. उच्यन्ते । तत्र प्रथमस्य पुरोनुवाक्यामाह–

ऋध्यास्म हव्यैर्नमसोपसद्य । मित्रं देवं मित्रधेयं नो अस्तु । अनूराधान्हविषा वर्धयन्तः । शतं जीवेम शरदः सवीराः, इति ।

मित्राख्यं देवं नमसा नमस्कारेण हव्यैश्चोपसद्य सेवित्वर्ध्यास्म वयं समृद्धा भूयास्म । मित्रधेयं मित्रेण यत्संपाद्यं श्रेयस्तन्नोऽस्माकमस्तु । वयमप्यनूराधानक्षत्रविग्रहाननेन हविषा वर्धयन्तः सवीरा वीरैः पुत्रादिभिः सहिताः शतं शरदः संवत्सरं जीवेम ।

तत्रैव याज्यामाह–

चित्रं नक्षत्रमुदगात्पुरस्तात् । अनूराधास इति यद्वदन्ति । तन्मित्र एति पथिभिर्देवयानैः । हिरण्ययैर्विततैरन्तरिक्षे, इति ।

चित्रमाश्चर्यकरमिदं नक्षत्रं पुरस्तात्पूर्वस्यां दिश्युदगादुदितमभूत्, यन्नक्षत्रं सर्वे जना अनूराधास इति वदन्त्येतन्नाम्ना व्यवहरन्ति तन्नक्षत्रमयं मित्रो देवोऽन्तरिक्षेऽवस्थितैर्विततैर्विस्तीर्णैर्हिरण्ययैर्हिरण्यनिर्मितैर्देवयानैर्देवानां गमनयोग्यैः पथिभिर्मार्गैरेति गच्छति ।

अथ द्वितीयस्य पुरोनुवाक्यामाह–

इन्द्रो ज्येष्ठामनु नक्षत्रमेति । यस्मिन्वृत्रं वृत्र-

तूर्ये ततार (१)। तस्मिन्वयममृतं दुहानाः। क्षुधं तरेम दुरितिं दुरिष्टिम्, इति।

अयमिन्द्रो ज्येष्ठाख्यं नक्षत्रमन्वेत्यनुगच्छति। वृत्रतूर्ये वृत्रवधे निमित्तभूते सति यस्मिञ्ज्येष्ठानक्षत्रे वृत्राख्यमसुरं ततारेन्द्रस्तीर्णवान्हतवानित्यर्थः। तस्मिञ्ज्येष्ठानक्षत्रे निमित्तभूते सत्यमृतमविनश्वरं हविर्दुहानाः संपादयन्तो वयं क्षुधं तरेम। कीदृशीं क्षुधं दुरितिं दुर्गतियुक्ताम्।

अत एव महाभारते स्मर्यते—

वासुदेव जरा कष्टं कष्टं धनविपर्ययः।
पुत्रशोकस्ततः कष्टं कष्टात्कष्टतरं क्षुधा॥ इति।

दुरिष्टिं दुर्यागफलभूताम्।

तत्रैव याज्यामाह—

पुरंदराय वृषभाय धृष्णवे। अषाढाय सहमानाय मीढुषे। इन्द्राय ज्येष्ठा मधुमद्दुहाना। उरुं कृणोतु यजमानाय लोकम्, इति।

इयं ज्येष्ठा नक्षत्ररूपेन्द्रार्थं मधुमद्दुहाना मधुरं हविः संपादयन्ती यजमानायोरुं विस्तीर्णं लोकं कृणोतु करोतु। कीदृशायेन्द्राय पुरंदरायासुरपुराणां दारयित्रे वृषभाय कामानां वर्षयित्रे धृष्णवे धार्ष्ट्ययुक्तायाषाढाय केनाप्यपरिभूताय सहमानाय वैरिणामभिभवित्रे मीढुषे वृष्ट्या सेचकाय।

अथ तृतीयस्य पुरोनुवाक्यामाह—

मूलं प्रजां वीरवतीं विदेय। पराच्येतु निर्ऋतिः पराचा। गोभिर्नक्षत्रं पशुभिः समक्तम्। अहर्भूयाद्यजमानाय मह्यम् (२), इति।

यदिदं मूलाख्यं नक्षत्रं तत्सेवित्वा वीरवतीं शूरभटयुक्तां प्रजां पुत्रादिकां विदेय लभेय। निर्ऋतिः काचिद्राक्षसदेवता पराची पराङ्मुखी भूत्वा पराचीं

पुनरावृत्तिरहितेन मार्गेणैत्वितो गच्छतु । मह्यं यजमानाय मूलाख्यमिदं नक्षत्रं गोभिरन्यैश्च पशुभिः समकं संबद्धमहर्भूयाद्दिवसवत्प्रकाशितं भूयात् ।

तत्रैव याज्यामाह–

अहर्नो अद्य सुविते दधातु । मूलं नक्षत्रमिति यद्वदन्ति ।
पराचीं वाचा निर्ऋतिं नुदामि । शिवं प्रजायै शिवमस्तु
मह्यम्, इति ।

सर्वे लोका यन्नक्षत्रं नाम्ना मूलमिति वदन्ति तन्नक्षत्रमद्यास्मिन्कर्मण्यहर्दिवसवत्प्रकाशकं भूत्वा नोऽस्मान्सुविते सुष्ठु गन्तव्ये फले दधातु स्थापयतु । अहं तु त्वत्प्रसादात्पराचीं पराङ्मुखीं निर्ऋतिं वाचा वाङ्मात्रेण नुदामि निराकरोमि । मदीयायै प्रजायै शिवं श्रेयोऽस्तु मह्यं च शिवमस्तु ।

अथ चतुर्थस्य पुरोनुवाक्यामाह–

या दिव्या आपः पयसा संबभूवुः । या
अन्तरिक्ष उत पार्थिवीर्याः । यासामषाढा
अनुयन्ति कामम् । ता न आपः शꣳ
स्योना भवन्तु, इति ।

दिव्या दिवि भवा या एता आपः पयसा संबभूवुः पेयत्वेन हेतुना समुत्पन्ना याश्चाऽऽपोऽन्तरिक्षे वर्तन्त उतापि च या आपः पार्थिवीः पृथिव्यां भवा यासां चाब्देवतानां काममिच्छामषाढाः पूर्वाषाढानक्षत्रविग्रहा अनुयन्त्यनुवर्तन्ते ता आपो देवता नोऽस्माकं शं भवन्त्वनिष्टशान्तिहेतवो भवन्तु स्योनाः सुखहेतवश्च भवन्तु ।

तत्रैव याज्यामाह–

याश्च कूप्या याश्च नाद्याः समुद्रियाः । याश्च वैशन्तीरुत
प्रासचीर्याः ( ३ ) । यासामषाढा मधु भक्षयन्ति । ता न
आपः शꣳ स्योना भवन्तु, इति ।

याश्चाऽऽपः कूप्या कूपे भवा याश्च नाद्या नद्यां भवाः समुद्रियाः समुद्रे भवा याश्चाऽऽपो वैशन्तीर्वेशन्तेषु पल्वलेषु भवा उतापि च या आपः प्रासचीः

प्रकर्षेण ततस्ततः समागता यासामपां संबन्धि मधु स्वादुभूतं रसमषाढाः पूर्वाषाढनक्षत्रदेवता भक्षयन्ति ता न इत्यादि पूर्ववत् ।

अथ पञ्चमस्य पुरोनुवाक्यामाह—

तन्नो विश्वे उपशृण्वन्तु देवाः । तदषाढा अभिसंयन्तु यज्ञम् । तन्नक्षत्रं प्रथतां पशुभ्यः । कृषिर्वृष्टिर्यजमानाय कल्पताम्, इति ।

विश्वे देवा नोऽस्मदीयं तद्विज्ञापनमुपशृण्वन्तु । तत्तदानीमषाढा उत्तराषाढाख्या नक्षत्रविग्रहा यज्ञमस्मदीयमभिसंयन्त्वभितः सम्यक्प्राप्नुवन्तु । तदुत्तराषाढाख्यं नक्षत्रं पशुभ्यः पश्वर्थं प्रथतां प्रख्यातं भवतु । ततो यजमानाय कृषिर्वृष्टिश्च कल्पतां संपद्यताम् ।

तत्रैव याज्यामाह—

शुभ्राः कन्या युवतयः सुपेशसः । कर्मकृतः सुकृतो वीर्यावतीः । विश्वान्देवान्हविषा वर्धयन्तीः । अषाढाः काममुपयान्तु यज्ञम् ( ४ ), इति ।

अषाढा उत्तराषाढाख्या नक्षत्रदेव्यः कामं काम्यमानमस्मदीयं यज्ञमुपयान्तु । कीदृश्योऽषाढाः शुभ्रा निर्मलाः कन्याः कान्तियुक्ता युवतयो नित्यतरुण्यः सुपेशसः सुरूपाः कर्मकृतः कर्मकरणकुशलाः सुकृतः शोभनकारिण्यो वीर्यावतीः प्रसवसामर्थ्यवत्यो विश्वान्देवान्स्वकीयस्वामिनो हविषाऽस्मदीयेन वर्धयन्तीः परितोषयन्त्यः ।

अथ षष्ठस्य पुरोनुवाक्यामाह—

यस्मिन्ब्रह्माऽभ्यजयत्सर्वमेतत् । अमुं च लोकमिदमू च सर्वम् । तन्नो नक्षत्रमभिजिद्विजित्य । श्रियं दधात्वहृणीयमानम्, इति ।

यस्मिन्नक्षत्रे ब्रह्मा प्रजापतिः सर्वमेतदभ्यजयत्, किं तत्सर्वमिति तदुच्यते—अ

च लोकं स्वर्गमपीदमू चेदमपि च भूलोकादिकं सर्वं तज्जयसाधनमभिजिन्नाम नक्षत्रं नोऽस्मदर्थं श्रियं वैरिसंबन्धिनीं विजित्याह्रणीयमानं तैरपहर्तुमशक्यां कृत्वा दधात्वस्मासु स्थापयतु।

तत्रैव याज्यामाह—

उभौ लोकौ ब्रह्मणा संजितेमौ । तन्नो नक्ष-
त्रमभिजिद्विचष्टाम् । तस्मिन्वयं पृतनाः संज-
येम । तं नो देवासो अनुजानन्तु कामम्, इति ।

भूमिर्द्यौश्चेतिमावुभौ लोकावभिजिन्नाम्नि नक्षत्रे ब्रह्मणा प्रजापतिना संजिता सम्यग्जितौ । तन्नक्षत्रमभिजिदाख्यं नोऽस्मान्विचष्टां देवेषु विशेषेण ख्यापयतु । तस्मिन्नक्षत्रे कर्मानुष्ठायिनो वयं पृतनाः परकीयाः सेनाः संजयेम । देवासो देवाः सर्वे नोऽस्माकं तं काममनुजानन्त्वङ्गी कुर्वन्तु ।

अथ सप्तमस्य पुरोनुवाक्यामाह—

शृण्वति श्रोणाममृतस्य गोपाम् ।
पुण्यामस्या उपशृणोमि वाचम्(५)।
महीं देवीं विष्णुपत्नीमजूर्याम् ।
प्रतीचीमेनाँ हविषा यजामः, इति ।

अमृतस्य कर्मफलस्य गोपां रक्षिकां श्रोणां श्रवणनक्षत्ररूपां तनुं सर्वे जनाः शृण्वन्ति । अहमप्यस्याः श्रोणाया पुण्यां वाचं कीर्तिरूपां शृणोमि । एनां श्रोणां वयं हविषा यजामः । कीदृशीं महीं महतीं गुणगधिकां देवीं द्योतमानां विष्णुपत्नीं विष्णोः पालयित्रीमजूर्यां ज्वरेण संतापेन रहितां प्रतीचीमस्माकमभिमुखाम् ।

तत्रैव याज्यामाह—

त्रेधा विष्णुरुरुगायो विचक्रमे । महीं दिवं
पृथिवीमन्तरिक्षम् । तच्छ्रोणैति श्रव इच्छ-
माना । पुण्यँ श्लोकं यजमानाय कृण्वती,इति।

उरु प्रभूतं यथा भवति तथा गीयते वेदेषु श्रूयत इत्युरुगायस्तादृशो विष्णु-

महीं दिवं महान्तं द्युलोकं पार्थिवीमन्तरिक्षं चोद्दिश्य त्रेधा विचक्रमे त्रिप्रकारं त्रिविधं क्रमणं कृतवान्पादत्रयेण लोकत्रयं व्याप्नोत्त्रिविक्रमरूपं श्रोणा नक्षत्ररूपैति प्राप्नोति । कीदृशी श्रोणा श्रव इच्छमाना कीर्तिमपेक्षमाणा यजमानाय यजमानार्थं पुण्यं श्लोकं कृण्वत्युत्तमां कीर्तिं कुर्वती ।

अष्टमस्य पुरोनुवाक्यामाह—

अष्टौ देवा वसवः सोम्यासः । चतस्रो देवीरजराः श्रविष्ठाः । ते यज्ञं पान्तु रजसः परस्तात् । संवत्सरीणममृतꣳ स्वस्ति (८), इति ।

सोम्यासो रमणीयमूर्तयो वसुनामका देवा अष्टसंख्याकाः श्रविष्ठा धनिष्ठानक्षत्रमूर्तयश्चतस्रस्ताश्च देवीर्द्योतमाना अजरा जरारहितास्ते सर्वेऽप्यस्मदीयं यज्ञं पान्तु । रजसः परस्ताद्रजोगुणयुक्तान्मनुष्यलोकात्परतो वर्तमानं संवत्सरीणं संवत्सरदेवतासंबन्धममृतमविनाशिनं स्वर्गलोकं स्वस्ति क्षेमेण प्राप्नुयामिति शेषः ।

तत्रैव याज्यामाह—

यज्ञं नः पान्तु वसवः पुरस्तात् । दक्षिणतोऽभियन्तु श्रविष्ठाः । पुण्यं नक्षत्रमभिसंविशाम । मा नो अरातिरघशꣳसा गन्, इति ।

येऽष्टसंख्याका वसवस्ते पुरस्तात्पूर्वस्यां दिशि नोऽस्मदीयं यज्ञं पान्तु । श्रविष्ठा नक्षत्रमूर्तयो दक्षिणतो दक्षिणस्यां दिश्यभियन्त्वाभिमुख्येन प्राप्नुवन्तु । वयमपि धनिष्ठाख्यं पुण्यनक्षत्रमभिसंविशामाऽऽभिमुख्येन सम्यक्प्रविशाम भजामेत्यर्थः । अघशंसाऽस्मदीयस्य पापस्य शंसको योऽयमरातिः शत्रुः सोऽयं नोऽस्मान्प्रति मा गन्मा गच्छतु ।

अथ नवमस्य पुरोनुवाक्यामाह—

क्षत्रस्य राजा वरुणोऽधिराजः । नक्षत्राणाꣳ शतभिषग्वसिष्ठः । तौ देवेभ्यः कृणुतो दीर्घमायुः । शतꣳ सहस्रा भेषजानि धत्तः, इति ।

योऽयं वरुणोऽस्ति सोऽयं क्षत्रस्य क्षत्रियजातेः सर्वस्या अपि राजाऽत एवायमधिकत्वादधिराज इत्युच्यते । नक्षत्राणां मध्ये योऽयं शतभिषगाख्यो नक्षत्रविशेषः सोऽयं वसिष्ठोऽतिशयेन निवासहेतुस्तौ वरुणशतभिषजौ देवेभ्यो देवार्थं यजमानस्य दीर्घमायुः कृणुतस्तत्सिद्धयर्थं शतं शतसंख्याकानि सहस्रसंख्याकानि च भेषजान्यौषधानि धत्तः संपादयतः ।

तत्रैव याज्यामाह—

यज्ञं नो राजा वरुण उपयातु । तं नो विश्वे
अभिसंयन्तु देवाः (७) । तन्नो नक्षत्रꣳ शतभि-
षग्जुषाणम् । दीर्घमायुः प्रतिरद्भेषजानि, इति ।

वरुणो राजा नोऽस्मदीयं यज्ञमुपयातु प्राप्नोतु । नोऽस्मदीयं तं यज्ञं विश्वे सर्वे देवा अभिसंयन्त्वाभिमुख्येन सम्यक्प्राप्नुवन्तु । जुषाणं प्रीतियुक्तं शतभिषगाख्यं तन्नक्षत्रं नोऽस्मभ्यं दीर्घमायुश्चिरकालमायुष्यं भेषजानि तदर्थान्यौषधानि च प्रतिरत्प्रकर्षेण ददातु ।

अथ दशमस्य पुरोनुवाक्यामाह—

अज एकपादुदगात्पुरस्तात् । विश्वा भूतानि
प्रतिमोदमानः । तस्य देवाः प्रसवं यन्ति
सर्वे । प्रोष्ठपदासो अमृतस्य गोपाः, इति ।

अजो जन्मरहित एकपादेकेनैव पादेन देवान्रक्षति । एतत्पदद्वयमग्निविशेषस्य नामधेयम् । सोऽयमादित्यरूपं धृत्वा पुरस्तादुदगात्पूर्वस्यां दिश्युदेति । विश्वा भूतानि सर्वान्प्राणिनः प्रतिमोदमानः प्रत्येकं हर्षयन्वर्तते । तस्य सूर्यरूपस्याग्नेः प्रसवं सर्वे देवा यन्ति प्राप्नुवन्ति । प्रोष्ठपदासः पूर्वभाद्रपदाख्यनक्षत्रविशेषा अमृतस्याविनाशिनः कर्मफलस्य गोपा रक्षकाः ।

तत्रैव याज्यामाह—

विभ्राजमानः समिधान उग्रः । आन्तरिक्षम-
रुहदगं द्याम् । तꣳ सूर्यं देवमजमेकपादम् ।

---

१ क. ०न द्वेधा गच्छति ।

प्रोष्ठपदासो अनुयन्ति सर्वे (८), इति ।

विभ्राजमानो विशेषेण दीप्यमानः समिधानः सर्वान्सम्यक्प्रकाशयन्नुग्र-स्तीक्ष्णतेजा अन्तरिक्षमारुहदारूढवान् । ततो द्यां द्युलोकमगन्प्राप्तवान् । अजमेकपादमेतन्नामयुक्तं तं सूर्यं देवं प्रोष्ठपदासः पूर्वभाद्रपदाख्यनक्षत्रविशेषाः सर्वेऽप्यनुयन्त्यनुवर्तन्ते ।

अथैकादशस्य पुरोनुवाक्यामाह—

अहिर्बुध्नियः प्रथमान एति । श्रेष्ठो देवाना-
मुत मानुषाणाम् । तं ब्राह्मणाः सोमपाः
सोम्यासः । प्रोष्ठपदासो अभिरक्षन्ति सर्वे, इति ।

न कदाचिदपि हीयत इत्यहिः, बुध्ने मूले जगदादौ भवो बुध्नियः, पदद्वयमपि मिलित्वा रुद्रविशेषस्य नामधेयम् । सोऽयं रुद्रः प्रथमानो विश्वं व्याप्नुवन्नेति गच्छति । कीदृशो देवानां मध्ये श्रेष्ठोऽपि च मानुषाणामपि मध्ये श्रेष्ठस्तं तादृशं सोमपाः सोमस्य पातारः सोम्यासो रमणीयदेहा ब्राह्मणाः प्रोष्ठपदास उत्तरभा-द्रपदानक्षत्रविशेषाश्च सर्वेऽप्यभिरक्षन्त्यभितः सेवन्त इत्यर्थः ।

तत्रैव याज्यामाह—

चत्वार एकमभिकर्म देवाः । प्रोष्ठपदास
इति यान्वदन्ति । ते बुध्नियं परिषद्यꣳ
स्तुवन्तः । अहिꣳ रक्षन्ति नमसोपसद्य, इति ।

चत्वारश्चतुःसंख्याका नक्षत्रमूर्तिरूपदेवा एकमेवत्कर्माभिगच्छन्तीति शेषः । यांश्चतुरो देवान्प्रोष्ठपदास इत्युत्तरभाद्रपदेत्यनेन नाम्ना वदन्ति सर्वे जना व्यव-हरन्ति । ते चत्वारो देवाः परिषद्यं सभायोग्यमहिं बुध्नियमेतन्नामकं देवं नमसो-पसद्य नमस्कारेण सेवित्वा स्तुवन्तोऽभिरक्षन्त्यभितः समीपेऽवतिष्ठन्त इत्यर्थः ।

अथ द्वादशस्य पुरोनुवाक्यामाह—

पूषा रेवत्यन्वेति पन्थाम् । पुष्टि-

पती पशुपा वाजबस्त्यौ ( ९ ) ।
इमानि हव्या प्रयता जुषाणा ।
सुगैर्नो यानैरुपयातां यज्ञम्, इति ।

पूषाख्यो देवः पन्थामन्वेत्यस्मद्यज्ञमार्गमनुसृत्य गच्छति । तथा रेवती पन्थामन्वेति । तावुभौ पुष्टिपती पुष्टेः पालकौ पशुपा पशूनां पालकौ वाजवस्त्यौ वाजेनान्नेन जन्यं बस्त्यं बलं तद्योग्यौ प्रयता प्रयतानि शुद्धानीमानि हव्यानि जुषाणा सेवमानौ सन्तौ सुगैः सुष्ठु गन्तुं शक्यैर्यानैर्मार्गैर्नो यज्ञमुपयातां प्राप्नुताम् ।

तत्रैव याज्यामाह—

क्षुद्रान्पशून्रक्षतु रेवती नः । गावो
नो अश्वा॒ अन्वेतु पूषा । अन्न॒ं
रक्षन्तौ बहुधा विरूपम् । वाज॒ं
सनुतां यजमानाय यज्ञम्, इति ।

रेवती नक्षत्ररूपा नोऽस्मदीयान्क्षुद्रान्पशून्वत्सरूपान्रक्षतु । पूषाख्यो देवो नो गावोऽस्मदीया गा अश्वांश्चान्वेत्वनुगच्छतु । तावुभावन्नं रक्षन्तौ बहुधा व्रीहियवमुद्गगोधूमादिर्बहुभिः प्रकारैर्विरूपं परस्परविलक्षणं वाजमन्नं तत्साधनभूतं यज्ञं च यजमानाय सनुतां दत्ताम् ।

अथ त्रयोदशस्य पुरोनुवाक्यामाह—

तदश्विनावश्वयुजोपयाताम् । शुभं गमिष्ठौ
सुयमेभिरश्वैः । स्वं नक्षत्र॒ं हविषा यजन्तौ ।
मध्वा संपृक्तौ यजुषा समक्तौ (१०), इति ।

अश्वयुजाऽश्वयुङ्नाम्ना नक्षत्रेण सहाश्विनौ देवौ तदस्मदीयं कर्मोपयातां प्राप्नुताम् । कीदृशौ सुयमेभिः सुष्ठु नियन्तुं शक्यैरश्वैः शुभं गमिष्ठावतिशयेन शोभनं गन्तारौ स्वं नक्षत्रं स्वकीयमश्वयुगाख्यं नक्षत्रमस्मदीयेन हविषा यजन्तौ पूजयन्तौ मध्वा मधुररसेन हविषा संपृक्तौ संबद्धौ यजुषा मन्त्रेण समक्तौ सम्यक्प्रकाशितौ ।

तत्रैव याज्यामाह—

यौ देवानां भिषजौ हव्यवाहौ । विश्वस्य दूतावमृतस्य गोपौ । तौ नक्षत्रं जुजुषाणोपयाताम् । नमोऽश्विभ्यां कृणुमोऽश्वयुग्भ्याम्, इति ।

यावश्विनौ देवानां भिषजौ चिकित्सकौ हव्यवाहौ हविषो वोढारौ विश्वस्य सर्वस्य जगतो दूतौ दूतवद्धितकारिणावमृतस्य कर्मफलस्य गोपौ रक्षकौ तावुभौ नक्षत्रं स्वकीयमश्वयुगाख्यं जुजुषाणा सेवमानावुपयातां प्राप्नुताम् । अश्विभ्यां देवाभ्यामश्वयुग्भ्यां नक्षत्रशरीराभ्यां च वयं नमो नमस्कार कृणुमः कुर्मः ।

अथ चतुर्दशस्य पुरोनुवाक्यामाह—

अप पाप्मानं भरणीर्भरन्तु । तद्यमो राजा भगवान्विचष्टाम् । लोकस्य राजा महतो महान्हि । सुगं नः पन्थामभयं कृणोतु, इति ।

भरणीर्भरण्याख्यनक्षत्रविग्रहाः पाप्मानमस्मदीयमपभरन्तु विनाशयन्तु । तद्भरण्याख्यं नक्षत्रं भगवानैश्वर्यादिगुणोपेतो यमो राजा विचष्टां विशेषेण पश्यत्वनुगृह्णात्वित्यर्थः । हि यस्मात्कारणादयं यमो महतो लोकस्य महान्राजा तस्मात्कारणान्नोऽस्माकं सुगं सुष्ठु गन्तुं शक्यं पन्थां मार्गमभयं कृणोतु भयरहितं करोतु ।

तत्रैव याज्यामाह—

यस्मिन्नक्षत्रे यम एति राजा । यस्मिन्नेनमभ्यषिञ्चन्त देवाः । तदस्य चित्रꣳ हविषा यजाम । अप पाप्मानं भरणीर्भरन्तु, इति ।

यस्मिन्भरण्याख्ये नक्षत्रे यमो राजैति गच्छति । देवाः सर्वे यस्मिन्भरण्याख्ये नक्षत्र एनं यममभ्यषिञ्चन्ताभिषिक्तवन्तः । अस्य यमस्य संबन्धि चित्रमाश्चर्यकरं तद्भरण्याख्यं नक्षत्रं हविषा यजाम । अपपत्यादि पूर्ववत् ।

यमनक्षत्राणां याज्यानुवाक्या अभिधायामावास्यादेवताया याज्यानुवाक्ययोः प्रतीके दर्शयति—

निवेशनी यत्ते देवा अदंधुः ( ११ ), इति ।

ततार मर्हं आतस्थीर्या यान्तु यज्ञं वाचं स्वस्ति देवा अनुयन्ति सर्वे वाजवत्यौ समक्तौ देवास्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके प्रथमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

" निवेशनी संगमनी वसूनाम् " इति पुरोनुवाक्या । " यत्ते देवा अदधुर्भागधेयम् " इति याज्या । एतौ चोभौ " पूर्णा पश्चात् " इत्यनुवाके व्याख्यातौ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ प्रथमे तृतीयोऽनुवाकः ।

---

द्वितीयेऽनुवाके यमनक्षत्रेष्टीनां याज्यानुवाक्या उक्ताः । अथ तृतीये चान्द्रमसादीष्टीनां याज्यानुवाक्या उच्यन्ते । तत्र चान्द्रमसेष्टौ याज्यानुवाक्ययोः प्रतीके दर्शयति—

नवो नवो भवति जायमानो यमादित्या अंशुमाप्याययन्ति, इति ।

" नवो नवः " इति पुरोनुवाक्या । " यमादित्याः " इति याज्या । एतच्चोभयं " नवो नवो भवति " इत्यनुवाके व्याख्यातम् ।

अथाहोरात्रेष्टौ पुरोनुवाक्यामाह—

ये विरूपे समनसा संव्ययन्ती । समानं तन्तुं परितातनाते । विभू प्रभू अनुभू विश्वतो

हुवे । ते नो नक्षत्रे हवमागमेतम्, इति ।

विरूपे शुक्लकृष्णवर्णतया परस्परविलक्षणे समनसा समानमनस्के संव्ययन्ती समन्तादाच्छादयन्त्यौ यथा शुक्लकृष्णे वस्त्रे शरीरमाच्छादयतस्तद्वदेते सर्वं जगदाच्छादयतः । समानमेकरूपं तन्तुं तायमानं यज्ञं संवत्सरं वा परितातनाते परितो विस्तारयतो विभू व्याप्तिमत्यौ प्रभू शक्तियुक्ते अनुभू अनुभवयोग्ये । तादृश्यौ देवते अहं विश्वतो हुवे । ते युवां नक्षत्रे केनचिन्नक्षत्रविशेषेण युक्तेऽनुष्ठानदिने नोऽस्मदीयं हवं यज्ञं प्रत्यागमेनमागच्छतम् ।

तत्रैव याज्यामाह—

वयं देवी ब्रह्मणा संविदानाः । सुरत्नासो देववीतिं दधानाः ।अहोरात्रे हविषा वर्धयन्तः ।
अति पाप्मानमतिमुक्त्या गमेम, इति ।

वयं यजमाना ब्रह्मणा मन्त्रेण संविदाना ऐकमत्यं गताः सुरत्नासः शोभनरत्नसदृशेन हविराख्येन(ण) युक्ता देववीतिं देवानामशनं दधानाः संपादयन्तोऽहोरात्रे देवी देव्यावनेन हविषा वर्धयन्तः । पाप्मानमस्मदीयमतिगमेमातिक्रम्य गच्छेम । केन साधनेनातिमुक्त्याऽत्यन्तमोचनसमर्थेन कर्मणा ।

अथोषोदेवताके यागे पुरोनुवाक्यामाह—

प्रत्युवदृश्यायती (१) । व्युच्छन्ती दुहिता
दिवः । अपो मही वृणुते चक्षुषा, इति ।

इयमुषा अदर्शि दृश्यते । उ शब्दोऽवधारणार्थो दृश्यत एव । कीदृश्युषाः प्रत्यायती प्रतिदिनमागच्छन्ती व्युच्छन्ती प्रभातं कुर्वती दिवो दुहिता द्युलोकस्य दुहितृस्थानीया मही सर्वप्रजोपकारेण महती । सेयमेतादृशी सती चक्षुषा प्रकाशेनापो वृणुतेऽनुष्ठीयमानं कर्माऽऽवृणोति प्रकाशयतीत्यर्थः ।

तत्रैव याज्यामाह—

तमो ज्योतिष्कृणोति सूनरी । उदुस्रियाः
सचते सूर्यः । सचा उद्यन्नक्षत्रमर्चि-

 

मतु । तवेदुंषो व्युषि सूर्यस्य च, इति ।

सूनरी सुष्ठु सर्वव्यवहाराणां नेत्री उषःकाले हि सर्वे प्रतिबुध्य व्यवहरन्ति । तादृशीयमुषारात्रमो ज्योतिः कृणोति तमसा व्याप्तं जगत्प्रकाशेन व्याप्तं करोति । तदानीं सूर्यं उस्रिया रश्मीनुत्सचत उद्गतत्वेन संबद्धान्करोति प्रसारयतीत्यर्थः । हे उषस्तवेत्तव च सूर्यस्य च सचा सहैव व्युषि व्युष्टौ प्रादुर्भावे सत्युद्यन्नक्षत्र-मुदितेन नक्षत्रेण सदृशं दिनमार्चिमत्प्रकाशोपेतं भवति ।

अथ नक्षत्रचरोः पुरोनुवाक्यामाह–

सं भक्तेन गमेमहि । तन्नो नक्षत्रमर्चिमतु । भानु-मत्तेज उच्चरतु । उप यज्ञमिहाऽऽगमतु (२) इति ।

भक्तेनानेन हविर्लक्षणेन संगमेमहि वयं संगता भूयास्म कर्मानुतिष्ठामेत्यर्थः । यन्नक्षत्रमुद्दिश्य वयं कर्म कुर्मो नोऽस्मदीयं तन्नक्षत्रमर्चिमदर्चनयुक्तं भानुमद्र-श्मियुक्तं तेजस्तेजस्वच्छरीरकान्तियुक्तमित्यर्थः । तथाविधमुच्चरदुदयं गच्छदिह देवयजनदेशेऽस्मदीयं यज्ञमुपागमदुपागच्छत् ।

तत्रैव याज्यामाह–

प्र नक्षत्राय देवाय । इन्द्रायेन्दुꣳ हवामहे । स नः सविता सुवत्सनिम् । पुष्टिदां वीरवत्तमम्, इति ।

इन्द्राय परमैश्वर्ययुक्ताय नक्षत्राख्याय देवायेन्दुममृतसमानं हविः प्रकर्षेण हवामहे जुहुमः । सोऽयं नक्षत्रदेवः सविता कर्मणि प्रेरकः सन्पुष्टिदां पुष्टिप्रदं वीरवत्तममतिशयेन वीरैः पुत्रैर्युक्तं सनिं दातव्यं धनं नोऽस्मभ्यं सुवत्प्रेरयतु ददात्वित्यर्थः ।

अथ सौर्ये चरौ याज्यानुवाक्ययोः प्रतीके दर्शयति—

उदु त्यं चित्रम्, इति ।

"उदुत्यं जातवेदसम्" इति पुरोनुवाक्या । "चित्रं देवानाम्" इति याज्या । एतच्चोभयम् "उदु त्यं जातवेदसम्" इत्यनुवाके व्याख्यातम् ।

अथाऽऽदित्यचरौ याज्यानुवाक्ययोः प्रतीके दर्शयति—

अदितिर्न उरु ष्यतु महीमू षुमातरम्, इति ।

" अदितिर्नः " इति पुरोनुवाक्या । " महीमू षु मातरम् " इति याज्या । एतच्चोभयं " वैश्वानरो न ऊत्या " इत्यत्र व्याख्यातम् ।

अथ वैष्णवचरौ याज्यानुवाक्ययोः प्रतीके दर्शयति—

इदं विष्णुः प्र तद्विष्णुः, इति ।

"इदं विष्णुर्विचक्रमे" इति पुरोनुवाक्या । "प्र तद्विष्णुः" इति याज्या । तत्राऽऽद्या "युञ्जते मनः" इत्यत्र व्याख्याता । द्वितीया " जुष्टी नरः " इत्यत्र व्याख्याता । तदेवं वक्ष्यमाणानुवाकेषु विधास्यमानानामिष्टीनां याज्यानुवाक्या उक्ताः ।

अथ शाखान्तरोक्तस्याऽऽग्नेयस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

अग्निर्मूर्धा भुवः, इति ।

" अग्निर्मूर्धा दिवः ककुत् " इति पुरोनुवाक्या । "भुवो यज्ञस्य रजसश्च" इति याज्या । एतच्चोभयमग्निकाण्डे व्याख्यातम् ।

अथ शाखान्तरोक्तानुमतिचरौ याज्यानुवाक्ययोः प्रतीके दर्शयति—

अनु नोऽद्यानुमतिरन्विदनुमते त्वम्, इति ।

" अनु नोऽद्य " इति पुरोनुवाक्या । "अन्विदनुमते त्वम्" इति याज्या । एतच्चोभयम् " इदं वामास्ये हविः " इत्यत्र व्याख्यातम् । एतच्च शाखान्तरीयमिष्टिद्वयं सर्वासु नक्षत्रेष्टिषु संचरति । तथा च बोधायनेनोक्तम्—"आग्नेयमष्टाकपालमनुमत्यै चरुमिति सर्वत्रानुषजति " इति । अग्निर्मूर्धा भुवोऽनु नोऽद्यानुमतिरन्विदनुमते त्वमिति संचरयोर्याज्यानुवाक्ये " इति च ।

अथ सर्वासु काम्येष्टिषु स्विष्टकृतः संयाज्ययोः प्रतीके दर्शयति—

हव्यवाहꣳ स्विष्टम्, इति ।

आ यस्त्यंगमति नष्टम् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके प्रथमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

"हव्यवाहमभिमातिषाहम्" इति पुरोनुवाक्या। "स्विष्टमग्ने अभि तत्पृणाहि" इति याज्या। एतच्चोभयं "जुष्टो दमूनाः" इत्यत्र व्याख्यातम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

अथ प्रथमे चतुर्थोऽनुवाकः।

---

तृतीयेऽनुवाके चान्द्रमसेष्ट्यादीनां याज्यानुवाक्या उक्ताः। अथ चतुर्थे देवनक्षत्राणामिष्टयो विधीयन्ते। तत्र प्रथमनक्षत्रस्येष्टिं विधातुं प्रस्तौति—

अ॒ग्निर्वा अ॑कामयत। अ॒न्ना॒दो दे॒वाना॑ꣳ स्या॒मिति॑। स ए॒तम॒ग्नये॒ कृत्ति॑काभ्यः पु॒रो॒डा॒श॑म॒ष्टाक॑पालं॒ निर॑वपत्। ततो॒ वै सो॑ऽन्ना॒दो दे॒वाना॑मभवत्। अ॒ग्निर्वै दे॒वाना॑मन्ना॒दः, इति।

अस्मिन्कल्पे सर्वेषां प्राणिनां दाहपाकप्रकाशकारी योऽयमग्निर्दृश्यते सोऽयमग्निः पूर्वस्मिन्कल्पे मनुष्यः सन्देवत्वपदप्रापकं कर्मानुष्ठायास्मिन्कल्प एतज्जन्म लब्धवान्। अतः पूर्वस्मिन्कल्पे स मनुष्यो भाविनीं संज्ञामाश्रित्याग्निरिति व्यपदिश्यते। यथा मृत्तिकां घटं कुरु तन्तून्पटं कुर्वित्यादौ भाविनीं संज्ञामाश्रित्य व्यवहारस्तद्वत्। स चाग्निशब्देन व्यवह्रियमाणो मनुष्यः कर्माधिकारी सन्नेवमकामयत। अहं जन्मान्तरे देवानां मध्ये बह्वन्नभक्षकः स्यामित्येवं कामयमानः स मनुष्यस्तस्मिन्कल्पे वर्तमानाय नक्षत्रस्वामिनेऽग्नये कृत्तिकानक्षत्राय च मिलित्वा पुरोडाशमष्टाकपालमेतं निरवपत्। सोऽपि नक्षत्रस्वामी वह्निस्ततः पूर्वस्मिन्कल्पे मनुष्य एव सन्विशिष्टं कर्मानुष्ठायोत्तरकल्पे नक्षत्रस्वामिरूपं वह्नित्वं प्राप्तः। एवं सत्यग्निरग्नये निरवपदित्यत्र न काऽप्यनुपपत्तिः। अनेनैव न्यायेन वक्ष्यमाणास्वपीष्टिषु यजमानदेवतयोरेकविधं नाम कल्पभेदेन व्यवस्थापनीयम्। ततो निर्वापात्स यजमानरूपोऽग्निः कल्पान्तरे देवानां मध्ये बह्वन्नभक्षकोऽभवत्। अग्निरेव सर्वान्नभक्षक इत्येतल्लोके प्रसिद्धम्।

---

१ क. साग्नेर्दं।

अथेष्टिं विधत्ते—

यथा ह वा अग्निर्देवानामन्नादः । एवꣳ ह वा एष मनुष्याणां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद, इति ।

यो यजमान एतेनाग्निकृत्तिकादेवताकेन हविषा यागं करोति सोऽयं मनुष्याणां मध्ये रोगरहितोऽन्नभक्षको भवति । यथाऽग्निर्देवानां मध्येऽन्नभक्षकस्तद्वद्योऽपि चैतत्कर्मोक्तप्रकारेण वेत्ति सोऽपि वेदिता यजमानवदन्नादो भवति ।

अथ प्रधानहोमादूर्ध्वमुपहोमान्विधत्ते—

सोऽत्र जुहोति । अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा । अम्बायै स्वाहा दुलायै स्वाहा । नितत्न्यै स्वाहा अभ्रयन्त्यै स्वाहा । मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा । चुपुणीकायै स्वाहेति ( १ ), इति ।

यः पूर्वोक्तेन हविषा यजते स यजमानोऽस्मिन्कर्मणि " अग्नये स्वाहा " इत्यादिभिर्नवभिर्मन्त्रैरुपहोमाञ्जुहुयात् । कृत्तिकेति सप्तानां नक्षत्रमूर्तीनां साधारणं नाम । अम्बादुलादीनि विशेषनामानि ।

अथ द्वितीयनक्षत्रस्येष्टिं विधातुं प्रस्तौति—

प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन् । तासाꣳ रोहिणीमभ्यध्यायत् । सोऽकामयत । उप मा वर्तेत । समेनया गच्छेयेति । स एतं प्रजापतये रोहिण्यै चरुं निरवपत् । ततो वै सा तमुपावर्तत । समेनयाऽगच्छत, इति ।

अत्र प्रजापतिरिति भाविनी संज्ञा न भवति किंतु वर्तमान एव प्रजापतिः सृष्टेरभिधानात् । तेन सृष्टाः सर्वाः प्रजाः पराङ्मुखा एवागच्छन् । तासां प्रजानां मध्ये रोहिणीनक्षत्रतनुमभिलक्ष्य प्रजापतिरध्यायन्निरन्तरं ध्यानमकरोत् ।

स प्रजापतिः कदाचिदेवं कामितवान् । इयं रोहिणी मां प्रत्युपावर्ततामहं चैनया रोहिण्या संगतो भवेयमित्येवं कामयमानः स प्रजापतिरतीतकल्पगताय प्रजापतये तथाविधायै रोहिण्यै चैतं चरुं निरुप्तवान् । यद्यप्यतीतकल्पगते प्रजापतिरोहिण्यौ च नेदानीं विद्येते तथाऽपि तदुद्देशेन क्रियमाणं कर्म फलसमर्थं भवति । न चात्र विस्मेतव्यं सर्ववसुप्रदायिनोऽन्तर्यामिणः सर्वत्र विद्यमानत्वात् । ततः कर्मसामर्थ्यादेव सा रोहिणी तं प्रजापतिं प्रत्युपावर्तत । स च प्रजापतिरेनया रोहिण्या संगतोऽभूत् ।

अथेष्टिं विधत्ते—

उप॑ ह॒ वा ए॑नं प्रि॒यमा॑वर्तते । सं
प्रि॒येण॑ गच्छते । य ए॒तेन॑ ह॒विषा
यज॑ते । उ चैनदे॒वं वेद॑, इति ।

प्रियस्य वस्तुन उपावर्तनं प्राप्तिः । संगमस्तद्भोगः । यजनवेदनयोरेतत्फलं द्रष्टव्यम् ।

उपहोमान्विधत्ते—

सोऽत्र॑ जुहोति । प्र॒जाप॑तये॒ स्वाहा॑
रोहि॒ण्यै स्वाहा॑ । रोच॑मानायै॒ स्वाहा॑
प्र॒जाभ्य॒ः स्वाहेति॑ ( २ ), इति ।

अथ तृतीयस्य नक्षत्रस्येष्टिं विधत्ते—

सोमो॒ वा अ॑कामयत । ओष॑धीना॒ꣳ राज्य॑म॒भिज॑-
येय॒मिति॑ । स ए॒तꣳ सोमा॑य मृगशी॒र्षाय॑ श्यामा॒कं
च॒रुं पय॑सि॒ निर॑वपत् । ततो॒ वै स ओष॑धीना॒ꣳ
रा॒ज्यम॒भ्य॑जयत् । समा॒नाना॒ꣳ ह॒ वै रा॒ज्यम॒भि-
ज॑यति । य ए॒तेन॑ ह॒विषा॒ यज॑ते । य उ चैनदे॒वं वेद॑ ।
सोऽत्र॑ जुहोति । सोमा॑य॒ स्वाहा॑ मृगशी॒र्षा॑य॒ स्वाहा॑ ।

इन्वकाभ्यः स्वाहौषधीभ्यः स्वाहा । राज्याय स्वाहाऽभिजित्यै स्वाहेति (३), इति ।

अत्र भाविन्या संज्ञया वर्तमानसंज्ञया वा सोमशब्दो योजयितुं शक्यते । एवमुत्तरत्रापि यत्र यद्योग्यं तत्र तद्योजनीयम् । प्रस्तावेष्टिविध्युपहोमवाक्यानि पूर्ववद्विभज्य योजनीयानि । मृगशीर्षमिति नक्षत्रमूर्तिसमूहनाम । इन्वका इति मूर्तिविशेषाणां नाम । ओषधिराज्याभिजितिशब्दास्तत्तदभिमानिदेवतावाचिनः ।

अथ चतुर्थस्येष्टिं विधत्ते—

रुद्रो वा अकामयत । पशुमान्त्स्यामिति । स एतꣳ रुद्रायाऽऽर्द्रायै प्रैयंगवं चरुं पयसि निरवपत् । ततो वै स पशुमानभवत् । पशुमान्ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । रुद्राय स्वाहाऽऽर्द्रायै स्वाहा । पिन्वमानायै स्वाहा पशुभ्यः स्वाहेति (४), इति ।

आर्द्रा नक्षत्रस्य प्राणाप्यायनकरी मूर्तिः पिन्वमाना । अत्रापि भागत्रयं पूर्ववद्व्याख्येयम् ।

अथ पञ्चमस्येष्टिं विधत्ते—

ऋक्षा वा इयमलोमकाऽऽसीत् । साऽकामयत । ओषधीभिर्वनस्पतिभिः प्रजायेयेति । सैतमदित्यै पुनर्वसुभ्यां चरुं निरवपत् । ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत । प्रजायते ह वै प्रजया पशुभिः । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति ।

अदि॑त्यै॒ स्वाहा॒ पुन॑र्वसुभ्याम् । स्वाहा॒ भूत्यै॒
स्वाहा॒ प्रजा॑त्यै॒ स्वाहेति॑ (५), इति ।

इयं पृथिवी पूर्वमलोमकौषध्यादिलोमरहितक्षा¹ स्वरयामाधेयवस्तुशून्या मार्दवरहिता क्रूरा सत्यासीत् । तादृशी भूमिरोषधीभिर्वनस्पतिभिश्च प्रजायेयेति कामयित्वा पूर्वकल्पसिद्धायै भूम्यै पुनर्वसुभ्यां चरुं निरवपत् । अन्यत्पूर्ववद्व्याख्येयम् । आभूतिरदितेरेव बहुभवनसमर्था मूर्तिः । प्रजापतिरुत्पादनसमर्था मूर्तिः ।

अथ षष्ठस्येष्टिं विधत्ते—

बृह॒स्पति॒र्वा अ॑कामयत । ब्र॒ह्म॒व॒र्च॒सी स्या॒मिति॑ ।
स ए॒तं बृह॒स्पत॑ये ति॒ष्या॑य नैवा॒रं च॒रुं पय॑सि॒
निर॑वपत् । ततो॒ वै स ब्र॑ह्मव॒र्च॒स्य॑भवत् । ब्र॒ह्म॒व॒र्च॒सी ह॒ वै भ॑वति । य ए॒तेन॑ ह॒विषा॒ यज॑ते । य
उ॑ चैनदे॒वं वेद॑ । सो॑ऽत्र॒ जु॒होति । बृह॒स्पत॑ये॒
स्वाहा॑ ति॒ष्या॑य॒ स्वाहा॑ । ब्र॒ह्म॒व॒र्च॒सा॑य॒ स्वाहेति॑
(६), इति ।

अवयवं पूर्ववद्व्याख्येयम् ।

अथ सप्तमस्येष्टिं विधत्ते—

दे॒वा॒सु॒राः संय॑त्ता आसन् । ते दे॒वाः स॒र्पेभ्य॑
आश्रे॒षाभ्य॒ आज्ये॑ कर॒म्भं निर॑वपन् ।
ताने॒ताभि॑रे॒व दे॒वता॑भि॒रुपान॑यन् । ए॒ताभि॒र्ह॒
वै दे॒वता॑भि॒र्द्वि॒षन्तं॒ भ्रातृ॑व्य॒मुप॑नयति । य
ए॒तेन॑ ह॒विषा॒ यज॑ते । य उ॑ चैनदे॒वं वेद॑ ।

---

1 क. 'र्क्षमृक्षाऽऽधेयवस्तुशून्या लोमरहिताऽऽर्द्रवर्हिरादिरहिता चाऽऽसी॰ ।

सोऽत्र जुहोति । सर्पेभ्यः स्वाहाऽऽश्रेषाभ्यः स्वाहा ।
दन्दशूकेभ्यः स्वाहेति ( ७ ), इति ।

असुरैः सह युद्धोद्युक्ता देवा असुराणां स्ववशीकरणाय दधिमिश्रयवसक्तुरूपं करम्भशब्दाभिधेयं निरुप्यैताभिः सर्पदेवताभिराश्लेषानक्षत्रदेवताभिश्च करम्भतुष्टाभिस्तानसुरानुपानयन्समीपं प्रापितवन्तः । सर्पाणां मध्ये दंशनशीला दन्दशूकाः । अन्यत्पूर्ववत् ।

अथाष्टमस्येष्टिं विधत्ते—

पितरो वा अकामयन्त । पितृलोक ऋध्नुयामेति ।
त एतं पितृभ्यो मघाभ्यः पुरोडाशं षट्कपालं
निरवपन् । ततो वै ते पितृलोक आर्ध्नुवन् । पितृ-
लोके ह वा ऋध्नोति । य एतेन हविषा यजते ।
य उ चैनदेवं वेद । सोऽत्र जुहोति । पितृभ्यः
स्वाहा मघाभ्यः । स्वाहाऽनघाभ्यः स्वाहा गदाभ्यः ।
स्वाहाऽरुन्धतीभ्यः स्वाहेति ( ८ ), इति ।

मघानक्षत्रस्यैव निष्पापमूर्तयोऽनघा अगदा रोगरहिता मूर्तयोऽरुन्धत्या समाना मूर्तयोऽरुन्धत्यो रोधं प्रति वधमकुर्वत्यः । अन्यत्पूर्ववत् ।

अथ नवमस्येष्टिं विधत्ते—

अर्यमा वा अकामयत । पशुमान्त्स्यामिति ।
स एतमर्यम्णे फल्गुनीभ्यां चरुं निरवपत् ।
ततो वै स पशुमानभवत् । पशुमान्ह वै
भवति । य एतेन हविषा यजते । य उ चैनदेवं

वेद । सोऽत्र जुहोति । अर्यम्णे स्वाहा फल्गुनीभ्याᳪं स्वाहा । पशुभ्यः स्वाहेति (९), इति ।

स्पष्टोऽर्थः ।

अथ दशमस्येष्टिं विधत्ते—

भगो वा अकामयत । भगी श्रेष्ठी देवानाᳪं स्यामिति । स एतं भगाय फल्गुनीभ्यां चरुं निरवपत् । ततो वै स भगी श्रेष्ठी देवानामभवत् । भगी ह वै श्रेष्ठी समानानां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । भगाय स्वाहा फल्गुनीभ्याᳪं स्वाहा । श्रैष्ठ्याय स्वाहेति ( १० ), इति ।

भगित्वमैश्वर्यादिषड्गुणयुक्तत्वम् । श्रेष्ठत्वमतिशयेन प्रशस्तत्वं पूज्यत्वमित्यर्थः । भागत्रयं पूर्ववत् ।

अथैकादशस्येष्टिं विधत्ते—

सविता वा अकामयत । श्रन्मे देवा दधीरन् । सविता स्यामिति । स एतᳪं सवित्रे हस्ताय पुरोडाशं द्वादशकपालं निरवपदाशूनां व्रीहीणाम् । ततो वै तस्मै श्रद्देवा अदधत । सविताऽभवत् । श्रद्ध वा अस्मै मनुष्या दधते । सविता समानानां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सवित्रे स्वाहा हस्ताय । स्वाहा

ददते स्वाहा पृणते । स्वाहा प्रयच्छते
स्वाहा प्रतिगृभ्णते स्वाहेति (११), इति ।

देवाः सर्वे मे मदर्थं श्राद्विश्वासं दधीरन्धारयेयुः, सर्वेष्वपि कार्येषु मां विश्वस्युरित्यर्थः । ततोऽहं सर्वकार्याणां सविता प्रेरको भूयासम् । षष्टिदिनैः शीघ्रं पच्यमाना व्रीहय आशवः । ददते फलं दातुं संपादयित्रे । पृणते न्यूनस्य फलस्य पूर्तिहेतवे । प्रयच्छते फलस्य दात्रे । प्रतिगृभ्णते परैर्दत्तस्य स्वीकर्त्रे । त एते हस्तनक्षत्रस्यैव मूर्तिविशेषाः । अन्यत्पूर्ववत् ।

अथ द्वादशस्येष्टिमाह–

त्वष्टा वा अकामयत । चित्रं प्रजां विन्देयेति ।
स एतं त्वष्ट्रे चित्रायै पुरोडाशमष्टाकपालं
निरवपत् । ततो वै स चित्रं प्रजामविन्दत ।
चित्रँ ह वै प्रजां विन्दते । य एतेन हविषा
यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति ।
त्वष्ट्रे स्वाहा चित्रायै स्वाहा । चैत्राय
स्वाहा प्रजायै स्वाहेति (१२), इति ।

चित्रं नानाविधत्वं यथा भवति तथा पुत्रपौत्रदुहितृदौहित्ररूपेण नानाविधत्वं चित्रानक्षत्रस्य वैचित्र्यापादकं सामर्थ्यं चैत्रम् । शेषं पूर्ववत् ।

अथ त्रयोदशस्येष्टिमाह—

वायुर्वा अकामयत । कामचारमेषु लोकेष्वभिजयेयमिति । स एतद्वायवे निष्ट्यायै गृष्ट्यै
दुग्धं पयो निरवपत् । ततो वै स कामचारमेषु लोकेष्वभ्यजयत् । कामचारँ ह वा एषु
लोकेष्वभिजयति । य एतेन हविषा यजते ।

य उ चैनदेवं वेद । सोऽत्र जुहोति ।
वायवे स्वाहा निष्ट्यायै स्वाहा । कामचा-
राय स्वाहाऽभिजित्यै स्वाहेति (१३), इति ।

कामचारः सर्वत्र निवारकाभावेन स्वेच्छया संचारः । निष्ट्या स्वाती । सकृत्प्रसूता धेनुर्गृष्टिस्तस्याः सकाशाद्दुग्धं यत्पयः क्षीरं तदेवात्र द्रव्यम् । शेषं पूर्ववत् ।

अथ चतुर्दश्यस्येष्टिं विधत्ते––

इन्द्राग्नी वा अकामयेताम् । श्रैष्ठ्यं देवानाम-
भिजयेवेति । तावेतमिन्द्राग्निभ्यां विशा-
खाभ्यां पुरोडाशमेकादशकपालं निरवप-
ताम् । ततो वै तौ श्रैष्ठ्यं देवानामभ्यजय-
ताम् । श्रैष्ठ्यꣳ ह वै समानानामभिजयति ।
य एतेन हविषा यजते । य उ चैनदेवं
वेद । सोऽत्र जुहोति । इन्द्राग्निभ्याꣳ स्वाहा
विशाखाभ्याꣳ स्वाहा । श्रैष्ठ्याय स्वाहाऽ-
भिजित्यै स्वाहेति (१४), इति ।

स्पष्टोऽर्थः ।

देवनक्षत्राणामिष्टिं विधाय पौर्णमासीदेवताया इष्टिं विधत्ते––

अथैतत्पौर्णमास्या आज्यं निर्वपति । कामो वै
पौर्णमासी । काम आज्यम् । कामेनैव कामꣳ
समर्धयति । क्षिप्रमेनꣳ स काम उपनमति ।
येन कामेन यजते । सोऽत्र जुहोति । पौर्णमास्यै
स्वाहा कामाय स्वाहा गत्यै स्वाहेति, इति ।

अग्निः पञ्चदश प्रजापतिः षोडश सोम एकादश रुद्रो दशैकादश बृह-स्पतिर्दश देवासुरा नव पितर एकादशार्यमा भगो दश दश सविता चतुर्दश त्वष्टा वायुरिन्द्राग्नी दश दशाथैतत्पौर्णमास्या अष्टौ पञ्चदश।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके प्रथमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

नक्षत्रवैलक्षण्यद्योतनायाथशब्दः। तिथ्यभिमानिनी देवता पौर्णमासी न तु नक्षत्राभिमानिनी। तस्यां च तिथौ कर्मानुष्ठानेन सर्वकाममाप्त्या पौर्णमास्याः कामरूपत्वमुपचर्यते। आज्यस्य सर्वैः काम्यमानत्वात्कामरूपत्वम्, अतः कामरूपेणाऽऽज्येनैव कामरूपां पौर्णमासीदेवतां समर्धयति परितोषयति। यज-मानो येन कामेन निमित्तभूतेन यजते स कामः क्षिप्रमेवैनं यजमानमुपनमति। गतिः कामानां विनाशोऽगतिरविनाशस्तदभिमानिन्यै देवतायै स्वाहा हुतमिदं हविः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतै-त्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः॥४॥

अथ पञ्चमोऽनुवाकः।

चतुर्थे देवनक्षत्राणामिष्टयो विहिताः। अथ पञ्चमे यमनक्षत्राणामिष्टयो विधीयन्ते। तत्र प्रथमस्येष्टिं विधत्ते—

मित्रो वा अकामयत। मित्रधेयमेषु लोकेष्व-भिजयेयमिति। स एतं मित्रायानूराधेभ्यश्चरुं निरवपत्। ततो वै स मित्रधेयमेषु लोकेष्व-भ्यजयत्। मित्रधेयꣳ ह वा एषु लोकेष्वभि-जयति। य एतेन हविषा यजते। य उ

चैनदेवं वेद । सोऽत्र जुहोति । मित्राय स्वाहाऽनूराधेभ्यः स्वाहा । मित्रधेयाय स्वाहाऽभिजित्यै स्वाहेति ( १ ), इति ।

मित्रेणाऽऽप्तेन पुरुषेण धेयं संपादनीयं धनं मित्रधेयम् । स्पष्टमन्यत् ।

अथ द्वितीयस्येष्टिं विधत्ते—

इन्द्रो वा अकामयत । ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठायै पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम् । ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत् । ज्यैष्ठ्यꣳ ह वै समानानामभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । इन्द्राय स्वाहा ज्येष्ठायै स्वाहा । ज्यैष्ठ्याय स्वाहाऽभिजित्यै स्वाहेति ( २ ), इति ।

ज्यैष्ठ्यमतिशयेन प्रशस्तत्वं वृद्धत्वं च । महाव्रीहयः स्थूलव्रीहयः । स्पष्टमन्यत् ।

अथ तृतीयस्येष्टिं विधत्ते—

प्रजापतिर्वा अकामयत । मूलं प्रजां विन्देयेति । स एतं प्रजापतये मूलाय चरुं निरवपत् । ततो वै स मूलं प्रजामविन्दत । मूलꣳ ह वै प्रजां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । प्रजापतये स्वाहा मूलाय स्वाहा । प्रजायै स्वाहेति ( ३ ), इति ।

अत्र प्रजापतिशब्देन निर्ऋतिर्विवक्ष्यते । यद्यप्यसावुग्रदेवता तथाऽपि हविषा तुष्टा सती न बाधते किंत्वनिष्टनिवारणेन पालयति । तस्मात्प्रजापतित्वमुपपन्नम् । कुलाचारस्य निर्वाहिका पुत्रादिरूपा प्रजा मूलमिति विशेष्यते । तथा स्वभृत्येष्वास्था प्रजा मूलमिति लोकैर्व्यवह्रियते । तादृशीमुभयविधां प्रजां लभेयेति निर्ऋतेः कामना । स्पष्टमन्यत् ।

अथ चतुर्थस्येष्टिं विधत्ते—

आपो वा अकामयन्त । समुद्रं काममभिजयेमेति । ता एतमद्भ्योऽषाढाभ्यश्चरुं निरवपन् । ततो वै ताः समुद्रं काममभ्यजयन् । समुद्रꣳ ह वै काममभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अद्भ्यः स्वाहाऽषाढाभ्यः स्वाहा । समुद्राय स्वाहा कामाय स्वाहा । अभिजित्यै स्वाहेति (४), इति ।

योऽयं समुद्रो जलराशिस्तमेतं जलराशिं काममभिजयेम स्वेच्छया वशी कुर्म इत्येवमब्देवतानां कामना । यजमानस्तु समुद्रस्यातिप्रभूतत्वेन समुद्रसदृशं काममभिलषितार्थमभिजयति । स्पष्टमन्यत् ।

अथ पञ्चमस्येष्टिं विधत्ते—

विश्वे वै देवा अकामयन्त । अनपजय्यं जयेमेति । त एतं विश्वेभ्यो देवेभ्योऽषाढाभ्यश्चरुं निरवपन् । ततो वै तेऽनपजय्यमजयन् । अनपजय्यꣳ ह वै जयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति ।

विश्वेभ्यो देवेभ्यः स्वाहाऽषाढाभ्यः स्वाहा ।
अनपजय्याय स्वाहा जित्यै स्वाहेति (५), इति ।

जेतुमशक्यः शत्रुरनपजय्यस्तं जयेमेति विश्वेषां देवानां कामना । तस्य जेतुमशक्यस्य शत्रोरभिमानी देवोऽप्यनपजय्यस्तस्य जयाभिमानी देवो जितिः । स्पष्टमन्यत् ।

अथ षष्ठस्येष्टिं विधत्ते—

ब्रह्म वा अकामयत । ब्रह्मलोकमभिजयेय-
मिति । तदेतं ब्रह्मणेऽभिजिते चरुं निरवपत् ।
ततो वै तद्ब्रह्मलोकमभ्यजयत् । ब्रह्मलोकꣳ ह
वा अभिजयति । य एतेन हविषा यजते ।
य उ चैनदेवं वेद । सोऽत्र जुहोति ।
ब्रह्मणे स्वाहाऽभिजिते स्वाहा । ब्रह्मलोकाय
स्वाहाऽभिजित्यै स्वाहेति (६), इति ।

ब्रह्मलोकः सत्यलोकस्तत्स्वामित्वं कामयमानो ब्राह्मणत्वजातियुक्तः पुरुषो ब्रह्मशब्देन विवक्षितः । अभिजित्संज्ञकं चोत्तराषाढाश्रवणयोर्मध्यवर्ति नक्षत्रं तदभिमानिदेवस्यापि ब्रह्मेति नामधेयम् । स्पष्टमन्यत् ।

अथ सप्तमस्येष्टिं विधत्ते—

विष्णुर्वा अकामयत । पुण्यꣳ श्लोकꣳ शृण्वीय ।
न मा पापी कीर्तिरागच्छेदिति । स एतं
विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत् ।
ततो वै स पुण्यꣳ श्लोकमशृणुत । नैनं
पापी कीर्तिरागच्छत् । पुण्यꣳ ह वै श्लोकꣳ
शृणुते । नैनं पापी कीर्तिरागच्छति । य

संज्ञामेवाऽऽसामेतत्सामानं व्याचष्टे। प्रोक्षिताः स्थेत्याह (१)। तेनाऽऽपः प्रोक्षिताः। अग्निर्देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। स वनस्पतीन्प्राविशत्। कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह। अग्नय एवैनं जुष्टं करोति। अथो अग्नेरेव मेधमवरुन्धे। वेदिरसि बर्हिषे त्वा स्वाहेत्याह। प्रजा वै बर्हिः। पृथिवी वेदिः (२)। प्रजा एव पृथिव्यां प्रतिष्ठापयति। बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेत्याह। प्रजा वै बर्हिः। यजमानः स्रुचः। यजमानमेव प्रजासु प्रतिष्ठापयति। दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षति। एभ्य एवैनल्लोकेभ्यः प्रोक्षति। अथ ततः सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति। प्रजा वै बर्हिः। यथा सूत्यै काल आपः पुरस्ताद्यन्ति (३)। तादृगेव तत्। स्वधा पितृभ्य इत्याह। स्वधाकारो हि पितृणाम्। ऊर्ग्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति संतत्यै। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। मासा वा ओषधीर्वर्धयन्ति। मासाः पचन्ति समृद्ध्यै। अनतिस्कन्दह पर्जन्यो वर्षति। यत्रैतदेवं क्रियते (४)। ऊर्जा पृथिवीं गच्छतेत्याह। पृथिव्यामेवोर्जं दधाति। तस्मात्पृथिव्या ऊर्जा भुञ्जते। ग्रन्थिं विस्रंसयति। प्रजनयत्येव तत्। ऊर्ध्वं प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति। तस्मात्प्राचीनꣳ रेतो धीयते।

प्रतीचीः प्रजा जायन्ते। विष्णोः स्तूपोऽसीत्याह। यज्ञो वै विष्णुः (५)। यज्ञस्य धृत्यै। पुरस्तात्प्रस्तरं गृह्णाति। मुख्यमेवैनं करोति। इयन्तं गृह्णाति। प्रजापतिना यज्ञमुखेन संमितम्। इयन्तं गृह्णाति। यज्ञपरुषा संमितम्। इयन्तं गृह्णाति। एतावद्वै पुरुषे वीर्यम्। वीर्यसंमितम् (६)। अपरिमितं गृह्णाति। अपरिमितस्यावरुद्ध्यै। तस्मिन्पवित्रे अपिसृजति। यजमानो वै प्रस्तरः। प्राणापानौ पवित्रे। यजमान एव प्राणापानौ दधाति। ऊर्णाम्रदसं त्वा स्तृणामीत्याह। यथायजुरेवैतत्। स्वासस्थं देवेभ्य इत्याह। देवेभ्य एवैनत्स्वासस्थं करोति (७)। बर्हिः स्तृणाति। प्रजा वै बर्हिः। पृथिवी वेदिः। प्रजा एव पृथिव्यां प्रतिष्ठापयति। अनतिदृश्नꣳ स्तृणाति। प्रजयैवैनं पशुभिरनतिदृश्नं करोति। धारयन्प्रस्तरं परिधीन्परिदधाति। यजमानो वै प्रस्तरः। यजमान एव तत्स्वयं परिधीन्परिदधाति। गन्धर्वोऽसि विश्वावसुरित्याह (८)। विश्वमेवाऽऽयुर्यजमाने दधाति। इन्द्रस्य बाहुरसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति। मित्रावरुणौ त्वोत्तरतः परिधत्तामित्याह। प्राणापानौ मित्रावरुणौ। प्राणापानावेवास्मिन्दधाति। सूर्यस्त्वा पुरस्तात्पात्वित्याह। रक्षसामपहत्यै। कस्याश्चिदभिशस्त्या इत्याह। अपरिमितादे-

वैनं पाति ( ९ ) । वीतिहोत्रं त्वा कव इत्याह । अग्निमेव होत्रेण समर्धयति । द्युमन्तꣳ समिधीमहीत्याह समिद्ध्यै । अग्ने बृहन्तमध्वर इत्याह वृद्ध्यै । विशो यन्त्रे स्थ इत्याह । विशां यत्यै । उदीचीनाग्रे निदधाति प्रतिष्ठित्यै । वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेत्याह । देवतानामेव सदने प्रस्तरꣳ सादयति । जुहूरसि घृताची नाम्नेत्याह ( १० ) । असौ वै जुहूः । अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । तासामेतदेव प्रियं नाम । यद्घृताचीति । यद्घृताचीत्याह । प्रियेणैवैना नाम्ना सादयति । एता असदन्त्सुकृतस्य लोक इत्याह । सत्यं वै सुकृतस्य लोकः । सत्य एवैनाः सुकृतस्य लोके सादयति । ता विष्णो पाहीत्याह । यज्ञो वै विष्णुः । यज्ञस्य धृत्यै । पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमित्याह । यज्ञाय यजमानायाऽऽत्मने । तेभ्य एवाऽऽशिषमाशास्तेऽनार्त्यै ( ११ ) ।

स्थेत्याह पृथिवी वेदिर्यन्ति क्रियते विष्णुर्वीर्यसंमितं करोत्याह पाति नाम्नेत्याह लोके सादयति षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके तृतीयाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

अथ तृतीये सप्तमोऽनुवाकः ।

---

अग्निना वै होत्रा । देवा असुरानभ्यभवन् । अग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै । एकविंशतिमिध्मदारूणि भवन्ति । एकविंशो वै पुरुषः । पुरुषस्याऽऽप्त्यै । पञ्चदशेध्मदारूण्यभ्यादधाति । पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशः संवत्सर आप्यते । त्रीन्परिधीन्परिदधाति (१) । ऊर्ध्वे समिधावादधाति । अनूयाजेभ्यः समिधमतिशिनष्टि । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति । वेदेनोपवाजयति । प्राजापत्यो वै वेदः । प्राजापत्यः प्राणः । यजमान आहवनीयः । यजमान एव प्राणं दधाति (२) । त्रिरुपवाजयति । त्रयो वै प्राणाः । प्राणानेवास्मिन्दधाति । वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयति । यज्ञो वै प्रजापतिः । यज्ञमेव प्रजापतिं मुखत आरभते । अथो प्रजापतिः सर्वा देवताः । सर्वा एव देवताः प्रीणाति । अग्निमग्नीत्त्रिस्त्रिः संमृड्ढीत्याह । त्र्यावृद्धि यज्ञः (३) । अथो रक्षसामपहत्यै । परिधीन्त्संमार्ष्टि । पुनात्येवैनान् । त्रिस्त्रिः संमार्ष्टि । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय । अथो एते वै देवाश्वाः । देवाश्वानेव तत्संमार्ष्टि । सुवर्गस्य लोकस्य समष्ट्यै । आसीनोऽन्यमाघारमाघारयति (४) । तिष्ठन्नन्यम् । यथाऽनो वा रथं वा युञ्ज्यात् । एव-

मेव तदध्वर्युर्यज्ञं युनक्ति। सुवर्गस्य लोकस्याभ्यूढ्यै। वहन्त्येनं ग्राम्याः पशवः । य एवं वेद। भुवनमसि विप्रथस्वेत्याह। यज्ञो वै भुवनम्। यज्ञ एव यजमानं प्रजया पशुभिः प्रथयति। अग्ने यष्टरिदं नम इत्याह (५) । अग्निर्वै देवानां यष्टा। य एव देवानां यष्टा । तस्मा एव नमस्करोति। जुह्वेह्यग्निस्त्वाऽऽह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविताऽऽह्वयति देवयज्याया इत्याह। आग्नेयी वै जुहूः। सावित्र्युपभृत्। ताभ्यामेवैने प्रसूत आदत्ते। अग्नाविष्णू माऽऽवामवक्रमिषमित्याह । अग्निः पुरस्तात्। विष्णुर्यज्ञः पश्चात् (६)। ताभ्यामेव प्रति प्रोच्यात्याक्रामति । विजिहाथां मा मा संताप्तमित्याहाहिंसायै । लोकं मे लोककृतौ कृणुतमित्याह। आशिषमेवैतामाशास्ते। विष्णोः स्थानमसीत्याह। यज्ञो वै विष्णुः। एतत्खलु वै देवानामपराजितमायतनम् । यद्यज्ञः । देवानामेवापराजित आयतने तिष्ठति। इत इन्द्रो अकृणोद्वीर्याणीत्याह (७)। इन्द्रियमेव यजमाने दधाति। समारभ्योर्ध्वो अध्वरो दिविस्पृशमित्याह वृद्ध्यै। आघारमाघार्यमाणमनुसमारभ्य। एतस्मिन्काले देवाः सुवर्गं लोकमायन्। साक्षादेव यजमानः सुवर्गं लोकमेति। अथो समृद्धेनैव यज्ञेन यजमानः सुवर्गं लोकमेति। अह्रुतो यज्ञो यज्ञपतेरित्याहानार्त्यै। इन्द्रावान्त्स्वा-

ह्येत्याह । इन्द्रियमेव यजमाने दधाति । बृहद्भा इत्याह (८)। सुवर्गो वै लोको बृहद्भाः । सुवर्गस्य लोकस्य समष्ट्यै । यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । प्राण आघारः । यत्सꣳस्पर्शयेत् । भ्रातृव्येऽस्य प्राणं दध्यात् । असꣳस्पर्शयन्नत्याक्रामति । यजमान एव प्राणं दधाति । पाहि माऽग्ने दुश्चरितादामा सुचरिते भजेत्याह (९)। अग्निर्वाव पवित्रम् । वृजिनमनृतं दुश्चरितम् । ऋजुकर्मꣳ सत्यꣳ सुचरितम् । अग्निरेवैनं वृजिनमनृताद्दु-श्चरितात्पाति । ऋजुकर्मे सत्ये सुचरिते भजति । तस्मा-देवमाशास्ते । आत्मनो गोपीथाय । शिरो वा एतद्यज्ञस्य । यदाघारः । आत्मा ध्रुवा (१०)। आघारमाघार्य ध्रुवाꣳ समनक्ति । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति । द्विः समनक्ति । द्वौ हि प्राणापानौ । तदाहुः । त्रिरेव समञ्ज्यात् । त्रिधातु हि शिर इति । शिर इवैतद्यज्ञस्य । अथो त्रयो वै प्राणाः । प्राणानेवास्मिन्दधाति । मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामित्याह । ज्योतिरेवास्मा उपरिष्टा-द्दधाति । सुवर्गस्य लोकस्यानुख्यात्यै (११)।

परिदधाति प्राणं दधाति हि यज्ञो धारयति नम इत्याह पश्चाद्वीर्याणीत्याह भा इत्याह भजेत्याह ध्रुवैवास्मिन्दधाति त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके तृतीयाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

अथ तृतीयेऽष्टमोऽनुवाकः ।

---

धिष्णिया वा एते न्युप्यन्ते । यद्ब्रह्मा । यद्धोता । यदध्वर्युः । यदग्नीत् । यद्यजमानः । तान्यदन्तरेयात् । यजमानस्य प्राणान्त्संकर्षेत् । प्रमायुकः स्यात् । पुरोडाशमपगृह्य संचरत्यध्वर्युः (१) । यजमानायैव तल्लोकꣳ शिꣳषति । नास्य प्राणान्त्संकर्षति । न प्रमायुको भवति । पुरस्तात्प्रत्यङ्ङासीनः । इडाया इडामादधाति । हस्त्याꣳ होत्रे । पशवो वा इडा । पशवः पुरुषः । पशुष्वेव पशून्प्रतिष्ठापयति । इडायै वा एषा प्रजातिः (२) । तां प्रजातिं यजमानोऽनु प्रजायते । द्विरङ्गुलावनक्ति पर्वणोः । द्विपाद्यजमानः प्रतिष्ठित्यै । सकृदुपस्तृणाति । द्विरादधाति । सकृदभिघारयति । चतुः संपद्यते । चत्वारि वै पशोः प्रतिष्ठानानि । यावानेव पशुः । तमुपह्वयते (३) । मुखमिव प्रत्युपह्वयेत । संमुखानेव पशूनुपह्वयते । पशवो वा इडा । तस्मात्साऽन्वारभ्या । अध्वर्युणा च यजमानेन च । उपहूतः पशुमानसानीत्याह । उप ह्येनौ ह्वयते होता । इडायै देवतानामुपहवे । उपहूतः पशुमान्भवति । य एवं वेद (४) । यां वै हस्त्यामिडामादधाति । वाचः सा भागधेयम् । यामुपह्वयते । प्राणानाꣳ सा । वाचं चैव प्राणाꣳश्चावरुन्धे । अथ वा एतर्ह्युपहूतायामिडायाम् । पुरोडाशस्यैव बर्हि-

षदो मीमाꣳसा । यजमानं देवा अब्रुवन् । हविर्नो निर्वपेति । नाहमभागो निर्वप्स्यामीत्यब्रवीत् (५) । न मयाऽभागयाऽनु वक्ष्यथेति वागब्रवीत् । नाहमभागा पुरोनुवाक्या भविष्यामीति पुरोनुवाक्या । नाहमभागा याज्या भविष्यामीति याज्या । न मया भागेन वषट्करिष्यथेति वषट्कारः । यद्यजमानभागं निधाय पुरोडाशं बर्हिषदं करोति । तानेव तद्भागिनः करोति । चतुर्धा करोति । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति । बर्हिषदं करोति (६) । यजमानो वै पुरोडाशः । प्रजा बर्हिः । यजमानमेव प्रजासु प्रतिष्ठापयति । तस्मादस्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति । माꣳसेनान्याः । अथो खल्वाहुः । दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुध्यन्ते । यत्पुरोडाशं बर्हिषदं करोतीति । चतुर्धा करोति । चत्वारो ह्येते हविर्यज्ञस्यर्त्विजः ( ७ ) । ब्रह्मा होताऽध्वर्युरग्नीत् । तमभिमृशेत् । इदं ब्रह्मणः । इदꣳ होतुः । इदमध्वर्योः । इदमग्नीध इति । यथैवादः सौम्येऽध्वरे । आदेशमृत्विग्भ्यो दक्षिणा नीयन्ते । तादृगेव तत् । अग्नीधे प्रथमाया दधाति ( ८ ) । अग्निमुखा ह्यृद्धिः । अग्निमुखामेवर्द्धिं यजमान ऋध्नोति । सकृदुपस्तीर्य द्विरादधत् । उपस्तीर्य द्विरभिघारयति । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति । वेदेन ब्र-

ह्मणों ब्रह्मभागं परिहरति । प्राजापत्यो वै वेदः । प्राजापत्यो ब्रह्मा (९) । सविता यज्ञस्य प्रसूत्यै । अथ काममन्येन । ततो होत्रे । मध्यं वा एतद्यज्ञस्य । यद्धोता । मध्यत एव यज्ञं प्रीणाति । अथाध्वर्यवे । प्रतिष्ठा वा एषा यज्ञस्य । यदध्वर्युः । तस्माद्धविर्यज्ञस्यैतामेवाऽऽवृतमनु (१०) । अन्या दक्षिणा नीयन्ते । यज्ञस्य प्रतिष्ठित्यै । अग्निमग्नी-त्सकृत्सकृत्संमृड्ढीत्याह । पराङिव ह्येतर्हि यज्ञः । इषिता दैव्याहोतार इत्याह । इषितꣳ हि कर्म क्रियते । भद्रवा-च्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्याह । आशिषमेवैतामाशास्ते । स्वगा दैव्याहोतृभ्य इत्याह । यज्ञमेव तत्स्वगा करोति । स्वस्तिर्मानुषेभ्य इत्याह । आशिषमे-वैतामाशास्ते । शंयोर्ब्रूहीत्याह । शंयुमेव बार्हस्पत्यं भाग-धेयेन समर्धयति (११) ।

चरत्यध्वर्युः प्रजातिर्ह्वयते वेदाब्रवीद्बर्हिषदं करोत्युत्विजो दधाति ब्रह्माऽनु करोति चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके तृतीयाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

अथ तृतीये नवमोऽनुवाकः ।

अथ स्रुचावनुष्टुग्भ्यां वाजवतीभ्यां व्यूहति । प्रतिष्ठा

वा अनुष्टुक् । अन्नं वाजः प्रतिष्ठित्यै । अन्नाद्यस्यावरुद्ध्यै । प्राचीं जुहूमूहति । जातानेव भ्रातृव्यान्प्रणुदते । प्रतीचीमुपभृतम् । जनिष्यमाणानेव प्रतिनुदते । स विषूच एवापोह्य सपत्नान्यजमानः । अस्मिँल्लोके प्रतितिष्ठति (१) । द्वाभ्याम् । द्विप्रतिष्ठो हि । वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वेत्याह । यथायजुरेवैतत् । स्रुक्षु प्रस्तरमनक्ति । इमे वै लोकाः स्रुचः । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति । त्रेधाऽनक्ति । त्रय इमे लोकाः (२) । एभ्य एवैनं लोकेभ्योऽनक्ति । अभिपूर्वमनक्ति । अभिपूर्वमेव यजमानं तेजसाऽनक्ति । अक्तꣳ रिहाणा इत्याह । तेजो वा आज्यम् । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति । वियन्तु वय इत्याह । वय एवैनं कृत्वा । सुवर्गं लोकं गमयति (३) । प्रजां योनिं मा निर्मृक्षमित्याह । प्रजायै गोपीथाय । आप्यायन्तामाप ओषधय इत्याह । आप एवौषधीराप्याययति मरुतां पृषतयः स्थेत्याह । मरुतो वै वृष्ट्या ईशते । वृष्टिमेवावरुन्धे । दिवं गच्छ ततो नो वृष्टिमेरयेत्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे (४) । यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्याऽऽयुर्मीयते । आयुष्पा अग्नेऽस्याऽऽयुर्मे पाहीत्याह । आयुरेवाऽऽत्मन्धत्ते । यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्य चक्षुर्मीयते । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्याह ।

चक्षुरेवाऽऽत्मन्धत्ते । ध्रुवाऽसीत्याह प्रतिष्ठित्यै । यं परिधिं पर्यधत्था इत्याह ( ५ ) । यथायजुरेवैतत् । अग्ने देवपणिभिर्वीयमाण इत्याह । अग्नय एवैनं जुष्टं करोति । तं तं एतमनुजोषं भरामीत्याह । सजातानेवास्मा अनुकान्करोति । नेदेष त्वदपचेतया ता इत्याहानुख्यात्यै । यज्ञस्य पाथ उपसमितमित्याह । भूमानमेवोपैति । परिधीन्प्रहरति । यज्ञस्य समिष्ट्यै ( ६ ) । स्रुचौ संप्रस्रावयति । यदेव तत्र क्रूरम् । तत्तेन शमयति । जुह्वामुपभृतम् । यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । यजमानायैव भ्रातृव्यमुपस्तिं करोति । सꣳस्रावभागाः स्थेत्याह । वसवो वै रुद्रा आदित्याः सꣳस्रावभागाः । तेषां तद्भागधेयम् ( ७ ) । तानेव तेन प्रीणाति । वैश्वदेव्यर्चा । एते हि विश्वे देवाः । त्रिष्टुग्भवति । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति । अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह । इयं वा अग्निरपन्नगृहः । अस्या एवैने सदने सादयति । सुम्नाय सुम्निनी सुम्ने मा धत्तमित्याह (८)। प्रजा वै पशवः सुम्नम् । प्रजामेव पशूनात्मन्धत्ते। धुरि धुर्यौ पातमित्याह । जायापत्योर्गोपीथाय । अग्नेऽदब्धायोऽशीततनो इत्याह । यथायजुरेवैतत् । पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्याह । आशिषमेवै-

तामाशास्ते । अविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहे-तींध्मसंवृश्चनान्यन्वाहार्यपचनेऽभ्याधाय फलीकरणहोमं जुहोति । अतिरिक्तानि वा इध्मसंवृश्चनानि (९)। अतिरिक्ताः फलीकरणाः । अतिरिक्तमाज्योच्छेषणम् । अतिरिक्त एवातिरिक्तं दधाति । अथो अतिरिक्तेनैवाति-रिक्तमाप्त्वाऽवरुन्धे । वेदिर्देवेभ्यो निलायत । तां वेदेना-न्वविन्दन् । वेदेन वेदिं विविदुः पृथिवीम् । सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तः । ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिꣳ संमार्ष्ट्यनुवित्त्यै (१०)। अथो यद्वेदश्च वेदिश्च भवतः। मिथुनत्वाय प्रजात्यै । प्रजापतेर्वा एतानि श्मश्रूणि । यद्वेदः। पत्निया उपस्थ आस्यति । मिथुनमेव करोति । विन्दते प्रजाम् । वेदꣳ होताऽऽहवनीयात्स्तृणन्नेति। यज्ञमेव तत्संतनोत्योत्तरस्मादर्धमासात् । तꣳ संततमुत्तरेऽर्धमास आलभते (११)। तं काले काल आगते यजते । ब्रह्म-वादिनो वदन्ति। स त्वा अध्वर्युः स्यात् । यो यतो यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयतीति । वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातु विदो गातुं वित्त्वा गातुमितेत्याह। यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः (१२)।

तिष्ठतीमे लोका गमयति द्यौर्वृष्टिमेवावरुन्धे पर्यधत्था इत्याह सामिष्ट्यै भागधेयं

धत्तमित्याह वा इध्मसंवृश्चनान्यनुविच्यै लभते यजमानः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके तृतीयाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अथ दशमोऽनुवाकः ।

योवा अयथादेवतं यज्ञमुपचरति । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । योऽयथादेवतम् । न देवताभ्य आवृश्च्यते । वसीयान्भवति । वारुणो वै पाशः । इमं विष्यामि वरुणस्य पाशमित्याह । वरुणपाशादेवैनां मुञ्चति । सवितृप्रसूतो यथादेवतम् (१) । न देवताभ्य आवृश्च्यते । वसीयान्भवति । धातुश्च योनौ सुकृतस्य लोक इत्याह । अग्निर्वै धाता । पुण्यं कर्म सुकृतस्य लोकः । अग्निरेवैनां धाता । पुण्ये कर्मणि सुकृतस्य लोके दधाति । स्योनं मे सह पत्या करोमीत्याह । आत्मनश्च यजमानस्य चानार्त्यै संत्वाय । समायुषा सं प्रजयेत्याह (२) । आशिषमेवैतामाशास्ते पूर्णपात्रे । अन्ततोऽनुष्टुभा । चतुष्पद्वा एतच्छन्दः प्रतिष्ठितं पत्नियै पूर्णपात्रे भवति । अस्मिँल्लोके प्रतितिष्ठानीति । अस्मिन्नेव लोके प्रतितिष्ठति । अथो वाग्वा अनुष्टुक् । वाङ्मिथुनम् । आपो रेतः प्रजननम् । एतस्माद्वै मिथुनाद्विद्योतमानस्तनयन्वर्षति । रेतः सिञ्चन् (३) । प्रजाः प्रजनयन् । यद्वै यज्ञस्य ब्रह्मणा युज्यते । ब्रह्मणा वै तस्य विमोकः । अद्भिः शान्तिः ।

विमुक्तं वा एतर्हि योक्त्रं ब्रह्मणा । आदायैनत्पत्नी सहाप उपगृह्णीते शान्त्यै । अञ्जलौ पूर्णपात्रमानयति । रेत एवास्यां प्रजां दधाति । प्रजया हि मनुष्यः पूर्णः । मुखं विमृष्टे अवभृथस्यैव रूपं कृत्वोत्तिष्ठति (४) ।

सवितृप्रसूतो यथादेवतं प्रजयेत्याह सिञ्च-
न्मृष्ट एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके तृतीयाध्याये दशमोऽनुवाकः ॥ १० ॥

=====

अथैकादशोऽनुवाकः ।

---

परिवेषो वा एष वनस्पतीनाम् । यदुपवेषः । य एवं वेद । विन्दते परिवेष्टारम् । तमुत्करे । यं देवा मनुष्येषु । उपवेषमधारयन् । ये अस्मदपचेतसः । तानस्मभ्यमिहाकुरु । उपवेषोपविड्ढि नः (१) । प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदः । ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुपगूहति । तस्मात्पुरस्तात्प्रत्यञ्चः शूद्रा अवस्यन्ति । स्थविमत उपगूहति । अप्रतिवादिन एवैनान्कुरुत । धृष्टिर्वा उपवेषः । शुचतो वज्रो ब्रह्मणा सꣳशितः । योपवेषे शुक् । साऽमुमृच्छतु यं द्विष्म इति (२) । अथास्मै नामगृह्य प्रह-

रति । निरमुं नुद ओकसः । सपत्नो यः पृतन्यति । निर्बाध्येन हविषा । इन्द्र एणं पराशरीत् । इहि तिस्रः परावतः । इहि पञ्चजनाꣳ अति । इहि तिस्रोऽतिरोचना-यावत् । सूर्यो असद्दिवि । परमां त्वा परावतम् ( ३ ) । इन्द्रो नयतु वृत्रहा । यतो न पुनरायसि । शश्वतीभ्यः समाभ्य इति । त्रिवृद्वा एष वज्रो ब्रह्मणा सꣳशितः । शुचैवैनं विद्ध्वा । एभ्यो लोकेभ्यो निर्णुद्य । वज्रेण ब्रह्मणा स्तृणुते । हतोऽसाववधिष्मामुमित्याह स्तृत्यै । यं द्विष्यात्तं ध्यायेत् । शुचैवैनमर्पयति ( ४ ) ।

नो द्विष्म इति परावतमर्पयति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके
तृतीयाध्याय एकादशोऽनुवाकः ॥ ११ ॥

---

प्रत्युष्टं दिवः शिल्पमयज्ञो घृतं च देवासुराः स एतमिन्द्र आपो देवीराश्विना धिष्णिया अथ स्रुचौ यो वा अयथादेवतं परिवेषो वा एकादश ।

प्रत्युष्टमयज्ञ एषा हि विश्वेषां देवानामूर्जा पृथिवीमथो रक्षसां तां प्रजातिं द्वाभ्यां तं काले काले नवसप्ततिः ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके
तृतीयोऽध्यायः ॥ ३ ॥

# अथ कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे

## तृतीयकाण्डे चतुर्थः प्रपाठकः ।

---

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
नक्षत्रेष्टय आम्नाताः प्रथमे हि प्रपाठके ।
या दर्शपूर्णमासेष्टिरिष्टीनां प्रकृतिर्हि सा ॥ २ ॥
तौ तु प्रपाठकौ पूर्वं मन्त्रव्याख्याप्रसङ्गतः ।
व्याख्यातावनुवाकार्थमात्रमत्र पुनर्ब्रुवे+ ॥ ३ ॥
दशानुवाका एकस्मिंस्तदर्थास्तु क्रमादिमे ।
वत्सापाकरणं बर्हिर्दोहो निर्वापकण्डने ॥ ४ ॥
पेषणं च कपालानि पुरोडाशश्च वेदिका ।
इध्माबर्हिःसादनं च एवं पाठक ईरितः ॥ ५ ॥
एकादशानुवाकाः स्युरुत्तरस्मिन्प्रपाठके ।
स्रुक्संमार्गो मार्जनार्थान्दर्भानग्नौ विनिक्षिपेत् ॥ ६ ॥
पत्नीसंनहनं चाऽऽज्योत्पवनं स्रुक्षु[1] तद्ग्रहः ।
स्रुक्सादनं तथा पौरोडाशैडा[2]भक्षणादिकम् ॥ ७ ॥
प्रस्तरप्रहराद्येवं पत्नीयोक्त्रविमोचनम् ।
उपवेशपरित्यागः प्रपाठेऽस्मिन्समीरितः ॥
अक्षरार्थः संहिताया भाष्य एवावगम्यताम् ॥ ८ ॥
प्रपाठके चतुर्थे तु मेधः पुरुषपूर्वकः ।
उच्यते सूत्रकारेण सविस्पष्टमुदाहृतः[3] ॥ ९ ॥

तत्राऽऽपस्तम्ब आह–" पञ्चाहः पुरुषमेधो ब्राह्मणो राजन्यो वा यजेतौजो वर्यिमाप्नोति सर्वा व्युष्टीर्व्यश्नुत एकादशयूपेष्वेकादशाग्नीषोमीयाः पञ्चशारदीयवदहान्यग्निष्टोमो वोपोत्तमो देवसवितस्तत्सवितुर्विश्वानि देवसवितरिति तिस्रः सावित्रीर्हुत्वा मध्यमेऽहन्यश्वूनुपाकरोति द्वयानैकादशिनानुपाकृत्य

+ तैत्तिरीयसंहिताप्रथमप्रपाठक एतत्प्रपाठकद्वयस्य मन्त्रार्थो द्रष्टव्यः ।

---

1 क. ग. °क्षु च ग्रहः । 2 क पौरोडाशैडा° । 3 ग. °तः ॥९॥ इति । त° ।

पुरुषान्ब्रह्मणे ब्राह्मणमालभते इत्येतद्यथासमाम्नातं तान्यूपान्तरालेषु धारयन्त्युपाकृतान्दक्षिणतोऽवस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन पराचाऽनुशꣳसति पर्यग्निकृतानुदीचीं नीत्वोत्सृज्याऽऽज्येन तद्देवता आहुतीर्हुत्वा द्वयैरेकादशिनान्सꣳस्थापयन्ति " इति । तत्र मनुष्यरूपाणां पशूनां विधायके चतुर्थप्रपाठक एकोनविंशतिसंख्याका अनुवाकाः सन्ति । तत्र प्रथमानुवाकमाह—

हरिः ॐ ।

ब्रह्मणे ब्राह्मणमालभते । क्षत्राय राजन्यम् । मरुद्भ्यो वैश्यम् । तपसे शूद्रम् । तमसे तस्करम् । नारकाय वीरहणम् । पाप्मने क्लीबम् । आक्रयायायोगूम् । कामाय पुꣳश्चलूम् । अतिक्रुष्टाय मागधम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

अत्र चतुर्थ्यन्ता देवता द्वितीयान्ताः पशवः । आलभत इति सर्वत्रानुवर्तते । ब्रह्म ब्राह्मणजात्यभिमानी देवस्तस्मै कंचिद्ब्रह्मवर्चसयुक्तं ब्राह्मणजातियं पुरुषमालभते । क्षत्रियजात्यभिमानिदेवाय कंचित्क्षत्रियजातीयम् । देववैश्येभ्यो मरुद्भ्यो मनुष्यवैश्यम् । कृच्छ्रचान्द्रायणादिदुःखरूपतपोदेवाय दुःखजातं शूद्रम् । अन्धकारदेवाय तमःप्रियं चोरम् । नरकस्वामिने वीरहणमग्न्युद्वासिनम् । "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति हि ब्राह्मणम् । पापस्वामिने नपुंसकम् । आक्रयाय सर्वद्रव्यक्रयाभिमानिदेवायायोगूम् । अयोग्यस्याशास्त्रीयस्य कर्तारम् । कामदेवाय पुंश्चलूं साधारणस्त्रियम् । अतिक्रुष्टायातिनिन्दितदेवाय मागधं क्षात्रियायां वैश्येनोत्पादितम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ चतुर्थे द्वितीयोऽनुवाकः ।

---

अथ द्वितीयानुवाकमाह-

गीताय सूतम् । नृत्ताय शैलूषम् । धर्माय सभाचरम् । नर्माय रेभम् । नरिष्ठायै भीमलम् । हसाय कारिम् । आनन्दाय स्त्रीषखम् । प्रमुदे कुमारीपुत्रम् । मेधायै रथकारम् । धैर्याय तक्षाणम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

गीताभिमानिने सूतं ब्राह्मण्यां क्षत्रियेणोत्पादितं गानजीविनम् । नृत्ताभिमानिने शैलूषमन्यस्मै स्वभार्यां प्रदाय तेन जीविनम् । धर्माभिमानिने सभायां नित्यं चरन्तं धर्मस्य प्रवक्तारम् । नर्माय विनोदाभिमानिने रेभं मेधाविनं चाटूक्तिकुशलम् । नरिष्ठायै नरि पुरुषेऽन्यस्मिन्नवस्थिता नरिष्ठा परतन्त्राभिमानिनी तस्यै देवतायै भीमलं भीरुं चपलाक्षम् । हास्याभिमानिने कारिं नृत्यन्निव यो गच्छति तादृशं विकटगमनकारिणम् । आनन्दाभिमानिने स्त्रीषखं स्त्रीणां प्रियम् । प्रमुदे प्रकृष्टहर्षाभिमानिने कुमारीपुत्रं दुहितुः पुत्रम् । मेधायै ग्रन्थार्थधारणाभिमानिन्यै रथकारं रथस्य कर्तारं निपुणमतिम् । धैर्याभिमानिने तक्षाणं वर्धकिम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ चतुर्थे तृतीयोऽनुवाकः ।

---

अथ तृतीयानुवाकमाह-

श्रमाय कौलालम् । मायायै कार्मारम् । रूपाय मणिकारम् । शुभे वपम् । शरव्याया

इषुकारम् । हेत्यै धन्वकारम् । कर्मणे ज्याकारम् । दिष्टाय रज्जुसर्गम् । मृत्यवे मृगयुम् । अन्तकाय श्वनितम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

श्रमाभिमानिने कुलालपुत्रम् । मायायै विचित्रकरणशक्त्यै कार्मारं लोहकारम् । रूपाय शुक्लकृष्णादिरूपाभिमाने मणिकारं मणिमुक्तादिसंस्कर्तारम् । शुभाभिमानिन्यै वपं बीजानां वप्तारम् । शरव्यायै बाणसमूहाभिमानिन्यै बाणानां संस्कर्तारम् । हेत्या आयुधाभिमानिन्यै धन्वकारं धनुषां संस्कर्तारम् । कर्मणे व्यापाराभिमानिने ज्याकारं ज्यानां संस्कर्तारम् । दिष्टाय भवितव्याभिमानिने रज्जुसर्गं रज्जूनां स्रष्टारम् । मृत्यवे मरणाभिमानिने मृगयुं मृगाणां हन्तारम् । अन्तकाय प्राणापहारिणे श्वनितं श्वभिः सह क्रीडाजीविनम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थे चतुर्थोऽनुवाकः ।

---

अथ चतुर्थानुवाकमाह—

संधये जारम् । गेहायोपपतिम् । निर्ऋत्यै परिवित्तम् । आर्त्यै परिविविदानम् । अराध्यै दिधिषूपतिम् । पवित्राय भिषजम् । प्रज्ञानाय नक्षत्रदर्शम् । निष्कृत्यै पेशस्कारीम् । बलायोपदाम् । वर्णायानूरुधम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

संधये संघटनाभिमानिन्यै जारं पारदारिकम्। गेहाय गृहाभिमानन उपपतिं प्रज्ञातजारम्। पूर्वो जारस्त्वविज्ञातोऽयं तु भर्त्रा विज्ञात इति विशेषः। निर्ऋत्यै निर्ऋतिदेवतायै परिवित्तं ज्येष्ठात्पूर्वमेवोढभार्यं कनिष्ठम्। आर्त्यै दुःखदेवतायै परिविविदानं प्रथमतो विवाहशीलम्, कनिष्ठः संस्तदाग्रहयुक्तमित्यर्थः। अराध्यै कार्यसिद्धिप्रतिबन्धाभिमानिन्यै दिधिषूपतिं द्विर्विवाहं कृतवती स्त्री दिधिषूरतस्याः पतिम्। पवित्राय शुद्धाभिमानिने भिषजं चिकित्सकम्। प्रज्ञानाय कालज्ञानाभिमानिने नक्षत्रदर्शं ज्योतिःशास्त्रविदम्। निष्कृत्यै कार्यनिष्पादनाभिमानिन्यै पेशस्कारीं सुवर्णकारस्य भार्याम्। बलाय बलाभिमानिन उपदाम्। अल्पमात्रप्रदानेन या कन्या गृह्यते सेयमुपदा। वर्णाय शुक्लकृष्णवर्णाभिमानिनेऽनूरुधं स्वकीयप्रयोजनमन्तरेणैव परानुरोधेन यः प्रवर्तते तादृशम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ चतुर्थे पञ्चमोऽनुवाकः।

---

अथ पञ्चमानुवाकमाह—

नदीभ्यः पौञ्जिष्ठम्। ऋक्षीकाभ्यो नैषादम्। पुरुषव्याघ्राय दुर्मदम्। प्रयुद्भ्य उन्मत्तम्। गन्धर्वाप्सराभ्यो व्रात्यम्। सर्पदेवजनेभ्योऽप्रतिपदम्। अवेभ्यः कितवम्। इर्यताया अकितवम्। पिशाचेभ्यो बिदलकारम्। यातुधानेभ्यः कण्टककारम्, इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

नदीभ्यो नदीदेवताभ्यः पौञ्जिष्ठं कैवर्तम्। ऋक्षीकाभ्यः शून्यस्थलीदेव-

---

१ क. ख. °र्त्रोऽनुज्ञा°।

ताभ्यो नैषादं निषाद एव नैषादस्तम् । पुरुषव्याघ्राय पुरुषश्रेष्ठाभिमानिन दुर्मदमत्यन्तमदान्धम् । प्रयुद्भ्यः प्रकर्षेण योद्धृदेवेभ्य उन्मत्तमुन्मादयुक्तम् । गन्धर्वाप्सराभ्यो गन्धर्वेभ्यस्तदीययोषिद्भ्यश्च व्रात्यं शास्त्रीयसंस्कारहीनं पुरुषम् । सर्पदेवजनेभ्यः सर्पाभिमानिभ्यो देवजनशब्दवाच्यगारुडिकाभिमानिभ्यश्चाप्रतिपदं प्रतिपत्तिः संस्कारस्तदयोग्यम् । अवेभ्यो रक्षाभिमानिभ्यः कितवं द्यूतासक्तम् । इर्यतायै, इराऽन्नं तत्र साधुरिर्योऽन्नसमृद्धस्तद्भावस्तत्ता तदभिमानिन्या अकितवं द्यूतादिव्यसनरहितम् । पिशाचेभ्यो देवयोनिविशेषेभ्यो विदलकारं वंशान्विदलीकृत्य कुसूलशूर्पादिकं यः करोति तज्जातीयं पुरुषम् । यातुधानेभ्यो रक्षोविशेषेभ्यः कण्टककारमारामादिषु कण्टकावृत्तिकर्तारम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥५॥

---

अथ चतुर्थे षष्ठोऽनुवाकः ।

---

अथ षष्ठानुवाकमाह—

उत्सादेभ्यः कुब्जम् । प्रमुदे वामनम् । द्वार्भ्यः स्रामम् । स्वप्नायान्धम् । अधर्माय बधिरम् । संज्ञानाय स्मरकारीम् । प्रकामोद्यायोपसदम् । आशिक्षायै प्रश्निनम् । उपशिक्षाया अभिप्राश्निनम् । मर्यादायै प्रश्नविवाकम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

उत्सादेभ्यः कार्यविनाशाभिमानिभ्यः कुब्जं वक्रपृष्ठभागं पुरुषम् । प्रमुदे प्रकृष्टहर्षाभिमानिने वामनं खर्वशरीरं पुरुषम् । द्वार्भ्यो द्वाराभिमानिनीभ्यः स्रामं रोगिणम् । स्वप्नाय स्वप्नाभिमानिने [illegible] दृष्टिहीनम् । अधर्माय पापाभिमानिने बधिरं [illegible]वणशक्तिरहितम् । संज्ञानाय सम्यग्बोधाभिमानिने स्मरकारीं मन्त्रौषधा-

---

१ क. °र्माायाधर्माभि° ।

 

दिभिर्भर्तुः कामोत्पादिकाम् । प्रकामोद्याय प्रकामं स्वेच्छानुसारेणैव वदतीति प्रकामोद्यो बहुप्रलापी तदभिमानिन उपसदं प्रयोजनमन्तरेणैव बहुभाषिणं सभायामुपविष्टम् । आशिक्षायै वेदशास्त्रेष्वल्पपरिचय आशिक्षा तदभिमानिन्यै प्रश्निनं शास्त्रार्थेषु संदेहेन प्रश्नकर्तारम् । उपशिक्षायै वेदशास्त्रविषयपरिचय उपशिक्षा तदभिमानिन्या अभिप्रश्निनं पृष्टस्योपरि पुनः प्रश्नोऽभिप्रश्नस्तद्युक्तं पूर्वप्रश्ननिराकर्तारमित्यर्थः । मर्यादायै शास्त्रार्थव्यवस्थाभिमानिन्यै प्रश्नविवाकं परकीयप्रश्नं सम्यग्विविच्योत्तरस्य वक्तारम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ चतुर्थे सप्तमोऽनुवाकः ।

---

अथ सप्तमानुवाकमाह—

ऋत्यै स्तेनहृदयम् । वैरहत्याय पिशुनम् ।
विविक्त्यै क्षत्तारम् । औपद्रष्टाय संग्रहीतारम् ।
बलायानुचरम् । भूम्ने परिष्कन्दम् । प्रियाय
प्रियवादिनम् । अरिष्ट्या अश्वसादम् । मेधाय
वासःपल्पूलीम् । प्रकामाय रजयित्रीम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

ऋत्यै चोरस्य चौर्यादूर्ध्वं गमनमृतिस्तदभिमानिन्यै स्तेनहृदयं चौर्ये तात्पर्यवन्तम् । वैरहत्याय वीरहत्याभिमानिने पिशुनं प्रभोः कर्णे परदोषसूचकम् । विविक्त्यै विशेषलाभाभिमानिन्यै क्षत्तारं सारथिम् । औपद्रष्टाय य उपद्रष्टा राजधनं प्रत्यवेक्षिता तदभिमानिने संग्रहीतारं भाण्डागाराध्यक्षं करसंग्रहकारिणं वा । बलाय बलाभिमानिनेऽनुचरं सेवकम् । भूम्ने महत्त्वाभिमानिने परिष्कन्दं परिचारकम् । प्रियाय प्रियाभिमानिने प्रियवादिनं मृदुभाषिणम् । अरिष्ट्या अहिंसाभिमानिन्या अश्वसादमश्वारोहिणम् । मेधाय यज्ञबुद्ध्यभिमानिने वासः-

पल्पूलीं वाससः शोधयित्रीं रजकस्त्रियम्। प्रकामाय प्रकृष्टकामाभिमानिने रजयित्रीं वस्त्रेषु रञ्जनकारिणीम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ चतुर्थेऽष्टमोऽनुवाकः।

---

अथाष्टमानुवाकमाह--

भायै दार्वाहारम्। प्रभाया आग्नेन्धम्।
नाकस्य पृष्ठायाभिषेक्तारम्। ब्रध्नस्य विष्टपाय पात्रनिर्णेगम्। देवलोकाय पेशितारम्।
मनुष्यलोकाय प्रकरितारम्। सर्वेभ्यो लोकेभ्य उपसेक्तारम्। अवर्त्यै वधायोपमन्थितारम्। सुवर्गाय लोकाय भागदुघम्। वर्षिष्ठाय नाकाय परिवेष्टारम्, इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

भायै दीप्त्यभिमानिन्यै दार्वाहारमिन्धनानामाहर्तारम्। प्रभायै प्रकृष्टदीप्त्यभिमानिन्या आग्नेन्धमग्नेः प्रज्वलनकर्तारम्। नाकस्य पृष्ठाय स्वर्गस्योपरिभागस्वामिनेऽभिषेक्तारं राज्याभिषेकस्य कर्तारम्। ब्रध्नस्य विष्टपायाऽऽदित्यस्य लोकं पालयित्रे पात्रनिर्णेगं कांस्यताम्रादिपात्राणां शोधकम्। देवलोकाय देवलोकाभिमानिने पेशितारं प्रशान्तस्य वैरस्योत्पादयितारम्। मनुष्यलोकाय मनुष्यलोकाभिमानिने प्रकरितारं स्निग्धानां वैरस्योत्पादनेन विश्लेषयितारम्। सर्वेभ्यो लोकेभ्यः सर्वलोकाभिमानिभ्य उपसेक्तारं वैरस्य शमयितारम्। अवर्त्यै वधाय कृच्छ्रापत्तिलक्षणवधाभिमानिन उपमन्थितारं स्वयमुपेत्य वैरस्य जनयितारम्। सुवर्गाय लोकाय स्वर्गलोकाभिमानिने भागदुघं प्रजाभ्यो राजभागस्य संपादकम्।

वर्षिष्ठाय नाकायातिप्रवृद्धस्वर्गाभिमानिने परिवेष्टारं भोजनकाले परिवेषणस्य कर्तारम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ चतुर्थे नवमोऽनुवाकः ।

---

अथ नवमानुवाकमाह—

अर्मेभ्यो हस्तिपम् । जवायाश्वपम् । पुष्ट्यै गोपालम् । तेजसेऽजपालम् । वीर्यायाविपालम् । इरायै कीनाशम् । कीलालाय सुराकारम् । भद्राय गृहपम् । श्रेयसे वित्तपम् । अध्यक्षायानुक्षत्तारम् , इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अर्मेभ्यो गतिविशेषाभिमानिभ्यो हस्तिपं गजपालकम् । जवाय वेगाभिमानिनेऽश्वपमश्वपालकम् । पुष्ट्यै पुष्ट्यभिमानिन्यै गोपालं गवां पालकम् । तेजसे तेजोभिमानिनेऽजपालमजानां पालकम् । वीर्याय वीर्याभिमानिनेऽविपालमवीनां पालकम् । इराया अन्नाभिमानिन्यै कीनाशं कर्षकम् । कीलालाय जलाभिमानिने सुराकारं सुराया उत्पादयितारम् । भद्राय कल्याणाभिमानिने गृहपं गृहाणां पालकम् । श्रेयसे श्रेयोभिमानिने वित्तपं धनस्य पालकम् । अध्यक्षाय प्रत्यक्षकारणाभिमानिनेऽनुक्षत्तारं सारथेरनुचरम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ चतुर्थे दशमोऽनुवाकः ।

अथ दशमानुवाकमाह—

मन्यवेऽयस्तापम् । क्रोधाय निसरम् । शोकायाभिसरम् । उत्कूलविकूलाभ्यां त्रिस्थिनम् । योगाय योक्तारम् । क्षेमाय विमोक्तारम् । वपुषे मानस्कृतम् । शीलायाञ्जनीकारम् । निर्ऋत्यै कोशकारीम् । यमायासूम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये दशमोऽनुवाकः ॥ १० ॥

मन्यवे मानसकोपाभिमानिनेऽयस्तापमयसस्तापयितारं लोहकारम् । क्रोधाय बाह्यकोपाभिमानिने निसरं वध्यानां बहिर्निःसारयितारम् । शोकाय शोकाभिमानिनेऽभिसरं रथस्य पुरतो गन्तारम् । उत्कूलविकूलाभ्यां काङ्क्षितादधिकलाभ उत्कूलस्तस्मादल्पलाभो विकूलस्तदभिमानिभ्यां त्रिस्थिनं त्रिभिः पादाभ्यां दण्डेन च तैरपि गन्तुमशक्त एकत्रैवावस्थितस्त्रिस्थिनस्तादृशम् । योगायालब्धलाभाभिमानिने योक्तारं रथेऽश्वानां योजयितारम् । क्षेमाय लब्धपालनाभिमानिने विमोक्तारं रथे योजितानामश्वानां विमोचयितारम् । वपुषे शरीराभिमानिने मानस्कृतं मनसैव लावण्यं विषये योजयिता मनस्कृत्तस्य पुत्रं मानस्कृतम् । शीलाय स्वभावविशेषः शीलं तदभिमानिनेऽञ्जनकारमक्ष्णोरञ्जनेनालंकर्तारम् । निर्ऋत्यै पापदेवतायै कोशकारीं ताम्रलोहाध्मानकुशलां स्त्रियम् । खड्गादीनां चर्ममयकोशकारीं वा । यमाय प्राणापहारिणेऽसूं सूतिरुत्पत्तिस्तद्रहितां वन्ध्यामित्यर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अथ चतुर्थे एकादशोऽनुवाकः ।

अथैकादशानुवाकमाह–

यम्यै यमसूम् । अथर्वभ्योऽवतोकाम् । संवत्सराय पर्यारिणीम् । परिवत्सरायाविजाताम् । इदावत्सरायापस्कद्वरीम् । इद्वत्सरायातीत्वरीम् । वत्सराय विजर्जराम् । संवत्सराय पलिक्नीम् । वनाय वनपम् । अन्यतोऽरण्याय दावपम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याय एकादशोऽनुवाकः ॥ ११ ॥

यम्यै यमस्य स्त्रियै यमसूं पुत्रयुगलप्रसवित्रीम् । अथर्वभ्योऽथर्वशाखागतमन्त्राभिमानिभ्योऽवतोकां गर्भस्राविणीं स्त्रियम् । संवत्सराय प्रभवादिष्वब्देषु प्रथमोऽब्दः संवत्सरस्तदभिमानिने पर्यारिणीं प्रसवकालातिक्रमेण या प्रसूते सा पर्यारिणी ताम् । परिवत्सराय द्वितीयोऽब्दः परिवत्सरस्तदभिमानिनेऽविजातां विशेषेण जाता विजाता द्वितीयप्रसवयुक्ता तद्रहिताम् । इदावत्सराय तृतीयोऽब्द इदावत्सरस्तदभिमानिनेऽपस्कद्वरीं गर्भपरिणामात्प्रागेव प्रसवप्रतिबन्धोऽपस्कत्तस्मिन्कुशलाऽपस्कद्वरी ताम् । इद्वत्सराय चतुर्थोऽब्द इद्वत्सरस्तदभिमानिनेऽतीत्वरीं प्रसवकालात्ययकरणकुशला ताम् । वत्सराय पञ्चमोऽब्दो वत्सरस्तदभिमानिने विजर्जरामप्रसूत्यैव जीर्णाम् । संवत्सराय सर्वस्य जगतश्छद्मकारिणे देवाय पलिक्नीं प्रथमे वयस्येव पलिताङ्गीम् । वनाय वनाभिमानिने वनपं वनस्य पालकम् । अन्यतोऽरण्यायैकपार्श्ववर्त्यरण्याभिमानिने दावपमारण्याग्नेः पालकम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः ॥११॥

अथ चतुर्थे द्वादशोऽनुवाकः ।

---

अथ द्वादशानुवाकमाह—

सरोभ्यो धैवरम् । वेशन्ताभ्यो दाशम् । उपस्थावरीभ्यो बैन्दम् । नड्वलाभ्यः शौष्कलम् । पार्याय कैवर्तम् । अवार्याय मार्गारम । तीर्थेभ्य आन्दम् । विषमेभ्यो मैनालम् । स्वनेभ्यः पर्णकम् । गुहाभ्यः किरातम् । सानुभ्यो जम्भकम् । पर्वतेभ्यः किंपूरुषम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

सरोभ्यः सरोभिमानिभ्यो धैवरमुभयतो जलं बद्ध्वा तटानां मत्स्यग्राहिणम् । वेशन्ताभ्यः पल्वलाभिमानिभ्यो दाशं बडिशेन मत्स्यग्राहिणम् । उपस्थावरीभ्यस्तरूणां समीपेषु प्रवाहमन्तरेण स्थिता या आपस्तदभिमानिनीभ्यो बैन्दं बिन्दुर्जालं तेन जीवतीति बैन्दस्तम् । नड्वलाभ्यस्तृणसंयुक्तदेशवर्तिजलाभिमानिनीभ्यः शौष्कलं शुष्कलं बडिशं तेन जीवतीति शौष्कलस्तम् । पार्याय परतीराभिमानिने कैवर्तं कूले मत्स्यानां पुञ्जीकृत्य हन्तारम् । अवार्यायावरतीराभिमानिने मार्गारमन्तर्जलं हस्ताभ्यां मत्स्यमार्गणशीलम् । तीर्थेभ्योऽवतरस्थानाभिमानिभ्य आन्दं तीर्थे शङ्कुबन्धनेन मत्स्यग्राहिणम् । विषमेभ्योऽतीर्थाभिमानिभ्यो मैनालं जालजीविनम् । स्वनेभ्यः सशब्दजलाभिमानिभ्यः पर्णकं सविषं पर्णं जलस्योपरि स्थापयित्वा मत्स्यग्राहिणम् । गुहाभ्यः पर्वतगुहाभिमानिनीभ्यः किरातं मृगघातिनम् । सानुभ्यः पर्वतशिखराभिमानिभ्यो जम्भकं गात्राणां जृम्भयितारम् । पर्वतेभ्यः पर्वताभिमानिभ्यः किंपूरुषं वनवासिनं गायकम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ चतुर्थे त्रयोदशोऽनुवाकः ।

अथ त्रयोदशानुवाकमाह—

प्रतिश्रुत्काया ऋतुलम् । घोषाय भषम् ।
अन्ताय बहुवादिनम् । अनन्ताय मूकम् ।
महसे वीणावादम् । क्रोशाय तूणवध्मम् ।
आक्रन्दाय दुंदुभ्याघातम् । अवरस्प-
राय शङ्खध्मम् । ऋभुभ्योऽजिनसंधा-
यम् । साध्येभ्यश्चर्मम्णम् , इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये त्रयोदशोऽनुवाकः ॥ १३ ॥

प्रतिश्रुत्कायै प्रतिध्वन्यभिमानिन्या ऋतुलं देशराजवार्ताकथनशीलम् । घोषाय ध्वन्यभिमानिने भषमसंबद्धप्रलापिनम् । अन्तायान्तवच्छब्दाभिमानिने बहुवादिनमधिकभाषणकुशलम् । अनन्तायापर्यवसितशब्दाभिमानिने मूकं वाग्व्यवहाररहितम् । महसे कूजितशब्दाभिमानिने वीणावादं वीणावादने कुशलम् । क्रोशाय महाशब्दाभिमानिने तूणवध्मं वेणुं वादयन्तम् । आक्रन्दाय समन्ताद्घोषणाभिमानिने दुंदुभ्याघातं भेर्या वादयितारम् । अवरस्पराय हीनोत्तमशब्दाभिमानिने शङ्खध्मं शङ्खस्य ध्मातारम् । ऋतुभ्यः कालसंधानहेतुभ्यो देवविशेषेभ्योऽजिनसंधायं चर्मचीरसंधानजीविनम् । साध्येभ्यः कालसाद्गुण्यहेतुभ्यो देवविशेषेभ्यश्चर्मम्णं वीणादिप्रहारनिवारकचर्मनिर्मातारम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

अथ चतुर्थे चतुर्दशोऽनुवाकः ।

अथ चतुर्दशानुवाकमाह—

बीभत्सायै पौल्कसम् । भूत्यै जागरणम् ।

अभूत्यै स्वपनम् । तुलायै वाणिजम्। वर्णाय
हिरण्यकारम् । विश्वेभ्यो देवेभ्यः सिध्मलम् ।
पश्चाद्दोषाय ग्लावम् । ऋत्यै जनवादिनम् ।
व्यृद्ध्या अपगल्भम्। सꣳशराय प्रच्छिदम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये चतुर्दशोऽनुवाकः ॥ १४ ॥

=====

बीभत्सायै बीभत्सा दुष्टवस्तुषु हेयत्वबुद्धिस्तदभिमानिन्यै पौल्कसमतिनिकृष्टजातियुक्तम् । भूत्यै भूतिरैश्वर्याभिमानिनी तस्यै जागरणं प्रबोधशीलं सर्वदा सावधानमित्यर्थः । अभूत्यै दारिद्र्याभिमानिन्यै स्वपनं निद्रालुं सर्वदा प्रमादभूयिष्ठमित्यर्थः । तुलायै सुवर्णादिपरिमाणनिश्चयहेतुस्तुला तदभिमानिन्यै वाणिजं क्रयकारिणम् । वर्णाय हिरण्यमणिमुक्तादिगतभास्वरत्वाभास्वरत्वाभिमानिने हिरण्यकारं कटकमुकुटादिनिष्पादकम् । विश्वेभ्यो देवेभ्यो विश्वे देवाः प्रसिद्धास्तेभ्यः सिध्मलं कुष्ठरोगिणम् । पश्चाद्दोषाय कुष्ठव्यतिरिक्तरोगाभिमानिने ग्लावं नित्यकृशवपुषम्। ऋत्यै गत्यभिमानिन्यै जनवादिनं जनानां परिवादनशीलम् । व्यृद्ध्यै समृद्ध्यभावाभिमानिन्या अपगल्भं धाष्टर्यरहितम् । संशराय संशीर्णत्वाभिमानिने प्रच्छिदं प्रकर्षेण च्छेत्तारम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥१४॥

---

अथ चतुर्थे पञ्चदशोऽनुवाकः ।

---

अथ पञ्चदशानुवाकमाह—

हसाय पुꣳश्चलूमालभते । वीणावादं गणकं
गीताय । यादसे शाबुल्याम् । नर्माय भद्रव-
तीम् । तूणवध्मं ग्रामण्यं पाणिसंघातं नृत्ताय ।

मोदाया॑नुक्रो॒श॑कम् । आन॒न्दाय॑ तल॒वम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये पञ्चदशोऽनुवाकः ॥ १५ ॥

---

हसायापहासाभिमानिने पुंश्चलूं स्वेच्छाचारिणीम् । आलभत इति शब्दस्य सर्वत्रानुवृत्तिविवक्षां दर्शयितुं पुनः पुनरुपन्यासः । वीणावादं गणकं वीणां वादयितुं कुशलो वीणावादः, श्रुतिजातिस्वरमण्डलादिगणनकुशलो गणकः, तावुभौ गीताभिमानिने द्रष्टव्यौ । यादसे जलचारिप्राण्यभिमानिने शाबुल्यां शबलवर्णशरीराम् । नर्माय प्रियवचनाभिमानिने भद्रवतीं भद्रलक्षणयुक्तशरीरोपेताम् । तूणवध्मं मुखवादिनं वेणुवादिनं वा, ग्रामण्यं ग्रामस्य नेतारम्, पाणिसंघातं पाणिद्वयसंयोगनिर्वर्तिततालकृत्यम्, एतांस्त्रीन्पुरुषान्नृत्ताय नृत्ताभिमानिने कुर्यात् । मोदाय हर्षाभिमानिनेऽनुक्रोशकं नृत्तसभायां जनानामाह्वातारं नृत्यसमाप्तिद्योतकध्वनिकर्तारं वा । आनन्दाय मानसतुष्ट्यभिमानिने । हर्षस्तु बाह्यलिङ्गगम्यः परितोष आनन्दस्त्वनुभवैकगम्य इति विशेषः । तलवं काहलवादिनं मुखवाद्यकारिणं वा ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथ चतुर्थे षोडशोऽनुवाकः ।

---

अथ षोडशानुवाकमाह—

अ॒क्ष॒रा॒जाय॑ कित॒वम् । कृ॒ताय॑ सभा॒विन॑म् । त्रेता॑य आदिनव॒द॒र्शम् । द्वा॒प॒राय॑ बहिः॒स॒दम्। कल॑ये सभास्था॒णुम् । दु॒ष्कृ॒ताय॑ चर॒काचार्यम् । अध्व॑ने ब्रह्मचा॒रिण॑म् । पि॒शा॒चेभ्यः॑ सैल॒गम् । पि॒पा॒सायै॒ गोव्य॒च्छम् । निर्ऋ॑त्यै गोघा॒तम् । क्षु॒धे गो॑विक॒र्तम् ।

क्षुत्तृष्णाभ्यां तम्। यो गां विकृन्तन्तं माꣳसं भिक्षमाण उपतिष्ठते, इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये षोडशोऽनुवाकः॥ १६॥

---

अक्षा द्यूतसाधनविशेषास्तेषां राजा तदभिमानी देवविशेषस्तस्मै कितवं द्यूतकुशलम्। कृताय कृतयुगाभिमानिने सभाविनं द्यूतसभाया अधिष्ठातारम्। त्रेतायै त्रेतायुगाभिमानिन्या आदिनवदर्शं मर्यादायां देवनस्य द्रष्टारं परीक्षकम्। द्वापराय द्वापरयुगाभिमानिने बहिःसदं बहिःसदनशीलं स्वयमदीव्यन्तम्। कलये कलियुगाभिमानिने सभास्थाणुमदेवनकालेऽपि सभां यो न मुञ्चति सोऽयं स्तम्भसमानत्वात्सभास्थाणुस्तम्। दुष्कृताय दुर्घटकार्यकरणाभिमानिने चरकाचार्यं वंशाग्रवर्तनस्य शिक्षयितारम्। अध्वने मार्गाभिमानिने ब्रह्मचारिणमुपनीतम्। पिशाचेभ्यो भूतावान्तरविशेषेभ्यः सैलगं पथिकानां वस्त्रादिकमपहृत्य यः शैलं पर्वतं गच्छति तादृशम्। पिपासायै पानेच्छाभिमानिन्यै गोव्यच्छं गवां वित्रासयितारम्। निर्ऋत्यै पापदेवतायै गोघातं विषकण्टकादिभिर्गवां मारयितारम्। क्षुधे क्षुदभिमानिन्यै गोविकर्तं गवां विशसितारम्। क्षुत्तृष्णाभ्यां मिलिताभ्यां बुभुक्षापिपासाभिमानिनीभ्यां यो नीचजातिर्दरिद्रः पुमान्क्षुत्पीडितः सन्, गां विशसति तं पुरुषं प्रति तदीयं मांसं भिक्षितुमागत्य सेवते तं नीचं पूर्वोक्तद्वयाय कुर्यात्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके षोडशोऽनुवाकः॥ १६॥

---

अथ चतुर्थे सप्तदशोऽनुवाकः।

---

अथ सप्तदशानुवाकमाह—

भूम्यै पीठसर्पिणमालभते। अग्नयेऽꣳसलम्। वायवे चाण्डालम्। अन्तरिक्षाय वꣳशनर्तिनम्। दिवे खलतिम्। सूर्याय हर्यक्षम्। चन्द्रमसे मिर्मिरम्। नक्षत्रेभ्यः किलासम्।

अह्नें शुक्लं पिङ्गलम् । रात्रियै कृष्णं पिङ्गाक्षम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याये सप्तदशोऽनुवाकः ॥ १७ ॥

भूम्यै भूमिदेवतायै पीठसर्पिणं यो भग्नचरणो दारुमयपीठावलम्बी भूम्यां सर्पति तादृशम् । अग्नयेऽग्निदेवताया अंसलं बलवन्तम् । वायवे चाण्डालं चण्डालजातीयम् । अन्तरिक्षदेवतायै वंशनर्तिनं वंशाग्रनृत्तजीविनम् । दिवे द्युलोकदेवतायै खलतिं केशहीनशिरस्कम् । सूर्यदेवतायै हरितवर्णाक्षियुक्तम् । चन्द्रदेवतायै मिर्मिरं निमिषदृष्टिम् । नक्षत्रदेवताभ्यः श्वेतबिन्दुसमाभ्यः किलासं कुष्ठबिन्दुयुक्तम् । अहर्देवतायै शुक्लं पिङ्गलं शुक्लवर्णदेहं पिङ्गलाक्षम् । रात्रिदेवतायै कृष्णं पिङ्गाक्षं कृष्णवर्णदेहं पिङ्गवर्णाक्षियुक्तम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

अथ चतुर्थेऽष्टादशोऽनुवाकः ।

अथाष्टादशानुवाकमाह—

वाचे पुरुषमालभते । प्राणमपानं व्यानमुदानꣳ समानं तान्वायवे । सूर्याय चक्षुरालभते । मनश्चन्द्रमसे । दिग्भ्यः श्रोत्रम् । प्रजापतये पुरुषम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्यायेऽष्टादशोऽनुवाकः ॥ १८ ॥

वाग्देवतायै पुरुषं पूरकं स्थूलशरीरमित्यर्थः । तच्छरीरवर्तिनः प्राणाद्याः पञ्च वायुवृत्तिविशेषा ये सन्ति तान्सर्वान्वायुदेवतायै कुर्यात् । प्राणो मुखनासिकावर्ती । अपानोऽधोद्वारवर्ती । व्यानः सर्वदेहव्यापी ।

१ क. °रं पुनः पुनरतिवेगेन चक्षुर्निमीलनयुक्तम् । न ।

उदान उत्क्रान्तिहेतुः । समानः सर्वशरीरसाम्येनान्नरसप्रेरणहेतुः । यद्यपि प्राणादयस्तस्मात्पुरुषशरीरात्पृथक्कर्तुमशक्यास्तथाऽपि तत्रैवावस्थितान्वायवे समर्पयेत् । एवं चक्षुर्मनःश्रोत्राण्यपि तत्र स्थितान्येव सर्यचन्द्रमोदिग्भ्यः समर्पयेत् । प्रजापतये तु तच्छरीरस्थं पुरुषं जीवात्मानं समर्पयेत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

अथैकोनविंशोऽनुवाकः ।

अथैकोनविंशानुवाकमाह—

अथैतानरूपेभ्य आलभते । अतिह्रस्वमतिदीर्घम् । अतिकृशमत्यꣳसलम् । अतिशुक्लमतिकृष्णम् । अतिश्लक्ष्णमतिलोमशम् । अतिकिरिटमतिदन्तुरम् । अतिमिर्मिरमतिमेमिषम् । आशायै जामिम् । प्रतीक्षायै कुमारीम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थाध्याय एकोनविंशोऽनुवाकः ॥ १९ ॥

पूर्वोक्तेभ्यः पुरुषेभ्यस्तत्तद्देवताभ्यश्चात्यन्तवैलक्षण्यद्योतनायाथशब्दः । एतान्वक्ष्यमाणानतिह्रस्वादीन्पुरुषानरूपेभ्यः समीचीनरूपरहितेभ्यः कुत्सितरूपाभिमानिभ्य आलभेत । अतिह्रस्वादयः प्रसिद्धाः । अतिकिरिटोऽत्यल्पदन्तः । अतिदन्तुरोऽत्युन्नतदन्तः । अतिमिर्मिरोऽत्यर्थं निमिषद्दृष्टिः । अतिमेमिषः सदाविस्फारिताक्षस्तब्धदृष्टिर्वा । एतान्सर्वानरूपेभ्य आलभत इति पूर्वत्रान्वयः । आशाया अलभ्यवस्तुविषयतृष्णाभिमानिन्यै जामिं निवृत्तरजस्कां भोगायोग्यां स्त्रियम् । प्रतीक्षायै लब्धव्यस्य वस्तुनो लाभप्रतीक्षणाभिमानिन्यै कुमारीमनूढां कन्यामालभते । ब्राह्मणादयः कुमार्यन्ताः प्रोक्ता मनुष्यविशेषरूपाः पशवोऽस्मिन्पुरुषमेधे पञ्चाहे सोमयागविशेषे मध्यमेऽहनि सवनीयपशुभिः समुच्चित्याऽऽलब्धव्याः । तथा च सूत्रं पूर्वमेवोदाहृतम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥१९॥

ब्रह्मणे गीताय श्रमाय संधये नदीभ्य उत्सादेभ्य कृत्यै भाया अर्मेभ्यो मन्यवे यम्यै दश दश सरोभ्यो द्वादश प्रतिश्रुत्कायै बीभत्सायै दश दश हसाय समाक्षरगजाय त्रयोदश भूम्यै दश वाचे षडथ नवैकान्नविंशतिः ।

ब्रह्मणे यम्यै नवदश ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयकाण्डे चतुर्थः प्रपाठकः समाप्तः ॥ ४ ॥

---

अथ कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयकाण्डे पञ्चमप्रपाठकस्याऽऽरम्भः ।

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
चतुर्थे नरमेधस्य पशवो विहिता अथ ।
इष्टिहौत्रस्य मन्त्रोक्तिः पञ्चमेऽस्मिन्प्रपाठके ॥ २ ॥
संहितायामेव मन्त्राः प्रसङ्गाद्व्याकृताः पुरा ।
देवा वैनर्चिनेत्याद्या मनुरित्यादिकाश्च ये ॥ ३ ॥
अनुवाकास्तत्र तेषां मन्त्राणां ब्राह्मणं श्रुतम् ।
तद्ब्राह्मणं विना मन्त्रैर्व्याख्यातुं नैव शक्यते ॥ ४ ॥
अतो मन्त्रा उदाहृत्य व्याकृता ब्राह्मणैः सह ।
तत्राक्षरार्थो विज्ञेयोऽनुवाकार्थस्तु वर्ण्यते ॥
त्रयोदशानुवाकाः स्युः पञ्चमेऽस्मिन्प्रपाठके ॥ ५ ॥
होतुर्जपः सामिधेन्यो निविदादापनमृचोः ।
प्रयाजा आज्यभागौ च मुख्या याज्यानुवाक्यगाः ॥ ६ ॥

इडाह्वानमनूयाज्याः सूक्तवाकः शंयुवाकः ।
पत्नीसंयाजकाश्चैडाह्वानं पाठक ईरितः ॥ ७ ॥

हरि ॐ ।

सत्यं प्रपद्ये । ऋतं प्रपद्ये । अमृतं प्रपद्ये । प्रजापतेः प्रियां तनुवमनार्तां प्रपद्ये । इदमहं पञ्चदशेन वज्रेण । द्विषन्तं भ्रातृव्यमवक्रामामि योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः । भूर्भुवः सुवः । हिम् ( १ ) ।

सत्यं दश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

अथ पञ्चमे द्वितीयोऽनुवाकः ।

---

प्र वो वाजा अभिद्यवः । हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयुः । अग्न आयाहि वीतये । गृणानो हव्यदातये । निहोता सत्सि बर्हिषि । तं त्वा समिद्भिरङ्गिरः । घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य । स नः पृथु श्रवाय्यम् ( १ ) । अच्छा देव विवाससि । बृहदग्ने सुवीर्यम् । ईडेन्यो नमस्यस्तिरः । तमाꣳसि दर्शतः । समग्निरिध्यते वृषा । वृषो अग्निः समिध्यते । अश्वो न देववाहनः । तꣳ हविष्मन्त ईडते । वृषणं त्वा वयं वृषन् । वृषणः समिधीमहि ( २ ) ।

एतस्मिन्प्रपाठके ये मन्त्रा आम्नातास्तेषां मध्ये को मन्त्रः कुत्रोदाहृत्य

अग्ने दीदयतं बृहत् । अग्निं दूतं वृणीमहे । होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । समिध्यमानो अध्वरे । अग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे । समिद्धो अग्न आहुत । देवान्यक्षि स्वध्वर । त्वꣳ हि हव्यवाडसि । आजुहोत दुवस्यत । अग्निं प्रयत्यध्वरे । वृणीध्वꣳ हव्यवाहनम् । त्वं वरुण उत मित्रो अग्ने । त्वां वर्धन्ति मतिभिर्वसिष्ठाः । त्वेवसु सुषणनानि सन्तु । यूयं पात स्वस्तिभिः सदा नः ( ३ ) ।

श्रवाय्यमिधीमह्यसि सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

=====

अथ पञ्चमे तृतीयोऽनुवाकः ।

———

अग्ने महाꣳ असि ब्राह्मणभारत । असावसौ । देवेद्धो मन्विद्धः । ऋषिष्टुतो विप्रानुमदितः । कविशस्तो ब्रह्मसꣳशितो घृताहवनः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता । तूर्णिर्हव्यवाट् । आस्पात्रं जुहूर्देवानाम् (१) । चमसो देवपानः । अराꣳ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसि ।

व्याख्यात इति तत्सर्वं विविच्यते । योऽयं— " सत्यं प्रपद्ये " इत्यनुवाकः सोऽयं " देवा वै नर्चि न " इत्यत्रोदाहृत्य व्याख्यातः । " प्र वो वाजाः "

आवह देवान्यजमानाय। अग्निमग्न आवह। सोममावह। अग्निमावह। प्रजापतिमावह। अग्नीषोमावावह। इन्द्राग्नी आवह। इन्द्रमावह। महेन्द्रमावह। देवाꣳआज्यपाꣳ आवह। अग्निꣳ होत्रायाऽऽवह। स्वं महिमानमावह। आ चाग्ने देवान्वह। सुयजा च यज जातवेदः (२)।

देवानामिन्द्रमावह षट् च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये तृतीयोऽनुवाकः॥ ३॥

---

अथ पञ्चमे चतुर्थोऽनुवाकः।

---

अग्निर्होता वेत्त्वग्निः। होत्रं वेत्तु प्रावित्रम्। स्मो वयम्। साधु ते यजमान देवता। घृतवतीमध्वर्यो स्रुचमास्यस्व। देवायुवं विश्ववाराम्। ईडामहै देवाꣳ ईडेऽन्यान्। नमस्याम नमस्यान्। यजाम यज्ञियान् (१)।

अग्निर्होता नव।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये चतुर्थोऽनुवाकः॥ ४॥

---

अथ पञ्चमे पञ्चमोऽनुवाकः।

---

समिधो अग्न आज्यस्य वियन्तु। तनूनपादग्न आज्यस्य

इति येयमृक्साऽपि तत्रैवोदाहृत्य व्याख्याता। 'सत्यं प्रपद्यते' इत्यनुवाके

वेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्य वेतु । स्वाहाऽग्निम् । स्वाहा सोमम् । स्वाहाऽग्निम् । स्वाहा प्रजापतिम् । स्वाहाग्नीषोमौ । स्वाहेन्द्राग्नी । स्वाहेन्द्रम् । स्वाहा महेन्द्रम् । स्वाहा देवाꣳ आज्यपान् । स्वाहाऽग्निꣳ होत्राज्जुषाणाः । अग्न आज्यस्य वियन्तु (१) ।

इन्द्राग्नी पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

====

अथ पञ्चमे षष्ठोऽनुवाक ।

---

अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु । त्वꣳ सोमासि सत्पतिः । त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । जुषाणः सोम आज्यस्य हविषो वेतु । अग्निः प्रत्नेन जन्मना । शुम्भानस्तनुवꣳ स्वाम् । कविर्विप्रेण वावृधे । जुषाणो अग्निराज्यस्य वेतु । सोमं गीर्भिष्ट्वा वयम् । वर्धयामो वचोविदः ।

"प्र वो वाजाः" इत्यृगपि । तद्द्वयं "देवा वै नर्चिनः" इत्यत्रोदाहृत्य व्याख्यातम् । "अग्न आयाहि" इत्यादय एकादशर्चस्तु "अयज्ञो वा एषः" इत्यत्र व्याख्याताः । "अग्ने महानग्निर्होता" इत्यनुवाकद्वयं— "अग्ने महाꣳ असि" इत्यत्र व्याख्यातम् । "समिधो अग्न आज्यस्य" इत्यनुवाकः समिधो यजति" इत्यत्र व्याख्यातः । "अग्निर्वृत्राणि" इत्यनुवाकः

सुमृडीको न आविंश । जुषाणः सोम आज्यस्य हविषो वेतु (१) ।

स्वाः षट् चं ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ पञ्चमे सप्तमोऽनुवाकः ।

---

अग्निर्मूर्धा दिवः ककुत् । पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति । भुवो यज्ञस्य रजसश्च नेता । यत्रानियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षाम् । जिह्वामग्ने चकृषे हव्यवाहम् । प्रजापते न त्वदेतान्यन्यः । विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु (१) । वयꣳ स्याम पतयो रयीणाम् । स वेद पुत्रः पितरꣳ स मातरम् । स सूनुर्भुवत्स भुवत्पुनर्मघः । स द्यामौर्णोदन्तरिक्षꣳ स सुवः । स विश्वा भुवो अभवत्स आभवत् । अग्नीषोमा सवेदसा । स हूती वनतं गिरः । सं देवत्रा बभूवथुः । युवमेतानि दिवि रोचनानि । अग्निश्च सोम सक्रतू अधत्तम् (२) । युवꣳ सिन्धूꣳरभिशस्तेरवद्यात् । अग्नीषोमाव-

"चक्षुषी वा एते" इत्यस्योपक्रमे व्याख्यातः । "अग्निर्मूर्धा" "भुवः" इति मन्त्रद्वयं–"मूर्धन्वती पुरोनुवाक्या भवति" "नियुत्वत्या यजति" इत्यत्र

मुञ्चतं गृभीतान् । इन्द्राग्नी रोचना दिवः । परिवाजेषु भूषथः । तद्वांश्चेति प्रवीर्यम् । अथद्वृत्रमुत संनोति वाजम् । इन्द्रायो अग्नी सहुरी सपर्यात् । इरज्यन्तावसव्यस्य भूरेः । सहस्तमा सहसा वाजयन्ता । एन्द्रसानसिꣳ रयिम् (३) । सजित्वानꣳ सदासहम् । वर्षिष्ठमुतये भर । प्रससाहिषे पुरुहूत शत्रून् । ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राऽऽभर दक्षिणेनावसूनि । पतिः सिन्धूनामसि रेवतीनाम् । महाꣳ इन्द्रो य ओजसा । पर्जन्यो वृष्टिमाꣳ इव । स्तोमैर्वत्सस्य वावृधे । महाꣳ इन्द्रो नृवदाचर्षणिप्राः (४) । उत द्विबर्हा अमिनः सहोभिः । अस्मद्रियग्वावृधे वीर्याय । उरुः पृथुः सुकृतः कर्तृभिर्भूत् । पिप्रीहि देवाꣳ उशतो यविष्ठ । विद्वाꣳ ऋतूꣳर्ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने । त्वꣳ होतृणामस्या यजिष्ठः । अग्निꣳ स्विष्टकृतम् । अयाडग्निरग्नेः प्रिया धामानि । अयाट्सोमस्य प्रिया धामानि (५) । अयाडग्नेः प्रिया धामानि । अयाट्प्रजापतेः प्रिया धामानि । अयाडग्नीषोमयोः प्रिया धामानि । अयाडिन्द्राग्नियोः प्रिया धामानि । अयाडिन्द्रस्य प्रिया धामानि ।

व्याख्यातम् । " प्रजापते न त्वदेतानि " इत्यारभ्य कृत्स्नोऽप्यनुवाकशेषः

अयाण्महेन्द्रस्य प्रिया धामानि । अयाड्देवानामाज्यपानां प्रिया धामानि । यक्षदग्नेर्होतुः प्रिया धामानि । यक्षत्स्वं महिमानम् । आयजता मे ज्या इषः । कृणोतु सो अध्वरा जातवेदाः । जुषताꣳ हविः । अग्ने यदद्य विशो अध्वरस्य होतः । पावक शोचे वेष्ट्वꣳ हि यज्वा । ऋता यजासि महिना वियद्भूः । हव्या वह यविष्ठया ते अद्य (६) ।

अस्त्वधत्तꣳ रयिं चर्षणिप्राः सोमस्य प्रिया धामानीपः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ पञ्चमेऽष्टमोऽनुवाकः ।

---

उपहूतꣳ रथंतरꣳ सह पृथिव्या । उप मा रथंतरꣳ सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्यꣳ सहान्तरिक्षेण । उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम् । उपहूतं बृहत्सह दिवा । उप मा बृहत्सह दिवा ह्वयताम् । उपहूताः सप्त होत्राः । उप मा सप्तहोत्रा ह्वयन्ताम् । उपहूता धेनुः सहर्षभा । उप मा धेनुः सहर्षभा ह्वयताम् ( १ ) । उपहूतो भक्षः सखा । उप मा भक्षः सखा ह्वयताम् । उपहूताꣳ ३ हो । इडोपहूता । उपहूतेडा । उपो अस्माꣳ

" चक्षुषी वा एते " इत्यस्यावसाने व्याख्यातः । " उपहूतं रथंतरम् "

इडा ह्वयताम् । इडोपहूता । उपहूतेडा । मानवी घृतपदी मैत्रावरुणी । ब्रह्मदेवकृतमुपहूतम् ( २ ) । दैव्या अध्वर्यव उपहूताः । उपहूता मनुष्याः । य इमं यज्ञमवान् । ये यज्ञपतिं वर्धान् । उपहूते द्यावापृथिवी । पूर्वजे ऋतावरी । देवी देवपुत्रे । उपहूतोऽयं यजमानः । उत्तरस्यां देवयज्यायामुपहूतः । भूयसि हविष्करण उपहूतः । दिव्ये धामन्नुपहूतः । इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः । विश्वमस्य प्रियमुपहूतम् । विश्वस्य प्रियस्योपहूतस्योपहूतः (३) ।

सहर्षभा ह्वयतामुपहूतꣳ हविष्करण उपहूतश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ पञ्चमे नवमोऽनुवाकः ।

---

देवं बर्हिः । वसुवने वसुधेयस्य वेतु । देवो नराशꣳसः । वसुवने वसुधेयस्य वेतु । देवो अग्निः स्विष्टकृत् । सुद्रविणा मन्द्रः कविः । सत्यमन्माऽऽयजी होता । होतुर्होतुरायजीयान् । अग्नेऽयान्देवानयाट् । याꣳ अपिप्रेः । ये ते होत्रे अमत्सत । ताꣳ ससनुषीꣳ

इत्यनुवाको "मनुः पृथिव्याः" इत्यत्र व्याख्यातः । "देवं बर्हिः" "इदं

होत्रां देवंगमाम् । दिवि देवेषु यज्ञमेरयेमम् । स्विष्टकृच्चाग्ने होताऽभूः । वसुवने वसुधेयस्य नमोवाके वीहि (१) ।

अपिप्रेः पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये नवमोऽनुवाकः ॥ ९ ॥

=====

अथ पञ्चमे दशमोऽनुवाकः ।

---

इदं द्यावापृथिवी भद्रमभूत् । आर्ध्म सूक्तवाकम् । उत नमोवाकम् । ऋध्यास्म सूक्तोच्यमग्ने । त्वꣳ सूक्तवागसि । उपश्रितो दिवः पृथिव्योः । ओमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्ताम् । शङ्गये जीरदानू । अत्रस्नू अप्रवेदे । उरुगव्यूती अभयं कृतौ (१) । वृष्टिद्यावारीत्यापा । शंभुवौ मयोभुवौ । ऊर्जस्वती च पयस्वती च । सूपचरणा च स्वधिचरणा च । तयोराविदि । अग्निरिदꣳ हविरजुषत । अवीवृधत महोज्यायोऽकृत । सोम इदꣳ हविरजुषत । अवीवृधत महोज्यायोऽकृत । अग्निरिदꣳ हविरजुषत (२) । अवीवृधत महोज्यायोऽकृत । प्रजापतिरिदꣳ हविरजुषत । अवीवृधत महोज्यायोऽकृत । अग्नी-

द्यावापृथिवी " इत्यनुवाकद्वयं--" अग्नीध्र आदधाति " इत्यनुवाकमध्ये

षोमाविद४ हविरंजुषेताम् । अवीवृधेतां महोज्यायोंऽक्राताम् । इन्द्राग्नी इद४ हविरंजुषेताम् । अवावृधेतां महोज्यायोंऽक्राताम् । इन्द्रं इद४ हविरंजुषत । अवीवृधत महोज्यायोंऽक्रत । महेन्द्र इद४ हविरंजुषत ( ३ ) । अवीवृधत महोज्यायोंऽक्रत । देवा आंज्यपा आज्यमजुषन्त । अवीवृधन्त महोज्यायोंऽक्रत । अग्निर्होत्रेणेद४ हविरंजुषत । अवीवृधत महोज्यायोंऽक्रत । अस्यामृधद्धोत्रायां देवंगमायाम् । आशांस्तेऽयं यजमानोऽसौ । आयुराशांस्ते । सुप्रजास्त्वमाशांस्ते । सजातवनस्यामाशांस्ते ( ४ ) । उत्तरां देवयज्यामाशांस्ते । भूयों हविष्करणमाशांस्ते । दिव्यं धामाऽऽशांस्ते । विश्वं प्रियमाशांस्ते । यदनेनं हविषाऽऽशांस्ते । तदंश्यात्तदृध्यात् । तदंस्मै देवा रांसन्ताम् । तदग्निर्देवो देवेभ्यो वनते । वयमग्नेर्मानुषाः । इष्टं चं वीतं चं । उभे चं नो द्यावांपृथिवी अंहंसः स्पाताम् । इह गतिर्वामस्येदं चं । नमों देवेभ्यः ( ५ ) ।

अभयंकृतावकृताग्निरिद४ हविरंजुषत महेन्द्र इद४ हविरंजुषत सजातवनस्यामाशांस्ते वीतं च त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये दशमोऽनुवाकः ॥ १० ॥

---

" एतद्वै नामासुर आसीत् " इत्येतस्माद्व्याख्यानात्पूर्वत्र व्याख्यातम् ।

अथैकादशोऽनुवाकः ।

तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ( १ ) ।

तच्छं योरष्टौ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याय एकादशोऽनुवाकः ॥ ११ ॥

अथ द्वादशोऽनुवाकः ।

आप्यायस्व सं ते । इह त्वष्टारमग्रियं तन्नस्तुरीपम् । देवानां पत्नीरुशतीरवन्तु नः । प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते । ता नो देवीः सुहवाः शर्म यच्छत । उतग्ना वियन्तु देवपत्नीः । इन्द्राण्यग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु । वियन्तु देवीर्य ऋतुर्जनीनाम् । अग्निर्होता गृहपतिः स राजा । विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानाम् । यजिष्ठः स प्रयजतामृतावा । वयमु त्वा गृहपते जनानाम् । अग्ने अकर्म समिधा बृह-

" तच्छंयोः " इत्यनुवाको " देवा वै यज्ञस्य स्वगा कर्तारम् " इत्यनुवाकस्य मध्ये " एतावता हैनसा भवति " इत्येतस्माद्वाक्यादूर्ध्वं व्याख्यातः ।

न्तम् । अस्थूरिणो गार्हपत्यानि सन्तु । तिग्मेन नस्तेजसा सꣳशिशाधि ( १ ) ।

जनीनामष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः ।

---

उपहूतꣳ रथंतरꣳ सह पृथिव्या । उप मा रथंतरꣳ सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्यꣳ सहान्तरिक्षेण । उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम् । उपहूतं बृहत्सह दिवा । उप मा बृहत्सह दिवा ह्वयताम् । उपहूताः सप्तहोत्राः । उप मा सप्तहोत्रा ह्वयन्ताम् । उपहूता धेनुः सहर्षभा । उप मा धेनुः सहर्षभा ह्वयताम् ( १ ) । उपहूतो भक्षः सखा । उप मा भक्षः सखा ह्वयताम् । उपहूताꣳहो । इडोपहूता । उपहूतेडा । उपो अस्माꣳ इडा ह्वयताम् । इडोपहूता । उपहूतेडा । मानवी घृतपदी मैत्रावरुणी । ब्रह्म देवकृतमुपहूतम् ( २ ) । दैव्या अध्वर्यव उपहूताः । उपहूता मनुष्याः । य इमं यज्ञमवान् । ये यज्ञपत्नीं वर्धान् ।

" आप्यायस्व " इत्यनुवाकस्तत्समीप एव । " अथो मिथुनत्वाय " इत्येतस्मादूर्ध्वं व्याख्यातः । " उपहूतम् " इत्यनुवाकोऽपि तत्रैव व्याख्यातः ॥

उपहूते द्यावापृथिवी । पूर्वजे ऋतावरी । देवी देवपुत्रे । उपहूतेयं यजमाना । इन्द्राणीवाविधवा । अदितिरिव सुपुत्रा । उत्तरस्यां देवयज्यायामुपहूता । भूयसि हविष्करण उपहूता । दिव्ये धामन्नुपहूता । इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूता । विश्वमस्याः प्रियमुपहूतम् । विश्वस्य प्रियस्योपहूतस्योपहूता ( ३ ) ।

सहर्षभा ह्वयतामुपहूतः सुपुत्रा षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमाध्याये त्रयोदशोऽनुवाकः ॥ १३ ॥

---

सत्यं प्रवोऽग्ने महानग्निर्होता समिधोऽग्निर्वृत्राण्यग्निर्मूर्धोपहूतं देवं बर्हिरिदं द्यावापृथिवी तच्छं योराप्यायस्वोपहूतं त्रयोदश । सत्यं वयः स्याम वृष्टि द्यावा नवविंशतिः ।

हरिः ॐ

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमः प्रपाठकः समाप्तः ॥ ५ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये पञ्चमः प्रपाठकः समाप्तः ॥ ५ ॥

---

# अथ कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे

## षष्ठः प्रपाठकः।

---

तत्र प्रथमोऽनुवाकः।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
इष्टिहौत्रं पञ्चमेऽस्मिन्नुक्त्वा षष्ठे प्रपाठके।
वक्ष्यते पाशुकं हौत्रमुक्त्वाऽऽदौ यूपसंस्कृतिम् ॥ २ ॥

तत्र बौधायन आह—"यदाऽनुजानाति यूपायाज्यमानायानुब्रूहीति, तज्जघनेनोत्तरे वेदितृणं निरस्योपविश्य यूपाञ्जनीया अन्वाह "अञ्जन्ति त्वामध्वरे देवयन्तः" इति सप्त, तासां त्रिः प्रथमामन्वाहोत्तमेन वचनेनार्धर्चे उपरमति। यदा जानात्युच्छ्रीयमाणायानुब्रूहीति "यदूर्ध्वस्तिष्ठात्" इति प्रतिपद्य "स मर्य आ विदथे वर्धमानः" इत्यर्धर्चे उपरमति। यदा जानाति परिवीयमाणायानुब्रूहीति "पुनन्ति धीरा अपसो मनीषा" इति प्रतिपद्योत्तमया त्रिः परिदधाति" इति। यद्यप्यत्राञ्जनार्थ एको मन्त्र उच्छ्रयणार्थाः पञ्च मन्त्राः परिव्ययणार्थ एको मन्त्रस्तथाऽप्यञ्जनस्य प्राधान्याच्छत्रिन्यायेन सप्तापि मन्त्रा यूपाञ्जनीया इत्युच्यन्ते। तत्राञ्जनार्थां प्रथमामृचमाह—

अञ्जन्ति त्वामध्वरे देवयन्तः। वनस्पते। मधुना दैव्येन।
यदूर्ध्वस्तिष्ठाद्द्रविणेह धत्तात्। यद्वा क्षयो मातुरस्या
उपस्थे, इति।

हे वनस्पते वनस्पतिविकार यूप देवयन्तो देवानिच्छन्त ऋत्विजो दैव्येन देवयोग्येन मधुना मधुरेणाऽऽज्येनाध्वरे यागे त्वा त्वामञ्जन्ति श्लक्ष्णी कुर्वन्ति। यद्यस्मात्कारणादूर्ध्वस्तिष्ठादुच्छ्रितः स्थास्यासि। इह कर्मणि द्रविणा धनानि धत्तात्संपादयिष्यसि। यद्वा यस्माच्च कारणादस्या मातुः श्रेयसां निर्मात्र्या वेदेरुपस्थे पार्श्वस्थिते देशे क्षयस्तव निवासो भविष्यति तस्मात्कारणात्तद्योग्यतायै त्वामञ्जन्तीति पूर्वत्रान्वयः। यूपायाज्यमानायानुब्रूहीत्येवमध्वर्युणा प्रेषितो होतैतामृचमनुब्रूयात्।

---

१ क. हौत्रं तत्राऽऽदौ यूपसंस्कृतिः।

अथ यूपायोच्छ्रीयमाणायानुब्रूहीत्येवं प्रेषितेन होत्रा या ऋचः पञ्चानुवक्तव्यास्तासां मध्ये प्रथमामाह—

उच्छ्रयस्व वनस्पते । वर्ष्मन्पृथिव्या अधि ।
सुमिती मीयमानः । वर्चोधा यज्ञवाहसे, इति ।

हे वनस्पते यूप त्वं पृथिव्याः संबन्धिनि वर्ष्मन्प्रधानभूतेऽस्मिन्देशेऽध्युपर्युच्छ्रयस्वोत्तिष्ठ । कीदृशस्त्वं सुमी( मि )त्या शोभनेन प्रक्षेपेण स्थापनेन मीयमानः स्थाप्यमानः । यज्ञवाहसे यज्ञनिर्वाहकाय यजमानाय वर्चोधा वर्चसो दीप्तेर्धाता संपादयिता ।

अथ द्वितीयामाह—

समिद्धस्य श्रयमाणः पुरस्तात् । ब्रह्म वन्वानो
अजरꣳ सुवीरम् ( १ ) । आरे अस्मदमतिं
बाधमानः । उच्छ्रयस्व महते सौभगाय, इति ।

हे यूप त्वं महते सौभगाय यजमानस्याधिकसौभाग्यसिद्ध्यर्थमुच्छ्रयस्वोच्छ्रितो भव । कीदृशस्त्वं समिद्धस्य सम्यक्प्रदीप्तस्याऽऽहवनीयस्य पुरस्तात्पूर्वस्यां दिशि श्रयमाण आश्रित्य वर्तमानस्तथाऽजरमविनाशं सुवीरं कल्याणपुत्रादिसमृद्धिकारणं ब्रह्म परिवृढमिदं कर्म वन्वानः संभजमानस्तथाऽमतिमस्मदीयमज्ञानमस्मदारेऽस्मत्तो दूरे बाधमानो नाशय ।

अथ तृतीयामाह—

ऊर्ध्व ऊ षु ण ऊतये । तिष्ठा देवो न
सविता । ऊर्ध्वो वाजस्य सनिता यद्-
ञ्जिभिः । वाघद्भिर्विह्वयामहे, इति ।

हे यूप न ऊतयेऽस्माकं रक्षणायोर्ध्व उ त्वमूर्ध्वाकार एव सुतिष्ठा सुष्ठु स्थितिं कुरु । तत्र दृष्टान्तः । ऊर्ध्वं उपरिदेशे वर्तमानः सविता देवो न सूर्यो देव इव । कीदृशस्त्वं वाजस्य सनिताऽन्नस्य दाता । यद्यस्मात्कारणादञ्जिभिः ऋत्वभिव्यक(कि)कारिभिर्वाघद्भिः क्रत्वनुष्ठानभारं वहद्भिर्ऋत्विग्भिः सहिता वयं विह्वयामहे विशेषेण त्वामाह्वयामः ।

अथ चतुर्थीमाह-

ऊर्ध्वो नः पाह्यंहंसो नि केतुना । विश्वं समत्रिणं दह । कृधी न ऊर्ध्वान् च रथाय जीवसें । विदा देवेषु नो दुवः ( २ ), इति ।

हे यूप त्वमूर्ध्वः सन्केतुना प्रज्ञया नोऽस्मानंहसः पापान्निपाहि नितरां पालय । अत्रिणं भक्षणशीलं राक्षसादि विश्वं सर्वमपि संदह समूहीकृत्य भस्मी कुरु । किंच रथाय जीवसे रथारोहणपूर्वकाय जीवनाय नोऽस्मानूर्ध्वानुच्छ्रितान्कृधी कुरु । नो दुवोऽस्मदीयां परिचर्यां देवेषु विदा वेदय कथय ।

अथ पञ्चमीमाह-

जातो जायते सुदिनत्वे अह्नाम् । स मर्य आ विदथे वर्धमानः । पुनन्ति धीरा अपसो मनीषा । देवया विप्र उदियर्ति वाचम्, इति ।

अयं यूपो जातो नित्यप्रादुर्भूतोऽप्यह्नां दिवसानां मध्ये सुदिनत्वे यागयुक्तस्याह्नः सुदिनत्वाय पुनरप्याजायतेऽस्मदर्थमाभिमुख्येन प्रादुर्भवति । स यूपो मर्यैर्मनुष्यैर्यजमानादिभिर्युक्ते विदथे यज्ञदेश आसमन्ताद्वर्धमान आस्ते । धीरा धीमन्तो यजमानादयोऽपसः कर्मणो निमित्तीभूतान्मनीषा स्वकीयया बुद्ध्या पुनन्ति तमिमं यूपं शोधयन्ति । विप्रो ब्राह्मण ऋत्विक्संघो देवया देवगामिनीं वाचं यूपस्तुतिमुदियर्त्युद्गमयत्युच्चारयतीत्यर्थः ।

अथ यूपाय परिवीयमाणायानुब्रहीति प्रेषितेन होत्रा पठनीयामृचमाह-

युवा सुवासाः परिवीत आगात् । स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति । स्वाधियो मनसा देवयन्तः, इति ।

यथा लोके सुवासाः शोभनवा[ स ]सोपेतो युवा यौवनयुक्तः पुरुषोऽग्रत आगच्छति ! एवमयं यूपः परिवीतो रसनया वेष्टित आगादिह कर्मण्यागतः । स उ स एव यूपो जायमान इह कर्मणि निष्पद्यमानः श्रेयान्दिने दिने प्रशस्यतरो भवति । तं यूपं धीरासो बुद्धिमन्तः कवयो विद्वांसो यजमानादय उन्न-

यन्ति स्तूयमानैर्गुणैरुच्छ्रितं कुर्वन्ति। कीदृशा यजमानादयः। स्वाधियः स्वयमेव बुद्धया यन्ति स्वतन्त्रबुद्धय इत्यर्थः। मनसा स्वकीयेन देवयन्तो देवान्प्राप्तुमिच्छन्तः।

कल्पः—"समिध्यमानवतीं समिद्धवतीं चोत्तरेण पृथुपाजवत्यौ धाय्ये दधाति, पृथुपाजा आमर्त्यस्तꣳ सबाधो यतः स्रुचः" इति। तत्र प्रथमामृचमाह—

पृथुपाजा अमर्त्यः। घृतनिर्णिक्स्वाहुतः। अग्निर्यज्ञस्य हव्यवाट्, इति।

अयमग्निः पृथुपाजत्वादिगुणकः। पृथुपाजा विस्तीर्णबलः। अमर्त्यो मरणरहितः। घृतनिर्णिग्घृतस्य शोधकः। स्वाहुतः सुष्ठु होमेन पूजितः। यज्ञस्य हव्यवाड्यज्ञसंबन्धि हविर्वहति।

अथ द्वितीयामाह—

तꣳ सबाधो यतस्रुचः। इत्था धिया यज्ञवन्तः। आचक्रुरग्निमूतये, इति।

तमेवाग्निमूतये रक्षार्थमाचक्रुराह्वानं कुर्वन्ति। कीदृशा ऋत्विजः। सबाधो बाधासहिता यज्ञविघ्नं बाधमाना इत्यर्थः। यतस्रुचो होमव्यापृतस्रुचो होमाय स्रुचं सर्वदा व्यापारयन्तीत्यर्थः। इत्थेत्थमनेन प्रकारेण धिया प्रज्ञया यज्ञवन्तः सम्यग्यागं कुर्वन्तः।

कल्पः—"त्वं वरुण इति वसिष्ठराजन्यानां परिदधाति" [इति]। पाठस्तु—

त्वं वरुण उत मित्रो अग्ने। त्वां वर्धन्ति मतिभिर्वसिष्ठाः। त्वे वसु सुषणनानि सन्तु। यूयं पात स्वस्तिभिः सदा नः (३), इति।

सुवीरं दुवः स्वाहुतोऽष्टौ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये प्रथमोऽनुवाकः॥ १॥

हेऽग्ने त्वमनिष्टनिवारकत्वाद्वरुणोऽसि। उतापि चेष्टप्रापकत्वान्मित्रोऽसि। वसिष्ठा वसिष्ठगोत्रोत्पन्नाः पुरुषा मतिभिर्मननीयाभिः स्तुतिभिस्त्वां पोषयन्ति।

सुषणनानि सुष्ठुदानयोग्यानि वसूनि धनानि त्वे त्वयि सन्तु । यूयं सपरिवाराः स्वस्तिभिः क्षेमैर्नोऽस्मान्सदा पात ।

अत्र विनियोगसंग्रहः—

हौत्रे तु पाशुकेऽञ्जन्ति यूपस्याभ्यञ्जने वदेत् ।
उच्छ्रेति पश्चोच्छ्रयणे परिव्याने युवास्विति ॥
पृथु धाय्ये उभे त्वं व परिधानीयका भवेत् ॥ १ ॥

अथ मीमांसा । द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ।
विकल्पः स्मारकत्वैक्यात्प्रकारान्यत्वतोऽन्तिमः ॥

यूपस्योच्छ्रयणे करणभूत एष मन्त्रोऽध्वर्युणा पठ्यते—"उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमु परेण दृꣳह" इति । उच्छ्रीयमाणाय यूपाय प्रेषितेन होत्राऽयं मन्त्रः पठ्यते—"उच्छ्रयस्व वनस्पते । वर्ष्मन्पृथिव्या अधि" इति । अनयोर्मन्त्रयोर्यूपोच्छ्रयणस्मारणमेकमेव कार्यम् । तस्माद्विकल्प इति चेत् । मैवम् । करणमन्त्र उच्छ्रयणं करोमीत्येवं स्मारयति । हौत्रस्तु क्रियमाणमुच्छ्रयणमनुवदन्नध्वर्योर्यूपोच्छ्रयणं कर्तव्यमित्येवंविधां स्मृतिं जनयति । तत्र स्मार्यस्योच्छ्रयणस्यैकत्वेऽपि कर्तव्यमित्यस्य करोमीत्यस्य च स्मृतिप्रकारस्यान्यत्वात्कार्यैक्याभावेन समुच्चयः ।

तत्रैवान्यच्चिन्तितम्—

उच्छ्रयस्व समिद्धस्येत्यादीनां किं विकल्पनम् ।
समुच्चयो वा कार्यैक्यादाद्योऽनुस्यूतयेऽन्तिमः ॥

"उच्छ्रयस्व" इत्येका । "समिद्धस्य श्रयमाणः" इति द्वितीया । "ऊर्ध्व ऊ षु णः" इति तृतीया । "ऊर्ध्वो नः पाहि" इति चतुर्थी । ता एताः क्रियमाणमनुवदन्त्यो होत्रा पठ्यन्ते । तासां यूपोच्छ्रयणकर्तव्यतास्मारणस्य कार्यस्यैकत्वाद्विकल्प इति चेत् । मैवम् । प्रथमं मन्त्रेणोत्पन्नायाः स्मृतेरुत्तरोत्तरमनुस्यूतेः पृथक्प्रयोजनत्वात् । तस्मात्समुच्चयः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

१ क तस्मात्स्मार्यं॰ ।

अथ द्वितीयोऽनुवाकः ।

---

प्रथमेऽनुवाके यूपसंस्कारा उक्ताः । अथ द्वितीये प्रयाजविषया मैत्रावरुणप्रैषाः । तृतीये च होतुर्याज्याश्चोच्यन्ते । तथा च बोधायन आह—" यदा जानाति समिद्भ्यः प्रेष्येति तं मैत्रावरुणः प्रेष्यति " होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धम् " इति, अथ होता यजति " समिद्धो अद्य मनुषे दुरोणे " इति, ताविमावेव व्यतिषङ्गमुत्तरेणोत्तरेण मैत्रावरुणः प्रेष्यत्युत्तरेणोत्तरेण होता यजति" इति, अत्राध्वर्युः समिद्भ्यः प्रेष्येति मन्त्रेण यदा मैत्रावरुणं प्रेष्यति तदानीमयं मैत्रावरुणो " होता यक्षत् " इत्यादिभिरनुवाकोक्तैर्मन्त्रैर्होतारं प्रेष्यति । तत्र प्रथमं मन्त्रमाह—

होता॑ यक्षद॒ग्निꣳ स॒मिधा॑ सु॒षमि॒धा सम॑िद्धं॒ नाभा॑ पृथि॒व्याः संग॒थे वा॒मस्य॑ । व॒र्ष्मन्दि॒व इ॒डस्प॒दे वे॒त्वाज्य॑स्य॒ होत॒र्यज॑, इति ।

योऽयं दैव्यो होता सोऽयं समिधा समिधाख्यया प्रथमप्रयाजदेवतया साहितमाग्निं यक्षद्यजतु पूजयतु । कीदृशमग्निं, पृथिव्या वेदिरूपायाः संबन्धिन्या नाभावुत्तरवेदिमध्यगतायामुत्तरनाभौ सुषमिधा शोभनसमिन्धनेन समिद्धं सम्यग्दीपितम् । कीदृशे नाभिस्थाने । वामस्य वननीयस्य धनस्य संगथे सम्यक्प्राप्तिनिमित्ते । दिवो वर्ष्मन्द्युलोकवासिनामुच्छ्रयकारिणे । इडस्पदेऽन्नस्य प्रापके । आज्यस्य वेतु समिद्देवतायुक्तोऽग्निरिदमाज्यं पिबतु । तदर्थं हे मानुष होतर्यज याज्यां पठ ।

अथ द्वितीयं मन्त्रमाह—

होता॑ यक्ष॒त्तनू॒नपा॑तम॒दि॑ते॒र्गर्भं॒ भुव॑नस्य॒ गोपा॒म् । मध्वा॒द्य दे॒वो दे॒वेभ्यो॑ दे॒वयाना॒न्पथो॒ अ॑नक्तु॒ वे॒त्वाज्य॑स्य॒ होत॒र्यज॑, इति ।

तनूनपातं तनूनपान्नामकं द्वितीयप्रयाजदेवं दैव्यो होता पूजयतु । कीदृशमदितेर्गर्भं भूमेः पुत्रम् । भुवनस्य गोपां भूतजातस्य पालकम् । स देवस्तनूनपान्नामकोऽग्निर्विशेषोऽद्यास्मिन्कर्मणि देवयानान्पथो देवानामागमनमार्गान्देवेभ्यो देवार्थं मध्वा मधुरेणाऽऽज्येनानक्तव्यक्तान्करोतु । वेत्वाज्यस्येत्यादि पूर्ववत् ।

 

अथ तृतीयं मन्त्रमाह—

होता यक्षन्नराशꣳसं नृशस्तं नॄꣳः प्रणेत्रम् । गोभिर्वपावान्त्स्याद्वीरैः शक्तीवान्रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज, इति ।

दैव्यो होता नराशंसाख्यमग्निं विकल्पितद्वितीयप्रयाजदेवं पूजयतु । कीदृशमग्निं नृशस्तं नृभिर्यजमानादिभिः स्तुतम् । नॄꣳःप्रणेत्रं मनुष्याणां प्रकर्षेण नेतारम् । स च नराशंसाख्योऽग्निर्गोभिर्वपावान्समृद्धिमान्स्याद्गोसमृद्धिहेतुर्भवत्वित्यर्थः । तथा वीरैः पुत्रादिभिः शक्तीवान्सर्वकार्यसाधनसमर्थो भवतु । रथैर्नानाविधैः प्रथमयावा सर्वेभ्यः प्रथमतो गन्ता भवतु । हिरण्यैर्बहुभिश्चन्द्रयाह्लादवान्भवतु । यजमानाय गोपुत्ररथहिरण्यानि प्रयच्छत्वित्यर्थः । वेत्वाज्यस्येति पूर्ववत् ।

अथ चतुर्थं मन्त्रमाह—

होता यक्षदग्निमिड ईडितो देवो देवाꣳ आवक्षद्दूतो हव्यवाडमूरः । उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज, इति ।

इडेत्येतन्नामकमग्निं तृतीयप्रयाजदेवं दैव्यो होता यजतु । स च देव ईडितो यजमानादिभिः स्तुतो देवान्सर्वानावक्षदिह कर्मण्यावहतु । दूतो दूतवद्धितकारी । हव्यवाड्ढविषो वोढा । अमूरोऽमूढः । स देव इमं यज्ञमुपावतूपेत्य रक्षतु । इमां चोपावतु देवहूतिं मदीयं देवाह्वानमप्यवतु । वेत्वित्यादि पूर्ववत् ।

अथ पञ्चमं मन्त्रमाह—

होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन्यज्ञे वि च प्र च प्रथताꣳ स्वासस्थं देवेभ्यः । एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज, (१) इति ।

सुष्टरीम शोभनेन वेद्यास्तरणेन युक्तं बर्हिर्नामकं चतुर्थप्रयाजदेवमग्निं दैव्यो होता यजतु । ऊर्णम्रदाः कम्बलवन्मृदुमूर्तिः स देवोऽस्मिन्मदीये यज्ञे विप्रथतां प्रप्रथतां च विविधमपि प्रसरतु प्रकर्षेण प्रसरतु। देवेभ्यो देवार्थं स्वासस्थं सुखासनत्वेन स्थातुं योग्यम् । ईमित्थंभूतमृदुत्वादिगुणयुक्तम् । एनद्बर्हिरद्यास्मिन्यज्ञे वसुरुद्रादित्या आसदन्त्वासीदन्तु । तच्च बर्हिरिन्द्रस्यापि प्रियमस्तु ।

अथ षष्ठं मन्त्रमाह—

होता यक्षद्दुरं ऋष्वाः कवष्योऽकोषधावनीरुदाताभिर्जिहतां वि पक्षोभिः श्रयन्ताम् । सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज, इति ।

दुरो द्वारसंज्ञकाः पञ्चमप्रयाजदेवतास्तद्रूपमग्निं दैव्यो होता यजतु । ताश्चर्ष्वा महतीर्ह्रस्वा वा कवष्यः कवाटवतीर्द्वाराभिमानित्वात् । अकोषधावनीर्याः सुच्छिद्रैर्धावन्ति ताः कोषधावन्यस्तद्विपरीतास्ता द्वार उदाताभिर्दिग्भिर्दीप्तिभिर्वोज्जिहतामुद्गच्छन्तु । पक्षोभिः पार्श्वैर्विश्रयन्तां विविधं श्रयन्ताम् । अस्मिन्यज्ञे सुप्रायणाः सुखेन प्रापणीया ऋतावृध ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यो विश्रयन्तां विविधं सेवन्ताम् ।

अथ सप्तमं मन्त्रमाह—

होता यक्षदुषासानक्ता बृहती सुपेशसा नृꣳःपतिभ्यो योनिं कृण्वाने । सꣳस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदतां वीतामाज्यस्य होतर्यज, इति ।

उषासानक्ताऽहश्च रात्रिश्चेति षष्ठप्रयाजदेवते तद्रूपमग्निं दैव्यो होता यजतु । कीदृश्यौ देवते । बृहती गुणैर्महत्यौ सुपेशसा शोभनरूपयुक्ते नृꣳःपतिभ्यो नृणां पतयो ये राजानस्तदर्थं योनिं कृण्वाने स्थानं कुर्वाणे इन्द्रेण देवैश्च सह संस्मयमाने सम्यग्घर्षेण स्मितं कुर्वाणे तथाविधदेवते इदं बर्हिर्यज्ञमासीदताम् । वीतामित्यादि पूर्ववत् ।

अथाष्टमं मन्त्रमाह-

होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा।

स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जा सतवसेमं

यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज, इति।

दैव्यहोतृनामकौ सप्तमप्रयाजदेवौ तदात्मकमग्निं दैव्यो होता यजतु। कीदृशौ देवौ। मन्द्रा हर्षयुक्तौ पोतारा शोधयितारौ कवी विद्वांसौ शास्त्रज्ञावत एव प्रचेतसा प्रकृष्टज्ञानौ। तयोरन्य एको देवोऽद्यास्मिन्कर्मणीषाऽन्नेन हविषा स्विष्टं करत्, सुष्ठु यागो यथा भवति तथा करोतु। अन्य इतरो देव ऊर्जा रसेन स्वभिगूर्तं शोभनाभिप्रेतफलसंबन्धं करोतु। कीदृश्या ऊर्जा। सतवसा बलसहितया। तौ चोभौ देवौ दिवि द्युलोके स्थितेषु देवेष्विमं यज्ञं धत्तां स्थापयताम्। वीतामित्यादि पूर्ववत्।

अथ नवमं मन्त्रमाह-

होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम्। देवेभ्यो देवीर्देवमपो वियन्त्वाज्यस्य होतर्यज, इति।

इडा सरस्वती भारतीत्येवंरूपास्तिस्रोऽष्टमप्रयाजदेव्यस्तद्रूपमग्निं दैव्यो होता यजतु। कीदृश्यो देव्योऽपसामपस्तमाः। अपःशब्दः कर्मवाची तेन तद्वतीरुपलक्ष्यन्ते। अपसां कर्मवतीनां मध्येऽतिशयेन कर्मवत्यस्तादृश्यो देव्योऽद्यास्मिन्दिन इदमपोऽस्मदीयं कर्माच्छिद्रं वैकल्यरहितं यथा भवति तथा तन्वतां संपादयन्तु। किंच देवीस्ता देव्यो देवेभ्यो देवार्थमपोऽस्मदीयं कर्म देवं देवनशीलमभिमतफलप्रदानसमर्थं कुर्वताम्। वियन्त्वित्यादि पूर्ववत्।

अथ दशमं मन्त्रमाह-

होता यक्षत्त्वष्टारमचिष्टुमपाकꣳ रेतोधां

विश्रवसं यशोधाम्। पुरुरूपम-

कामकर्शन५ सुपोषः पोषैः स्यात्सु-
वीरो वीरैर्वेत्वाज्यस्य होतर्यज, इति ।

त्वष्टा नवमप्रयाजदेवस्तद्रूपमग्निं दैव्यो होता यजतु । कीदृशं त्वष्टारमचिष्टुं चेष्टनरहितं चाञ्चल्यरहितं स्थिरमित्यर्थः । अपाकमबालं प्राज्ञमित्यर्थः । रेतोधां रेतसः पुत्रादिबीजस्य यजमाने धारयितारम् । विश्रवसं विविधकीर्तियुक्तम् । यशोधां यजमाने यशसो धारयितारम् । पुरुरूपं बहुरूपम् । अकामकर्शनं कामानामनाशयितारम् । सोऽस्मिन्यजमाने पोषैर्धनादिसमृद्धिभिः सुपोषः स्यात्, सुष्ठु पोषको भवतु । वीरैः पुत्रादिभिः सुवीरः शोभनापत्यप्रदो भवतु । वेत्विति पूर्ववत् ।

अथैकादशं मन्त्रमाह—

होता यक्षद्वनस्पतिमुपावस्रक्षाद्धियो जोष्टार५

शशमन्नरः । स्वदात्स्वधितिर्ऋतुथाऽद्य देवो

देवेभ्यो हव्याऽवाड्वेत्वाज्यस्य होतर्यज, इति ।

वनस्पतिं यूपाधारभूतं दशमप्रयाजदेवतात्मकमग्निं दैव्यो होता यजतु । धियो जोष्टारं बुद्धेः प्रीणयितारं त्वष्टारं देवं शशमत्पशोः शमिता नरः पुरुष उपावस्रक्षत्पश्वर्थं यूपत्वेनोपावसृजतु संयोजयत्वित्यर्थः । किंच स वनस्पतिर्देवः स्वधितिः स्वधितिमान्यूपस्तक्षणेन स्वधितिना संस्कृत इत्यर्थः । ऋतुथा ऋतौ विहिते कालविशेषेऽद्यास्मिन्कर्मणि स्वदादस्माभिर्दीयमानं हविः स्वदयतु । किंच स देवो वनस्पतिर्देवेभ्यो देवार्थं हव्या हवींष्यवाड्वहतु । वेत्वित्यादि पूर्ववत् ।

अथ द्वादशमन्त्रमाह—

होता यक्षदग्नि५ स्वाहाऽऽज्यस्य स्वाहा मेदसः

स्वाहा स्तोकाना५ स्वाहा स्वाहाकृतीना५

स्वाहा हव्यसूक्तीनाम् । स्वाहा देवा५

आज्यपान्स्वाहाऽग्नि५ होत्राज्जुषाणा अग्न

आज्य॑स्य वियन्तु होत॒र्यज॑ ( २ ), इति ।

प्रि॒यमिन्द्र॑स्यास्तु वेत्वाज्य॑स्य होत॒र्यज॑ सु॒वीरो॑ वी॒रैर्वे॑त्वाज्य॑स्य होत॒र्यज॑ च॒त्वारि॑ च ।

अ॒ग्निं तनू॒नपा॑तं नराश॒ꣳसम॒ग्निमि॒ड ईडि॒तो ब॒र्हिर्दुर॑ उ॒षासा॒नक्ता॒ दैव्या॒ ति॒स्र-स्त्वष्टा॑रं वन॒स्पति॑म॒ग्निम् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

योऽयं स्वाहाशब्दोदिते उत्तमप्रयाजदेवोऽग्निस्तं दैव्यो होता यजतु । तद-ग्निमीत्यर्थमाज्यस्य स्वाहुतिरस्तु । मेदोरूपस्य मांसविशेषस्य स्वाहुतिरस्तु । स्तोकानां लेशानां स्वाहुतिरस्तु[1] । स्वाहाकृतीनां स्वाहाकारेण दीयमानानां सर्वाहुतिद्रव्याणां स्वाहुतिरस्तु । हव्यसूक्तीनां हविःस्तावकमन्त्राभिमानिदेवता-नामर्थे स्वाहुतिरस्तु । ये त्वाज्यं पिबन्तो देवास्तान्सर्वानुद्दिश्य स्वाहुतिरस्तु । होत्रा-द्धोमनिमित्तभूतादग्निं जुषाणाः सेवमाना ये देवास्तेषां स्वाहुतिरस्तु । अयमग्नि-रन्ये च सर्वे देवा आज्यं पिबन्तु । हे मानुष होतस्तदर्थं याज्यां पठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ षष्ठे तृतीयोऽनुवाकः ।

---

द्वितीयानुवाके प्रयाजविषया मैत्रावरुणप्रैषा अभिहिताः । अथ तृतीयानु-वाके प्रयाजयाज्या आप्रीसंज्ञका होत्रा पठनीया उच्यन्ते । तत्र प्रथमामाह–

समि॑द्धो अ॒द्य मनु॑षो दुरो॒णे । दे॒वो दे॒वान्य-जा॑सि जातवे॑दः । आ च॒ वह॑ मित्रमहश्चिकि॒-त्वान् । त्वं दू॒तः क॒विर॑सि॒ प्रचे॑ताः, इति ।

हे जातवेदः, देवो दीप्यमानस्त्वं मनुषो मनुष्यस्य यजमानस्य दुरोणे गृहेऽ-

---

१ क. °त एकादशत्र° ।

द्यास्मिन्कर्मणि समिद्धः प्रज्वालितः सन्देवान्यजसि यज हविषा पूजय । हे मित्रमहो मित्राणां पूजयितः, चिकित्वानभिज्ञस्त्वमावह च देवानामावाहनमपि कुरु । त्वं दूतो देवानां हितकारी कविः शास्त्राभिज्ञोऽत एव प्रचेताः प्रकृष्टज्ञानश्चासि ।

अथ द्वितीयामाह—

तनूनपात्पथ ऋतस्य यानान् । मध्वा समञ्जन्त्स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन् । देवत्रा च कृणुह्यध्वरं नः, इति ।

हे तनूनपान्नामकाग्ने हे सुजिह्व शोभनज्वाल, ऋतस्य यज्ञस्य यानान्फलप्राप्तिहेतून्पथो मार्गान्हविर्लक्षणान्मध्वा मधुना रसेन समञ्जन्सम्यक्श्लक्ष्णी कुर्वन्स्वदया स्वादू कुरु । किंच मन्मानि मननीयान्यस्माकमभिप्रेतानि धीभिरात्मीयबुद्धिभिर्ऋन्धन्समृद्धानि कुर्वन्, उतापि च यज्ञमृन्धन्यज्ञमपि समृद्धं कुर्वन्, नोऽध्वरं चास्मदीयं यज्ञमपि देवत्रा कृणुहि देवेषु कुरु ।

अथ तृतीयामाह—

नराशꣳसस्य महिमानमेषाम् । उपस्तोषाम यजतस्य यज्ञैः (१) । ते सुक्रतवः शुचयो धियंधाः । स्वदन्तु देवा उभयानि हव्याः, इति ।

नराशंसनामकस्याग्नेर्महिमानं माहात्म्यमुपस्तोषामोपेत्य स्तुमः । कीदृशस्यैषामृत्विग्यजमानानां संबन्धिभिर्यज्ञैर्यजतस्य पूजनीयस्यैवं नराशंसे स्तुते सति देवा उभयानि हव्या आज्यपुरोडाशलक्षणानि द्विविधानि हवींषि, स्वदन्त्वास्वदन्ताम् । कीदृशा देवाः । सुक्रतवः शोभनयज्ञाः शुचयः शुद्धा धियंधा ज्ञानानां धारयितारः । द्वितीयतृतीययोरनयोर्मन्त्रयोरधिकारिभेदेन व्यवस्थितविकल्पो द्रष्टव्यः । तथा चाऽऽपस्तम्ब आह—“ नराशꣳसो द्वितीयः प्रयाजो वशिष्ठशुनकानां तनूनपादितरेषां गोत्राणाम् ” इति ।

अथ चतुर्थीमाह—

आजुह्वान ईड्यो वन्द्यश्च । आयाह्यग्ने वसुभिः सजोषाः ।

त्वं देवानामसि यह्व होता । स एनान्यक्षीषितो यजीयान्, इति ।

हेऽग्ने त्वमायाह्यस्मिन्कर्मण्यागच्छ । कीदृशस्त्वमाजुह्वानो देवानामाह्वाता, ईड्यः स्तुत्यो वन्द्यश्च नमस्कार्योऽपि । वसुभिर्देवैः सजोषाः समानप्रीतिः । हे यह्व प्रभूतसत्त्व देवानां होताऽऽह्वाताऽसि । स त्वमेनान्देवान्यक्षि यज । ईषितोऽस्माभिरध्येषितः प्रार्थितो यजीयान्मनुष्यादप्यतिशयेन यष्टा ।

अथ पञ्चमीमाह—

प्राचीनं बर्हिः प्रदिशा पृथिव्याः । वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्युप्रथते वितरं वरीयः । देवेभ्यो अदितये स्योनम् ( २ ), इति ।

यदिदं प्राचीनं प्रागग्रत्वेनाऽऽस्तीर्णं बर्हिरस्ति तदिदं प्रदिशा प्रकर्षेण दिश्यमानेन मन्त्रेण पृथिव्या वेदिरूपाया वस्तोराच्छादनार्थमह्नामग्रे प्रातःकालेऽस्याः प्राच्या दिशः सकाशाद्वृज्यत आह्रियते । तथा च मन्त्रान्तरम्—“ त आवहन्ति कवयः पुरस्तात् ” इति । तच्चाऽऽहृतं बर्हिर्देवेभ्यो देवार्थमदितये भूम्यर्थं वितरं विस्तीर्णतरं वरीयोऽत्यन्तश्रेष्ठं स्योनं सुखं यथा भवति तथा व्युप्रथते वेद्यां प्रसृतं भवति ।

अथ षष्ठीमाह—

व्यचस्वतीरुर्विया विश्रयन्ताम् । पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वाः । देवेभ्यो भवथ सुप्रायणाः, इति ।

या द्वारदेवताः सन्ति ता अस्मिन्कर्मणि विश्रयन्तां विशेषेण स्थिता भवन्तु । कीदृश्यो व्यचस्वतीर्व्याप्तिमत्योऽत एवोर्विया अत्यन्तविस्तृताः शुम्भमानाः शोभनाः । तत्र दृष्टान्तः पतिभ्यो न यथा पतीनामर्थाय संभोगकाले शुम्भमानाः शोभमाना जनयो जाता विश्रयन्ति तद्वत् । देवीरित्यादीनि चत्वारि संबुद्ध्य-

१ क. वन्द्योऽभिवादनीयश्चाभि · क्ति न व° । २ ग. न जनयो गः स्त्रिय परन्थे शोभन्ते तद्वत् ।

न्तानि । बृहतीर्गुणैर्महत्यो विश्वमिन्वा विश्वस्य प्रीणयित्र्यो द्वारो देवीर्द्वाराभिमानिन्यः । हे देव्यो देवेभ्यो देवार्थं सुप्रायणाः सुष्ठुगमनक्षमा भवथ ।

अथ सप्तमीमाह—

आ सुष्वयंन्ती यज॒ते उपा॑के । उषा-
सान॑क्ता सदतां॒ नि योनौ॑ । दि॒व्ये
योष॑णे बृ॒हती सु॑रु॒क्मे । अधि॒
श्रिय॑ꣳ शु॒क्रपि॑शं॒ दधा॑ने, इति ।

उषासानक्ताऽहोरात्रे देव्यौ योनावस्मिन्यज्ञस्थाने नि नितरां नियमेन वाऽऽसदतामासीदताम् । कीदृश्यौ, सुष्वयन्ती सुष्ठु वायन्त्यौ गच्छन्त्यौ । यजते यजनीये । उपाके जनान्क्षितुमुपक्रान्ते । दिव्ये दिवि भवे । योषणे योषिताविव प्रीणयित्र्यौ । यद्वा योषणे संमिश्रे परस्परतोऽविविक्ते । बृहती गुणैर्महत्यौ । सुरुक्मे सुष्ठुदीप्ते । शुक्रपिशं निर्मलरूपां श्रियमधिदधाने अधिकं धारयन्त्यौ ।

अथाष्टमीमाह—

दैव्या॒ होता॑रा प्रथ॒मा सु॒वाचा॑ ।
मिमा॑ना य॒ज्ञं मनु॑षो॒ यज॑ध्यै (३) ।
प्रचो॒दय॑न्ता वि॒दथे॑षु का॒रू । प्रा॒चीनं॒
ज्योति॑ः प्र॒दिशा॑ दि॒शन्ता॑, इति ।

दैव्या देवसंबन्धिनौ होतारौ होतृनामकौ देवावत्राऽऽसीदतामिति शेषः । कीदृशौ प्रथमा मनुष्यहोतुः पूर्वभाविनौ । सुवाचा शोभनस्तोत्रौ । मनुषो यजमानस्य यजध्यै यष्टुं यज्ञं मिमाना उत्पादयन्तौ । प्रचोदयन्ता विदथेषु यज्ञेषु सर्वानृत्विजः प्रेरयन्तौ । कारू स्वयं च कर्तारौ । प्राचीनं ज्योतिः प्राच्यां दिशि प्रणीतमाहवनीयाख्यमग्निं प्रदिशा प्रकृष्टेनोपदिष्टमार्गेण दिशन्तौ निर्वाहकौ ।

अथ नवमीमाह—

आ नो यज्ञं भारती तूयमेतु । इडा मनुष्व-
दिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदꣳ स्योनम् । सरस्वतीः स्वपसः सदन्तु, इति ।

भारत्याख्या देवी नोऽस्मदीयं यज्ञं तूयं क्षिप्रमेत्वागच्छतु । इहास्मिन्कर्मणि मनुष्वच्चेतयन्ती यथा मनुष्यो मयाऽस्योपकर्तव्यमिति जानाति तद्वज्जानतीडाख्या देवी चाऽऽगच्छतु । तथा सरस्वती चाऽऽगच्छतु । एवमेतास्तिस्रो देव्यः स्वपसः शोभनकर्माणः स्योनं सुखकरमिदं बर्हिरिमं यज्ञमासदन्तु प्राप्नुवन्तु ।

अथ दशमीमाह—

य इमे द्यावापृथिवी जनित्री । रूपैरपिꣳशद्
भुवनानि विश्वा । तमद्य होतरिषितो यजी-
यान् । देवं त्वष्टारमिह यक्षि विद्वान्, इति ।

यस्त्वष्टा देवो जनित्री विश्वस्य जनयित्र्याविमे द्यावापृथिव्यौ रूपैर्देवतिर्यङ्मनुष्याद्याकारैरपिंशद्रूपवत्यावकरोत् । तथा विश्वा भुवनानि सर्वाणि भूतजातान्यपिंशद्रूपयुक्तान्यकरोत् । हे होतर्यजीयान्यष्टृतमस्त्वं विद्वानभिज्ञः सन्निषितोऽस्माभिः प्रार्थितोऽद्यास्मिन्दिन इह कर्मणि, तं त्वष्टारं देवं यक्षि यज ।

अथैकादशीमाह—

उपावसृजत्त्मन्या समञ्जन् । देवानां
पाथ ऋतुथा हवीꣳषि । वनस्पतिः
शमिता देवो अग्निः । स्वदन्तु
हव्यं मधुना घृतेन, इति ।

वनस्पतिर्देवो यूपो त्मन्याऽऽत्मनैव परानिरपेक्षयैवर्तुथा तत्तदृतौ देवानां पाथः पशुलक्षणमन्नमन्यानि च हवींषि समञ्जन्सम्यक्प्रकाशयन्नुपावसृजद्देवेभ्यः

प्रयच्छतु । किंच योऽयं वनस्पतिर्यूपदेवो यश्च शमिता शमिता देवो योऽप्य-ग्निर्देव एते सर्वे मधुना मधुरेण घृतेन हव्यं स्वदन्तु स्वादु कुर्वन्तु ।

अथ द्वादशीमाह–

सद्योजातो व्यमिमीत यज्ञम् ।
अग्निर्देवानामभवत्पुरोगाः । अस्य
होतुः प्रदिश्यृतस्य वाचि । स्वाहा-
कृतꣳ हविरदन्तु देवाः, इति ।

यज्ञैः स्योनं यजध्यै विद्वानष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

सद्योजातो जातमात्र एवायमग्निर्यज्ञं व्यमिमीत विशेषणोत्पादयति । अत एवायमग्निर्देवानां मध्ये पुरोगाः प्रथमगामी मुख्योऽभवत् । प्रदिशि प्रकृष्टायां पूर्वस्यां दिशि स्थितस्यर्तस्य यज्ञनिष्पादकस्यास्याऽऽहवनीयाख्यस्य होतुरग्ने-र्वाचि वागुपलक्षित आस्ये स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं हविः सर्वे देवा अदन्तु भक्षयन्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

तृतीये प्रयाजयाज्या आप्रीसंज्ञका अभिहिताः । चतुर्थे पर्यग्नीकरणीया उच्यन्ते । कल्पः–“ यदा जानाति पर्यग्नये क्रियमाणायानुब्रूहीति, तदा मैत्रा-वरुणः पर्यग्निकरणायान्वाहाग्निर्होता नो अध्वरे ” इति । तत्र प्रथमामृचमाह–

अग्निर्होता नो अध्वरे । वाजी सन्परिणी-
यते । देवो देवेषु यज्ञियः, इति ।

देवेषु मध्ये यज्ञियो यज्ञार्हो देवोऽग्निर्नोऽध्वरेऽस्मदीये यज्ञे होता होमनिष्पादको वाजी हविर्लक्षणान्नयुक्तः सन्परिणीयते परितो नीयते ।

अथ द्वितीयामृचमाह—

परि त्रिविष्ट्यध्वरम् । यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत्, इति ।

रथीरिव रथवानिवायं पर्यग्निकरणार्थ उल्मुकरूपोऽग्निरध्वरं यागसाधनं पशुं त्रिविष्टि वेष्टनत्रयं यथा भवति तथा परियाति । किमर्थं प्रयः प्रापणीयं हविर्देवेष्वादधदादधात्वित्येवमर्थम् ।

अथ तृतीयामृचमाह—

परि वाजपतिः कविः । अग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे, इति ।

अग्निर्होता नो नव ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

वाजपतिरन्नस्य पालकः कविर्विद्वानयमग्निर्हव्यानि पुरुरूपाणि पर्यक्रमीत्परिक्रान्तवान् । किं कुर्वन्दाशुषे हविर्दत्तवते यजमानाय रत्नानि दधत्संपादयन् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

---

चतुर्थे पर्यग्निकरणीया ऋच उक्ताः । पञ्चमेऽध्रिगुप्रैषवादिनं होतारं प्रति मैत्रावरुणप्रैषोऽभिधीयते । कल्पः—“ यदा जानात्युप प्रेष्य होतर्हव्या देवेभ्य इति तदा मैत्रावरुणः प्रेष्यत्यजैदग्निः ” इति । पाठस्तु—

अजैदग्निः । असनद्वाजं नि । देवो देवेभ्यो हव्यावाट् । प्राञ्जोभिर्हिन्वानः । धेनाभिः

कल्पमानः। यज्ञस्याऽऽयुः प्रतिरन्। उप-
प्रेष्य होतः। हव्या देवेभ्यः (१), इति।

अजैदष्टौ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये पञ्चमोऽनुवाकः॥ ५॥

---

अथ संज्ञपनार्थं नीयमानस्य पशोः पुरतो योऽयमुल्मुकाख्योऽग्निः सोऽयमजैज्जयतु। हविःसंपादनसामर्थ्यमत्र जयः। वाजमन्नं हविर्लक्षणं न्यसनन्नीयमानं संभजतु। देवो द्योतनात्मकोऽयमग्निर्देवेभ्यो देवार्थं हव्या हवींष्यवाड्वहतु। किं कुर्वन्, अञ्जोभिर्क्र्तिविग्भिर्गतिभिः प्रहिन्वानोऽग्रतो गच्छन्, धेनाभिः प्रीणयित्रीभिर्दीप्तिभिर्धारणादिभिर्वा कल्पमानः सामर्थ्यं संपादयन्यज्ञस्य यज्ञवतो यजमानस्याऽऽयुः प्रतिरन्प्रकर्षेण वर्धयन्। एवमयमग्निर्हव्यानि वहतु। हे होतरुपप्रेष्य प्रेर्यमाणमैत्रावरुणेन प्रेषितः सन्पश्चात्प्रेष्य ज्ञापय। किं ज्ञापितव्यमिति तदुच्यते—देवेभ्यो हव्या देवार्थं हवींषि ज्ञापय।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

अथ षष्ठोऽनुवाकः।

---

पञ्चमे मैत्रावरुणप्रैषोऽभिहितः। षष्ठे होतुरध्रिगुप्रैषोऽभिधीयते। कल्पः—"अथ मैत्रावरुणेन प्रेषितोऽध्रिगुमन्वाह दैव्याः शमितारः" इति। पाठस्तु—

दैव्याः शमितार उत मनुष्या आरभध्वम्।
उपनयत मेध्या दुरः। आशासाना मेधप-
तिभ्यां मेधम्। प्रास्मा अग्निं भरत। स्तृणीत
बर्हिः। अन्वेनं माता मन्यताम्। अनु पिता।
अनु भ्राता सगर्भ्यः। अनु सखा सयूथ्यः।

उदीचीनां॑ अस्य पदो निधत्तात् (१) ।
सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृ-
जतात् । दिशः श्रोत्रम् । अन्तरिक्षमसुम् ।
पृथिवी॑ शरीरम् । एकधाऽस्य त्वचमाच्छ्य-
तात् । पुरा नाभ्या अपिशसो वपामुत्खि-
दतात् । अन्तरेवोष्माणं वारयतात् । श्येन-
मस्य वक्षः कृणुतात् । प्रशसा बाहू (२) ।
शला दोषणीं । कश्यपेवा॑सा । अच्छिद्रे
श्रोणीं । कवषोरू स्रेकपर्णाऽष्ठीवन्ता ।
षड्विं॑शतिरस्य वङ्क्रयः । ता अनुष्ठ्यो-
च्यावयतात् । गात्रं गात्रमस्यानूनं कृणुतात् ।
ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षः
स॑सृजतात् । वनिष्ठुमस्य मा राविष्ट (३) ।
उरूकं मन्यमानाः । नेद्वस्तोके तनये । रवि-
ता रवच्छमितारः । अध्रिगो शमीध्वम् ।
सुशमि शमीध्वम् । शमीध्वमध्रिगो, इति ।

शमितारो विशसनकर्तारस्ते च द्विविधा देवरूपा मनुष्यरूपाश्च । ते च संबोध्यन्ते । हे दैव्याः शमितारः, अपि च हे मनुष्याः शमितारो यूयमुभयेऽपि वक्ष्यमाणं कर्म कर्तुमारभध्वम् । किं कर्तव्यमिति तदुच्यते—मेध्या मेधार्हा दुरो द्वारो हविर्मार्गान्विशसनहेतीर्योपनयत संनिधापयत । मेधपतिभ्यां यज्ञ-स्वामिभ्यां पत्नीयजमानार्थमग्नीषोमदेवनार्थं वा मेधं यज्ञमाशासानाः प्रार्थय-माना यूयमस्मै संज्ञपनस्थानमुपनीयमानाय पशवेऽग्निमुल्मुकाख्यं प्रभरत प्रक-र्षेण क्षेपणार्थं हरत । अथ संज्ञपनस्थानं नीतस्य पशोरधस्ताद्बर्हिस्तृणीतोपा-

१ क. ख. संज्ञपनार्थं ।

करणयोर्बर्हिषोरन्यतरदुपक्षिपत । अथैनं संज्ञप्यमानं पशुं मात्रादयोऽनुमन्यन्तामङ्गी कुर्वताम् । समाने गर्भे भवः सगर्भ्यो भ्राता । समाने यूथे भवः सयूथ्यः सखा । संज्ञप्यमानस्यास्य पदः पादानुदीचीनानुत्तरदिग्गतान्निधत्तात्स्थापयत । सूर्यं चक्षुर्गमयताच्चक्षुः सूर्यदेवतां प्रापयत । प्राणमसुं वायुदेवतां प्रत्यन्वसृजतादनुप्रापयत । श्रोत्रं दिग्देवताः प्रापयत । असुं जीवमन्तरिक्षं प्रापयत । शरीरं पृथिवीं प्रापयत । एकधैकविधया विच्छेदराहित्येनास्य त्वचमाच्छयताच्छिन्नां कुरुत । नाभ्या अपि शसश्छेदात्पूर्वमेव वपामुत्खिदतादुद्धरत । ऊष्माणमुच्छ्वासमन्तरेव वारयतात्पिहितास्यं संज्ञपयेदित्यर्थः । श्येनं श्येनाकृतिकमस्य पशोर्वक्षः कुरुत । बाहू प्रशसा प्रच्छेदनौ कुरुत । दोषणी प्रकोष्ठौ शला कृणुताच्छलाकाकारे कुरुत । अंसा कश्यपा, उभावप्यंसौ कच्छपाकारौ कुरुत । श्रोणी उभे अप्यच्छिद्रे अन्यूने कुरुत । कवषा कपाटाकारौ स्रेकपर्णा करवीरपत्त्रकारावूरू अष्ठीवन्ता मूलयुक्तौ कुरुत । अस्य पशोर्वङ्क्रयो वक्राणि पार्श्वास्थीनि षड्विंशतिर्भवन्ति ताः सर्वा अनुष्ठ्याऽनुक्रमेण स्वस्थानगतान्युच्च्यावयतादुद्धरत । गात्रं गात्रं सर्वमप्यवदानीयमङ्गमनूनं कृणुतादविकलं कुरुत । ऊवध्यगोहं पुरीषगूहनस्थानं पार्थिवं खनतात्पृथिवीसंबन्धमवटं खनत । अस्रा रुधिरेण रक्षः संसृजतात्पिशितलोलुपं राक्षसादि संयोजयत । अस्य पशोर्वनिष्ठुं गुदसदृशमात्रं मांसं मा राविष्ट लूनं छिन्नं मा कुरुत । उरूकं मन्यमानाः पक्षिविशेषाकारमवगच्छन्त उलूकसदृशं वनिष्ठुं तथैवोद्धरत न तु मध्यतश्छिन्नं कुरुतेत्यर्थः । वो युष्माकमेवं कुर्वतां संबन्धिनि तोके पुत्रे तनये तदीयापत्ये च रविता शमयिता नेत्त्रैव रवद्ब्रूयात् । यथाशास्त्रं छेदने क्रियमाणे भवतां गृहे पुत्रपौत्रादिनिमित्तं रोदनं न भवतीत्यर्थः । हे शमितारो दैव्या मनुष्याश्च हेऽध्रिगो तेषु मुख्यदेव यूयं सर्वेऽपि शमीध्वं विशसनादिना पशुं संस्कुरुध्वम् । पुनरपि विशेषाकारेणोच्यते । सुशमि सुष्ठुशमनं शास्त्रीयविशसनं यथा भवति तथा शमीध्वं पशुं शमयत संज्ञपयत । हेऽध्रिगो, इतरैः सह यूयं सर्वे शमीध्वं सर्वथा शमयत । न तूपचरितं शमनं कुरुत । क्रूरं कर्मेति मत्वा तदुपेक्षणं मा भूदिति पुनः पुनर्वचनम् ।

कल्पः—" अथाप्येतं जपं जपत्यध्रिगुश्च " इति । पाठस्तु—

अध्रिगुश्चापापश्च । उभौ देवानाꣳ शमितारौ ।

---

१ ग. प. 'युष्मानक' । २ ङ. ख भवतां गृहादिकं 'निमित्तं कृत्य रोदिता न भविष्यती' ।

ताविमं पशुꣳ श्रपयतां प्रविद्वाꣳसौ । यथा यथाऽस्य श्रपणं तथा तथा, इति ।

धनाद्याहू मा रविष्ट तथा तथा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

योऽयमग्निगुनामको देवो यश्चापापनामकस्तावुभौ देवानां मध्ये शमितारौ विशसनस्य कर्तारौ तावुभाविमं पशुं श्रपयतां श्रपणं पाकं कुरुताम् । कीदृशौ यथा यथाऽस्य श्रपणं तथा तथा प्रविद्वांसौ येन येन प्रकारेणास्य पशोः श्रपणं भवति तं तं प्रकारं प्रकर्षेण जानन्तौ ।

अत्र मीमांसा । नवमाध्यायस्य तृतीयपादे चिन्तितम्—

अविकारो विकारो वा स्यान्मेधपतिशब्दयोः ।
विकारे स्वामिदेवार्थ एकार्थौ वाऽन्तिमेऽपि किम् ॥
स्वाम्यर्थौ देवतार्थौ वा स्यादन्याय्यत्वतोऽग्रिमः ।
अर्थसत्त्वाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः ॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यर्थस्मिन्न्यायया विना ।
देवार्थाऽऽर्थदेव एकोऽभिधाने द्वे द्विधेरणम् ॥

अग्निगुप्रैषनिगदस्याऽऽद्राविदमाम्नायते—" दैव्याः शमितार उत मनुष्या आरभध्वम् । उपनयत मेध्या दुरः । आशासाना मेधपतिभ्यां मेधम् " इति । शाखान्तरे तु—" मेधपतये मेधम् " इति । अयमर्थः—शमितारः पशुघातिनो द्विविधा दैव्या मनुष्याश्च तानुभयान्संबोध्य होता कर्तव्यविशेषान्निर्दिशति—प्रारम्भः कर्तव्यः । मेधां यज्ञसंबन्धयोग्यान्दुरः पदार्थान्हिंसाहेतूनिहाऽऽनयत । किं कुर्वन्तो यजपतिभ्यां यजपतये वा यज्ञमाशासाना इति । तत्रैकवचनान्तस्य द्विवचनान्तस्य मेधपतिशब्दस्य बहुपशुयुक्तासु विकृतिष्वनूह ऊहो वेति संशयः । ऊहपक्षेऽपि किमेकवचनान्तस्य यजमानोऽर्थो द्विवचनान्तस्याग्नीषोमौ देवते इत्येवमर्थभेदः । किंवा शब्दद्वयस्यैक एवार्थ इति संशयः । एकार्थत्वपक्षेऽपि यजमान एवार्थो देवतैव वेति संशयः । तत्राग्नीषोमीये पशौ यजमानोऽग्नीषोमौ चेति त्रयो मेधस्य पतयस्तत्रैकवचनस्य द्विवचनस्य वाऽन्यायनिगदत्वेन प्रकृतावविवक्षितस्य वचनस्य विकृतावनूह इत्याद्यः पक्षः । प्रकृतौ सम-

१ क. देवार्थं । २ क. समवेतार्थं ।

वेतार्थत्वे संपादयितुं शक्ये सत्यन्यायनिगदत्वाभावाद्विकृतावूहः कर्तव्य इति द्वितीयः पक्षः। अस्मिन्द्वितीयपक्षेऽपि प्रकृतावुपन्यस्तप्रकारेणार्थभेदाद्विकृतिषु बहुयजमानयुक्तास्वहीनादिषु यजमानानुसारेणैकवचनान्त ऊहनीयः। अनेकपशुयुक्तासु विकृतिषु देवतानुसारेण द्विवचनान्त ऊहनीयः। सोऽयं शाखाविकल्पेन प्रथमः पक्षः। शाखाभेदेन पाठभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः, किंत्वेक एवार्थ इति पक्षान्तरम्। तथाऽपि देवतायाः संप्रदानत्वेन स्वामित्वाभावान्मेधपतिशब्दयोग्यता नास्तीति यजमान एव तच्छब्दार्थः। तस्मिंश्च यजमाने स्वत एकत्वं जायया सह द्वित्वमित्येकवचनद्विवचने उभे अपि समवेतार्थे। ततो यजमानद्वयोपेतायां विकृतावेकवचनान्तो द्वित्वेनोहनीयः। यजमानबहुत्वोपेतायां विकृतौ द्विवचनान्तो बहुत्वेनेति पूर्वः पक्षः। मेधस्य यजमानार्थत्वं नैवाऽऽशासनीयम्। तस्य सिद्धत्वात्। देवतार्थत्वं त्वाशासनीयम्। ततो मेधमाशाना इत्येतद्देवतायां समवेतार्थम्। संप्रदानस्याप्युद्देश्यत्वेन प्राधान्यान्मेधपतित्वमविरुद्धम्। देवत्वाकारेणैकत्वादग्नित्वसोमत्वाकारेण द्वित्वाच्चैकवचनद्विवचने उपपद्येते[1]। तस्माद्देवतानुसारेण विकृतावूह इति राद्धान्तः।

तत्रैवान्यच्चिन्तितम्—

आदित्येष्वेकवाच्येष ऊह्यो नो वोह्यतेऽन्यवत्।
गणार्थत्वादनूहोऽतो विकल्पः प्रकृताविव॥

प्रजापशुसंपत्तिकामस्य बहुदेवत्यः पशुराम्नायते—"यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामायाऽऽलभेत" इति। वशा वन्ध्या। कामाय कामुकेभ्य इत्यर्थः। अत्र चोदकप्राप्तो मेधपतय इत्येकवचनान्तः शब्द आदित्यानां बहुत्वाद्बहुवचनान्तत्वेनोहनीयः। यथा मेधपतिभ्यामिति द्विवचनान्त ऊह्यते। यथा वा पाशमित्येकवचनान्त ऊह्यते तद्वदिति चेत्। मैवम्। प्रकृतावग्नीषोमयोर्गणैकत्वमेकवचनान्तो ब्रूते। आदित्यानामपि गणैकत्वं समानमित्यनूहः। तस्मादविकृत एकवचनान्त इतरेण सह प्रकृताविवात्रापि विकल्प्यते।

तत्रैवान्यच्चिन्तितम्—

कृष्णग्रीवादिके नोह ऊहो वाऽऽस्य न पूर्ववत्।
देवत्वं न गणस्यात ऊहो बह्वभिधित्सया॥

यूपैकादशिन्यामग्न्यादिदेवताकाः पशव आम्नाताः—"मैवाऽऽग्नेयेन वापथति-।

[1] क. उपपन्ने।

मिथुनं सारस्वत्या करोति । रेतः सौम्येन दधाति । प्रजनयति पौष्णेन " इत्यादिना । ते च स्वनामभिरन्यत्राऽऽम्नाताः–" आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुः सौम्यः । पौष्णः श्यामः " इत्यादिना । तत्रास्यैकवचनान्तस्य मेधपतिशब्दस्याऽऽदित्येष्विव नोह इति चेत् । मैवम् । वैषम्यात् । आदित्यगणस्य तत्र देवत्वमिह त्वेकैकस्यैव पृथग्देवत्वम् । अतो बहून्देवानभिधातुं बहुवचनान्तत्वमूहनीयम् ।

तत्रैवान्यच्चिन्तितम्–

द्विपश्वोश्चक्षुराद्यूहो न वाहः पशुभेदतः
तेजोमात्रस्य सूर्यादावैकीभावादनूहनम् ॥

अग्नीषोमीयपशावध्रिगुप्रैषे पशुसंबन्धिचक्षुरादीनां सूर्यादिसंसर्ग आम्नायते– " सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । दिशः श्रोत्रम् " इत्यादि । " मैत्रं श्वेतमालभेत । वारुणं कृष्णम् " इति विहितयोर्द्वयोः पश्वोर्मन्त्रगताश्चक्षुरादिशब्दा द्विवचनान्तत्वेनोहनीयाः । कुतः । पशुभेदेन चक्षुरादीनां भिन्नत्वात् । इति चेत् । मैवम् । न खल्वत्रेन्द्रियाधिष्ठानं शरीरगतं गोलकं चक्षुःशब्देन विवक्षितम् । तद्विवक्षायामेकस्मिन्नपि पशौ गोलकभेदादेकवचनान्तचक्षुःशब्दस्यानन्वयप्रसङ्गात् । गोलकस्य सूर्यादिप्राप्त्यसंभवाच्च । यत्तु रूपदर्शनादिसामर्थ्यलक्षणं तेजोमात्रं तदत्र चक्षुरादिशब्दैर्विवक्षितम् । तच्च पश्वनेकत्वेऽपि ततो निर्गत्य सूर्यादावेकीभूतत्वात्समुद्रप्रविष्टनदीवन्न भेदेनावतिष्ठते । तस्मान्नास्त्यूहः ।

तत्रैवान्यच्चिन्तितम्–

एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः ।
आद्यो मैवं प्रकृतस्य सकृत्त्वस्योचितत्वतः ॥

तस्मिन्नेवाध्रिगुप्रैषे श्रूयते–" एकधाऽस्य त्वचमाच्छ्यतात् " इति । छिन्धीत्यर्थः । तत्र द्वयोः पश्वोरेकधेत्यस्य शब्दस्य नास्ति विकारः । कुतः । तस्य शब्दस्येह सहत्ववाचित्वात् । " एकधा गाः पाययति " इत्यत्र यौगपद्ये प्रयोगदर्शनात् । पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्तृकस्य वदत इति प्राप्ते ब्रूमः । प्रकृतावेकस्मिन्पशौ यौगपद्यलक्षणोऽर्थो न संभवति । ततः सकृत्त्वं तस्य शब्दस्यार्थः । त्वगियमवयवशो बहुकृत्वो न छेत्तव्या किंतु सर्वाऽपि सकृदेकप्रयत्नेनेत्युक्तं भवति । यत्प्रकृतौ सकृत्त्वं तदेव विकृतावुचितम् । ततः प्रतिपशु सकृत्त्वमभिधातुमेकधेत्ययं मन्त्रोऽभ्यसितव्यः ।

१ क॰ °धेः · व्यतिक्रमेण स्व° ।

तत्रैव चतुर्थपादेऽन्यच्चिन्तितम्—

माहृश्यमुत साकल्यं श्येनाद्युक्त्या विवक्षितम् ।
प्रसिद्धसंनिधंगाद्यस्तत्सत्त्वादखिलोद्धृतिः ॥

अधिगुप्रैषवचन एतदाम्नायते—“ श्येनमस्य वक्षः कृणुतात ” इति । तत्र यथाऽमी पिष्टपिण्डाः सिंहाः क्रियन्तामित्युक्ते प्रसिद्धसिंहसंनिधानात्पिष्टपिण्डेषु सिंहसादृश्यं कर्तव्यतया प्रतीयते तथैवास्य पशोर्वक्षः श्येनं कृणुतादित्यत्र श्येन-सादृश्यं वक्षसि कर्तव्यतया प्रतीयते । ततो वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचर-णचञ्चुवादिकं संपाद्य श्येनसंस्थानं कर्तव्यमिति प्राप्ते ब्रूमः । वक्षसि श्येनसादृश्यं स्वत एव पूर्वमस्ति ततो यथा तन्न नश्यति तथा साकल्येनोद्धरणीयमिति विव-क्षया श्येनशब्दः प्रयुज्यते । तथा सति हविरविकलं भवति । अंसादिष्वनेन न्यायेन साकल्यविवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या । एतदेवाभिप्रेत्य श्रूयते—“ गात्रं गात्रमस्यानूनं कृणुतात् ” इति ।

तत्रैवान्यच्चिन्तितम्—

प्रशसेत्यसिरर्थः स्यात्स्तुतिर्वा छेदनादसिः ।
स्तुतिः कार्त्स्न्याय बाह्वोः स्यात्स्वधितिच्छेदसाधनम् ॥

अधिगुप्रैषे वाक्यान्तरमाम्नातम्—“ प्रशसा बाहू ” इति । तत्र शसु हिंसा-यामित्यस्माद्धातोः सोपसर्गादुत्पन्नस्य सकारान्तप्रातिपदिकस्य तृतीयैकवचनान्तस्य प्रशसेति रूपं भवति । तच्चासेर्वाचकम् । तदेतत्केनचिद्ब्राह्मणवाक्येनानूद्यते—“ दश प्रयाजानिष्ट्वाऽऽह शासमाहरेति, अग्निर्वै शास इत्याचक्षते ” इति । सोऽयमसिर्बाह्वोश्छेदनहेतुः । तस्माद्दृष्टार्थलाभादसिः प्रशसेत्यस्य पदस्यार्थ इति चेत् । मैवम् । शंसु स्तुतावित्यस्माद्धातोरयमुत्पन्नः । प्रशसावित्यस्य द्वितीया-द्विवचनान्तस्य शब्दस्य च्छान्दस औकारलोप आकारादेशे च कृते प्रशसेति भवति । बाह्वोः प्रशस्तत्वं नाम कार्त्स्न्यम् । प्रशस्तौ बाहू कृणुतादित्युक्ते निःशेषेणोद्धर्तव्यौ बाहू इत्येतादृशो दृष्टार्थो लभ्यते । नात्र च्छेदनसाधनत्वमसेः संभवति । स्वधितेस्तत्साधनत्वेन विहितत्वात् । तस्मात्स्तुतिरेवास्य शब्दस्यार्थः । तथा सति बाहुवृद्धौ बहुवचनान्तत्वेन प्रशसेति पदमूहनीयम् ।

तत्रैवान्यच्चिन्तितम्—

षड्विंशतिर्वङ्क्रयोऽस्त्यन्यनूहः स्यादुताश्वत ।
ऊहेऽपि वचनान्यत्वमस्त्येवावर्ततेऽथवा ॥

१ क. प्रशसा ।

षड्विंशेतरुताभ्यासः समस्तोक्तिर्भवेदुत ।
अनूह्योऽकरणत्वेन दृष्टलाभात्तदूहनम् ॥
संख्यायाश्च पशोर्युक्तेर्वङ्क्रीणां मुख्यतावशात् ।
अमी पक्षा युज्यन्तेऽन्त्यस्ता अनुष्ठचेति शेषतः ॥

अध्रिगुप्रैषे वाक्यमिदमाम्नायते—"षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठ्योच्च्यावयतात्" इति । अयमर्थः । वङ्क्रयो वक्राणि पार्श्वास्थीनि तान्यस्य पशोः षड्विंशतिसंख्यानि । एकैकस्मिन्पार्श्वे त्रयोदशानामवस्थितत्वात् । ताश्च वङ्क्रीरनुष्ठ्यानुष्ठायानुक्रमेण गणयित्वेति यावत्, उच्च्यावयतादुद्धरतादिति । सोऽयं मन्त्रो वङ्क्रीणामुद्धरणे करणतया न विनियुक्तः किंतु संज्ञपनात्प्राक्पशौ नीयमाने होत्रा प्रयुज्यते । ततोऽसमवेतार्थत्वादनूह इत्याद्यः पक्षः । अकरणत्वेऽपि नादृष्टार्थत्वं शमितृणामुद्धरणीयार्थस्य स्मारकत्वेन दृष्टार्थलाभात् । तस्मात्प्रकृतौ समवेतार्थतया विकृतावूहः । तदाऽपि चत्वारः पक्षाः । तत्र संख्या मुख्यत्वेन प्रकाश्यते । तेन द्वयोः पश्वोर्द्विगुणितां षड्विंशतिसंख्यां प्रकाशयितुं द्विवचनान्ततया षड्विंशतिशब्द ऊहनीय इत्याद्यः पक्षः । पशोश्चोदितत्वेन मुख्यत्वात्तद्वाचकं षष्ठ्यन्तमस्येति पदं पश्वनुसारेणाऽऽवर्तनीयमिति द्वितीयः पक्षः । युक्तियोगः । षड्विंशतिसंख्यायाः पशुना सह संबन्धः । तस्य मुख्यत्वात्प्रतिपशु विभक्तां संख्यां प्रकाशयितुं षड्विंशतिपदस्याभ्यास इति तृतीयः पक्षः । अत्र सर्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि । संख्येयानां वङ्क्रीणां मुख्यत्वात्तासामियत्ता समस्य वक्तव्या । ततो द्विपश्वाशदनयोर्वङ्क्रयोऽष्टसप्ततिरेषां वङ्क्रय इत्येवं यथायोगमूहनीयमिति चतुर्थः पक्षः । अयमेव सिद्धान्तो वाक्यशेषानुगुण्यात् । ता अनुष्ठ्येत्ययं वाक्यशेषः । स च व्याख्यातः ।

तत्रैवान्यच्चिन्तितम्—

पक्षी वपाऽथवोरूको रलयोरविशेषतः ।
पक्षी वपा संनिधानाद्भ्रान्तिच्छेदनिषेधतः ॥

अध्रिगुप्रैषे वचनमिदमाम्नायते—"वनिष्ठुमस्य मा राविष्ट । उरूकं मन्यमानाः" इति । वनिष्ठुर्वपासमीपवर्ती कश्चित्पश्वङ्गविशेषस्तं मा राविष्ट तस्य लवनं मा कुरुत । व्यत्ययेन लकारस्य रेफः । किं कुर्वन्तः । उरूकं मन्यमाना वनिष्ठावुलूकबुद्धिं कुर्वन्त इत्यर्थः । अत्रोरूकशब्देन काकविरोधी कश्चिदुलूकनामा पक्षिविशेषोऽभिधीयते । कुतः । रलयोरविशेषात् । पर्यङ्कः पल्यङ्कः

१ क 'क्षा न युज्यन्ते स्वन्त्योऽनष्टेश्चे'। ग. 'क्षा हि युज्यन्ते ह्यरता अनुष्ठ्येति'।

रोमाणि लोमानीत्यादिदर्शनात् । उरूकशब्दः सादृश्यलक्षकः । पक्षिसदृशं वनिष्ठुं विवेकेन मन्यमाना मा राविष्टेति वाक्यार्थः । तस्मादुरूकः पक्षीति प्राप्ते ब्रूमः । उरूकशब्देनात्र वपा लक्ष्यते । कुतः । वनिष्ठुसंनिधानात् । सति हि संनिधावुरूकत्वभ्रान्तिर्वनिष्ठौ संभवति । भ्रान्तिप्राप्तं च लवनमत्र निषिध्यते । उरूकं मन्यमाना वनिष्ठुं मा राविष्टेत्युक्तत्वात् । वपालवनकाले भ्रान्त्या वनिष्ठोर्यल्लवनं तस्य निषेधे सति दृष्टार्थो लभ्यते । भ्रान्तिनिवारणस्य दृष्टत्वात् । त्वत्पक्षे तु वनिष्ठोर्लवनमेव नास्ति । तच्चायुक्तम् । हृदयाद्यङ्गवल्लवितव्यत्वात् । "वनिष्ठुमग्नीधे षडवत्तं संपादयति" इत्याद्यनुष्ठानविधानात् । ततो लवननिषेधस्य समवेतार्थत्वेनादृष्टार्थो मन्त्रपाठः प्राप्नुयात् । तस्माद्वपावचन उरूकशब्दः । यद्यपि वपायामप्रसिद्ध उरूकशब्दस्तथाऽप्युरु विस्तीर्णमूको मेदो यत्रेत्यवयवार्थद्वारा मेदस्विन्यां वपायां युक्त उरूकशब्दः । एवं सत्यनेकवपासु विकृतिष्वेकवचनान्त उरूकशब्द ऊहनीयः ।

इति श्रीमत्सायणचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

षष्ठेऽध्रिगुप्रैषोऽभिहितः, सप्तमे स्तोकविषयं मैत्रावरुणानुवचनमुच्यते । कल्पः— "यदा जानाति स्तोकेभ्योऽनुब्रूहीति तदा मैत्रावरुणस्तोकीया अन्वाह जुषस्व सप्रथस्तमम्" इति । तत्र प्रथमामृचमाह—

जुषस्व सप्रथस्तमम् । वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि, इति ।

हेऽग्ने त्वं हव्या हवींष्यस्मदीयान्यासन्यास्ये मुखे जुह्वानः प्रक्षिपन्वचोऽस्मदीयं स्तोत्रं जुषस्व सेवस्व । कीदृशं वचः । सप्रथस्तममतिशयेन विस्तृतम् । देवप्सरस्तमं देवानां प्रीणयितृतमम् ।

अथ द्वितीयामृचमाह—

इमं नो यज्ञममृतेषु धेहि । इमा हव्या जातवेदो जुषस्व । स्तोकानामग्ने मेदसो घृतस्य ।

होतः प्राशान प्रथमो निषद्य, इति ।

हे जातवेदो नोऽस्मदीयमिमं यज्ञममृतेषु देवेषु धेहि स्थापय। इमा हव्येमान्यस्मदीयानि हवींषि जुषस्व । हे होतर्होमनिष्पादकाग्ने मेदसो वपायाः संबन्धि यद्घृतं तस्य स्तोकानां बिन्दूनां मध्ये स्वादुन्बिन्दून्प्रथमस्त्वमेव मुख्यः सन्निषद्यात्रोपविश्य प्राशान प्रकर्षेण भक्षय ।

अथ तृतीयामृचमाह—

घृतवन्तः पावक ते । स्तोकाः श्चोतन्ति
मेदसः । स्वधर्मं देववीतये ( १ ) ।
श्रेष्ठं नो धेहि वार्यम्, इति ।

हे पावक शोधकाग्ने त्वदर्थं मेदसो वपायाः संबन्धिनो घृतवन्तो घृतसहिताः स्तोका बिन्दवः श्चोतन्ति क्षरन्ति । देववीतये देवानां भक्षणाय । नोऽस्माकं स्वधर्मं कुलोचितं यागाद्यनुष्ठानरूपं धर्मं धेहि संपादय । कीदृशं श्रेष्ठमतिप्रशस्तमत एव वार्यं सर्वैर्वरणीयम् ।

अथ चतुर्थीमृचमाह—

तुभ्यꣳ स्तोका घृतश्चुतः । अग्ने विप्राय
सन्त्य । ऋषिः श्रेष्ठः समि-
ध्यसे । यज्ञस्य प्राविता भव, इति ।

सन्तिर्दानं तामर्हतीति सन्त्यः । हे सन्त्य फलदानकुशलाग्ने विप्राय मेधाविने तुभ्यं त्वदर्थं स्तोका बिन्दवो घृतश्चुतो घृतस्राविणो वर्तन्ते । त्वमप्यृषिर्मन्त्रद्रष्टा श्रेष्ठः प्रशस्यतमश्चास्माभिः समिध्यसे । अतो यज्ञस्यास्मदीयस्य प्राविता प्रकर्षेण रक्षिता भव ।

अथ पञ्चमीमृचमाह—

तुभ्यꣳ श्चोतन्त्यध्रिगो शचीवः ।
स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनाऽऽगाः ।

हृव्या जुषस्व मेधिर, इति ।

हेऽग्निरगवाभूतरश्मे हे शचीवः शक्तिमन्नग्ने मेदसो वपायाः संबन्धिनो घृतस्य स्तोकासो बिन्दवस्तुभ्यं त्वदर्थं श्चोतन्ति क्षरन्ति । त्वं च कविशस्तो विद्वद्भिर्ऋत्विग्भिः स्तुतः सन्बृहता भानुना महता तेजसा युक्त आगा आगच्छ । हे मेधिर यज्ञयोग्य हव्या जुषस्वास्मदीयानि हवींषि जुषस्व ।

अथ षष्ठीमृचमाह—

ओजिष्ठं ते मध्यतो मेद उद्भृतम् । प्र ते वयं ददामहे । श्चोतन्ति ते वसो स्तोका अधि-त्वचि । प्रति तां देवशो विहि ( ७ ), इति ।

देववीतये उद्भृतं ... च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

हेऽग्ने ते त्वदर्थमोजिष्ठं बलवत्तमं मेदो वपारूपं मध्यतः पशोर्मध्यभागादुद्भूतमुत्कृष्य संपादितं वयं यजमानास्ते तुभ्यं प्रददामहे प्रकर्षेण दद्मः । हे वसो सर्वेषां निवासहेतोऽधित्वचि वपायामधिश्रिताः स्तोका बिन्दवस्ते च त्वदर्थं श्चोतन्ति क्षरन्ति । देवशस्तत्तद्देवतानुष्ठानार्थं स्तोकान्बिन्दून्प्रति विहि प्रत्येकं पिब ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः

---

सप्तमे स्तोकविषयं मैत्रावरुणानुवचनमुक्तम् । अष्टमे वपापुरोडाशस्विष्टकृतां मैत्रावरुणवक्तृकाः पुरोनुवाक्याः प्रैषाश्चाभिधीयन्ते । कल्पः—" यदा जाना-

---

१ क. °रुणेन वक्तव्याः पु° ।

तीन्द्राग्नीभ्यां छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रूहीति तदा मैत्रावरुणः पुरोनुवाक्यामन्वाह—आ वृत्रहणा " इति । पाठस्तु—

आ वृत्रहणा वृत्रहभिः शुष्मैः । इन्द्र यातं
नमोभिरग्ने अर्वाक् । युवꣳ राधोभिरकवे-
भिरिन्द्र । अग्ने अस्मे भवतमुत्तमेभिः, इति ।

हे इन्द्र हेऽग्ने युवामुभौ वृत्रहभिः पापघातिभिः "पाप्मानमेव वृत्रं तीर्त्वा" इति श्रुतेः । शुष्मैर्बलैर्वृत्रहणा पापघातिनौ सन्तौ नमोभिरस्मदीयैर्नमस्कारैरर्वागस्मदाभिमुख्येनाऽऽयातमागच्छतम् । हे इन्द्र हेऽग्ने युवं युवामुभावकवेभिरकुत्सितैरुत्तमभिः श्रेष्ठै राधोभिर्धनैरस्मे भवतमस्मासु तिष्ठतम् ।

अथ प्रैषमाह—

होता यक्षदिन्द्राग्नी । छागस्य वपाया
मेदसः । जुषेताꣳ हविः । होतर्यज, इति ।

इन्द्राग्नी उभौ देवौ दैव्यो होता यजतु । तौ चेन्द्राग्नी छागस्य संबन्धिनी मदस्विनी या वपा तस्याः संबन्धि हविर्जुषेताम् । तदर्थं हे मानुष होतर्यज याज्यां पठ ।

अथ पुरोडाशस्य पुरोनुवाक्यामाह—

वि ह्यख्यन्मनसा वस्य इच्छन् । इन्द्राग्नी ज्ञास
उत वा सजातान् (१) । नान्या युवत्प्रमतिरस्ति
मह्यम् । स वां धियं वाजयन्तीमतक्षम्, इति ।

यो यजमानो मनसा वस्यो वसीयः श्रेष्ठं धनमिच्छन्वर्तते । उत वाऽथवा सजातान्बन्धूनिच्छन्वर्तते । हे इन्द्राग्नी स हि यजमानो युवामेव व्यख्यद्विशेषेण प्रकाशयतीति ज्ञास एवं वृत्तान्तमहं जाने । मह्यं युवदन्या युवाभ्यामन्यः कश्चिदपि प्रमतिः प्रकर्षेण मन्तव्यो नास्ति । सोऽहं वां युवयोर्धियं बुद्धिं वाजयन्तीमस्मदर्थमन्नमिच्छन्तीमतक्षं भजामि संस्कृत्योत्पादयामि ।

---

१ क. पापघ्नद्भिः ।

अथ प्रैषमाह–

होता यक्षदिन्द्राग्नी। पुरोडाशस्य
जुषेताꣳ हविः। होतर्यज, इति।

पुरोडाशसंबन्धि हविरिति विशेषः। अन्यत्पूर्ववद्व्याख्येयम्।

अथ स्विष्टकृतः पुरोनुवाक्यामाह–

त्वामीडते अजिरं दूत्याय। हविष्मन्तः
सदमिन्मानुषासः। यस्य देवैरासदो बर्हि-
रग्ने। अहान्यस्मै सुदिना भवन्तु, इति।

हविष्मन्तो हविर्युक्ता मानुषासो मनुष्या यजमानाः सदमित्सर्वदैव दूत्याय देवा-न्प्रत्याह्वानादिदूतकर्मार्थमग्नेऽजरं गमनागमनसमर्थं त्वामीडते स्तुवन्ति। हेऽग्ने त्वं देवैः सह यस्य यजमानस्य बर्हिर्यज्ञमासद आसीदस्यधितिष्ठसि, अस्मै यजमाना-याहानि सर्वाणि सुदिना सुदिनानि भवन्तु।

अथ प्रैषमाह–

होता यक्षदग्निम्। पुरोडाशस्य
जुषताꣳ हविः। होतर्यज (२), इति।

सजातानग्निं द्वे च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्यायेऽ-ष्टमोऽनुवाकः॥८॥

पूर्ववद्व्याख्येयम्। स्विष्टकृत्पुरोडाशस्येति विशेषः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः॥८॥

अथ नवमोऽनुवाकः ।

अष्टमे वपापुरोडाशस्विष्टकृतां पुरोनुवाक्याः प्रैषाश्चोक्ताः । नवमे तेषामेव याज्या उच्यन्ते । कल्पः—"अथ होता यजति गीर्भिः" इति । पाठस्तु—

गीर्भिर्विप्रः प्रमतिमिच्छमानः । ईट्टे रयिं यशसं पूर्वभाजम् । इन्द्राग्नी वृत्रहणा सुवज्रा । प्र णो नव्येभिस्तिरतं देष्णैः, इति ।

विप्रो यजमानो गीर्भिः स्तुतिभिरीट्ट इन्द्राग्नी स्तौति । कीदृशो विप्रो रयिमिच्छमानो धनमिच्छन् । कीदृशं रयिं प्रमतिं प्रकर्षेण माननीयम् । यशसं यशोहेतुम् । पूर्वभाजं पूर्वान्पित्रादीन्भजतीति पूर्वभाक्, यादृशं पित्रादीनां धनमासीत्तादृशमित्यर्थः । वृत्रहणा पापघातिनौ सुवज्रा शोभनवज्रयुक्तौ तादृशौ हे इन्द्राग्नी नव्येभिर्नूतनैर्देष्णैर्धनदानैर्नोऽस्मान्प्रतिरतं प्रकर्षेण वर्धयताम् ।

अथ पुरोडाशस्य याज्यामाह—

मा च्छेद्म रश्मीꣳरिति नाधमानाः । पितॄणाꣳ शक्तीरनुयच्छमानाः । इन्द्राग्निभ्यां कं वृषणो मदन्ति । ता ह्यद्री धिषणाया उपस्थे, इति ।

वृषणा(णो) विद्वद्वृषभा यजमाना इन्द्राग्निभ्यामन्यं कं नाम देवं मदन्ति तोषयन्ति । हि यस्मात्कारणात्ताविन्द्राग्नी धिषणाया यजमानानां बुद्धेरुपस्थ उपर्यद्री आदरणीयौ केनाप्यनभिभाव्यौ वर्तेते । तस्मादेतावेवाऽऽदरणीयौ नान्यः कश्चिदित्यर्थः । कीदृशा विद्वद्वृषभाः पितॄणां शक्तीरनुयच्छमानाः पितृपितामहादीनां याः कर्मानुष्ठानशक्तयस्ताः सर्वा अनुवर्तमानाः । तदनुवृत्त्यर्थमेव रश्मीन्मा च्छेद्मेति नाधमाना रश्मिवत्संतता ये कर्मविशेषास्तेषां विच्छेदं मा कार्ष्मेत्यनेनाभिप्रायेण ताविन्द्राग्नी प्रति प्रार्थयमानाः ।

अथ स्विष्टकृतो याज्यामाह—

अग्निꣳ सुदीतिꣳ सुदृशं गृणन्तः । नमस्याम-

---

१ क मननीयम् । २ ख. ग. 'वेव दुर्गणी' ।

स्त्वेड्यं जातवेदः। त्वां दूतमरतिꣳ हव्यवाहम्। देवा अकृण्वन्नमृतस्य नाभिम् (१), इति।

जातवेदो द्वे च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये नवमोऽनुवाकः॥ ९॥

हे जातवेद ईड्यं स्तुत्यं त्वा त्वां नमस्यामो नमस्कुर्मः। कीदृशा वयं सुदीतिं शोभनदानयुक्तं सुदृशं सुष्ठु द्रष्टुं शक्यमग्निं स्विष्टकृद्रूपं गृणन्तः स्तुवन्तः। देवाः सर्वे त्वां स्विष्टकृतमग्निं दूतमकृण्वन्देवान्प्रति दूतकर्मयोग्यं कृतवन्तः। अत एवा-न्यत्राऽऽम्नातम्—"अग्निर्देवानां दूत आसीत्" इति। कीदृशं त्वामरतिं रति-रुपरमस्तद्रहितमालस्यहीनमित्यर्थः। हव्यवाहं हविषो वोढारम्। अमृतस्य नाभिं कर्मफलस्य नाभिस्थानीयं संपादकमित्यर्थः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥ ९॥

अथ दशमोऽनुवाकः।

नवमे वपापुरोडाशस्विष्टकृतां याज्या उक्ताः। अथ दशमे मनोतासूक्तमभि-धीयते। कल्पः—"यदा जानाति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति तदा मैत्रावरुणो मनोतामन्वाह त्वꣳ ह्यग्ने प्रथमः" इति। तत्र प्रथमामृचमाह—

त्वꣳ ह्यग्ने प्रथमो मनोता। अस्या धियो अभवो दस्म होता। त्वꣳ सीं वृषन्नकृणोर्दुष्टरीतु। सहो विश्वस्मै सहसे सहध्यै, इति।

हेऽग्ने प्रथमो मुख्यस्त्वं हि त्वमेव मनोता मनसोता रक्षिता सर्वैर्देवैः प्रार्थिता देवता। हे दस्म दंसयितः कर्मकुशल, अस्या धियः कर्मानुष्ठानविष-याया एतस्या अस्मद्बुद्धेरनुसारेण होता त्वमेवाभवः। हे वृषन्कामानां वर्षि-

तस्त्वं सीं त्वमेव दुष्टरीतु दुस्तरमिदं जगदक्ष्णोर्यागद्वारेण करोषि । विश्वस्मै सहसे सर्वस्मादपि बलात्सहोऽधिकं बलं त्वमेवासीति शेषः । किमर्थं सहध्यै शत्रूनभिभवितुम् ।

अथ द्वितीयामृचमाह—

अधा होता न्यसीदो यजीयान् । इडस्पद
इषयन्नीड्यः सन् । तं त्वा नरः प्रथमं देव-
यन्तः। महो राये चितयन्तो अनुग्मन्, इति।

अधेत्यानन्तर्यार्थः । हेऽग्ने त्वमेवेषयन्निषमन्नं सर्वस्य कुर्वन्नीड्यः स्तुत्यः सन्यजीयान्यष्टृतमो होता भूत्वेडस्पदेऽन्नस्य प्रापके यागस्थाने न्यसीदो नियमेनोपविष्टवानसि । नरो मनुष्या ऋत्विग्यजमाना देवयन्तो देवानिच्छन्तो महो राये महते धनाय चितयन्तश्चिन्तयमानाः प्रथमं मुख्यं तं त्वामनुग्मन्ननुगताः सेवन्त इत्यर्थः।

अथ तृतीयामृचमाह—

वृतेव यन्तं बहुभिर्वसव्यैः । त्वे रयिं जागृवांसो
अनुग्मन् ( १ ) । रुशन्तमग्निं दर्शतं बृहन्तम् ।
वपावन्तं विश्वहा दीदिवांसम्, इति ।

जागृवांसः प्रबुद्धा यजमाना रयिं धनवन्तं त्वे त्वामग्निमनुग्मन्ननुगच्छन्ति । तत्र दृष्टान्तो बहुभिर्वसव्यैर्धनसमूहैर्युक्तं वृता यन्तमिव वृता वर्तन्या सन्मार्गेण गच्छन्तं राजानमिव यथा धनवन्तं दानशीलं राजानं धनार्थिनोऽनुगच्छन्ति तद्वत् । कीदृशं त्वां रुशन्तं शत्रून्हिंसन्तम् । अग्निमग्रे नेतारम् । दर्शतं दर्शनीयम् । बृहन्तं महान्तम् । वपावन्तं वपाभिर्हविर्भिर्युक्तम् । विश्वहा सर्वेष्वहःसु दीदिवांसं दीप्यमानम् ।

अथ चतुर्थीमृचमाह—

पदं देवस्य नमसा वियन्तः । श्रवस्यवः श्रव
आपन्नमृक्तम् । नामानि चिद्दधिरे यज्ञियानि ।
भद्रायां ते रणयन्त संदृष्टौ, इति ।

देवस्य तव पदं नमसा नमस्कारेण वियन्तो विशेषेण प्राप्नुवन्तः श्रवस्यवः

श्रवोऽन्नं यशो वा तदिच्छन्तो यजमानाः श्रव आपन्प्राप्तवन्तः । कीदृशं श्रवोऽमृक्तममृदितमविनश्वरमित्यर्थः । यज्ञियानि यज्ञार्हाणि त्वदीयानि नामानि चिदृधिरे यजमाना धारयन्ति । ते यजमानास्ते तव भद्रायां कल्याण्यां संदृष्टावनुग्रहदृष्टौ रणयन्त रमन्ते । किमु वक्तव्यमनुष्ठातारो रमन्त इत्यभिप्रायः ।

अथ पञ्चमीमृचमाह—

त्वां वर्धन्ति क्षितयः पृथिव्याम् । त्वꣳ राय
उभयासो जनानाम् । त्वं त्राता तरणे चेत्योऽभूः ।
पिता माता सदमिन्मानुषाणाम् ( २ ), इति ।

पृथिव्यां भूमौ क्षितयो निवसन्तो यजमानास्त्वां वर्धन्ति हेऽग्ने स्तुतिभिर्हविर्भिर्वा त्वां परितोषयन्ति । जनानां सर्वेषां त्वमुभयासो रायस्त्वमेव द्विविधानि धनानि दिव्यानि पार्थिवानि च तत्संपादक इत्यर्थः । हे तरणे दुरितानां तरणकुशल त्वं त्राता त्वमेवास्माकं रक्षिता चेत्यः सर्वदाऽस्माभिः स्मर्तव्योऽभूर्भवसि । तथा मानुषाणां सर्वेषां सदमित्सर्वदैव पिता माता तदुभयसदृशः पालकस्त्वमेवासि ।

अथ षष्ठीमृचमाह—

स पर्येण्यः स प्रियो विक्ष्वग्निः । होता मन्द्रो
निषसादा यजीयान् । तं त्वा वयं दम आ
दीदिवाꣳसम् । उपज्ञु बाधो नमसा सदेम, इति ।

योऽग्निः स पर्येण्यः परितो मन्तव्यः स एवाग्निर्विक्षु प्रजासु सर्वासु प्रियस्तथा होता देवानामाह्वाता मन्द्रो हर्षहेतुर्यजीयान्यष्टृतमः सन्निषसाद नियमेनोपविवेश । दमे यज्ञगृहे दीदिवांसं दीप्यमानमुपज्ञूपज्ञातं सुप्रसिद्धं तं त्वा तादृशमग्निं त्वां बाधः संसारेण बाध्यमाना वयं नमसा नमस्कारेणाऽऽसदेम भजामहे ।

अथ सप्तमीमृचमाह—

तं त्वा वयꣳ सुधियो नव्यमग्ने । सुम्नायव ईमहे देवयन्तः । त्वं विशो अनयो

१ क. ख. गन्तव्यः ।

दीद्यानः । दिवो अग्ने बृहता रोचनेन, इति ।

हेऽग्ने सुधियः शोभनबुद्धियुक्ताः सुम्नायवः सुखमिच्छन्तो देवयन्तो देवा-निच्छन्तो वयं नव्यं सर्वदा नूतनं तं त्वा तादृशमग्निं त्वामीमहे प्राप्नुमो भजाम इत्यर्थः । हेऽग्ने बृहता रोचनेन महता प्रकाशेन दीद्यानः प्रकाशमानस्त्वं विशः सर्वाः प्रजा दिवो द्योतमानान्स्वर्गादिलोकांश्चानयो नयसि प्रापयसि ।

अथाष्टमीमृचमाह—

विशां कविं विश्पतिं शश्वतीनाम् । नितो-
शनं वृषभं चर्षणीनाम् (३) । प्रेतीषणिमिषयन्तं
पावकम् । राजन्तमग्निं यजतं रयीणाम्, इति ।

ईमह इत्यनुवर्तते । अग्निमीमहे प्राप्नुमः । कीदृशं शश्वतीनां निरन्तरप्रवृत्तीनां विशां प्रजानां पालकमित्यध्याहारः । अत एव विश्पतिं प्रजास्वामिनम् । कविं विद्वांसम् । नितोशनं शत्रूणां नितरां हन्तारम् । चर्षणीनां मनुष्याणां वृषभं कामाभिवर्षकम् । प्रेतीषणिं प्रकृष्टाया इतेर्गतेः सनितारं दातारम् । इषयन्तमन्नं कुर्वन्तम् । पावकं शोधकम् । राजन्तं दीप्यमानम् । यजतं यजनीयम् । रयीणां धनानां दातारमिति शेषः ।

अथ नवमीमृचमाह—

सो अग्न ईजे शशमे च मर्तः । यस्त आनट्
समिधा हव्यदातिम् । य आहुतिं परिवेदा
नमोभिः । विश्वेत्स वामा दधते त्वोतः, इति ।

हेऽग्ने यो मर्तो मनुष्यो यजमानः समिधा सह हव्यदातिं हविर्दानमानट्, व्याप्नोति हविर्ददातीत्यर्थः । स यजमान ईजे यजति शशमे च यागफलभूतां शान्तिमपि प्राप्नोति । शान्तिः सुखम् । यो यजमानो नमोभिर्नमस्कारैः सहाऽऽ-हुतिं परिवेदा ददातीत्यर्थः । स यजमानस्त्वोतस्त्वया रक्षितो विश्वेद्विश्वान्येव वामा वननीयानि धनानि दधते धत्ते प्राप्नोतीत्यर्थः ।

---

१ क. 'मन्नमिच्छन्त' ।

अथ दशमीमृचमाह—

अस्मा उ ते महि महे विधेम । नमोभिरग्ने समि-
धोत हव्यैः । वेदी सूनो सहसो गीर्भिरुक्थैः ।
आ ते भद्रायाꣳ सुमतौ यतेम (४), इति ।

हेऽग्ने महे महतेऽस्मा उ अस्मा एव ते तुभ्यं नमोभिर्नमस्कारैरुतापि च समिधा हव्यैश्च महि विधेम पूजां करवाम । हे सहसः सूनो मथनजन्यत्वेन बलस्य पुत्र वेदी वेद्यामस्यां गीर्भिः स्तोत्ररूपैरुक्थैः शस्त्ररूपैश्च वाक्समूहैर्भद्रायां ते तव सुमतावनुग्रहात्मिकायां बुद्धावायतेम सर्वतः प्रयतामहे । त्वदनुग्रहनिमित्तं प्रयत्नं कुर्मः ।

अथैकादशीमृचमाह—

आ यस्ततन्थ रोदसी वि भासा ।
श्रवोभिश्च श्रवस्यस्तरुत्रः । बृह-
द्भिर्वाजैः स्थविरेभिरस्मे । रेव-
द्भिरग्ने वितरं विभाहि, इति ।

हेऽग्ने यस्त्वं भासा स्वकीयया दीप्त्या रोदसी द्यावापृथिव्यौ व्याततन्थ व्याप्नोषि तथा श्रवोभिरन्नैश्च व्याप्नोषि । स त्वं श्रवस्यः प्रजार्थं श्रवोऽन्नमिच्छुस्तरुत्रो दुःखेभ्यः स्तारयिता चासि । तादृशस्त्वं रेवद्भिर्धनयुक्तैः स्थविरेभिश्चिरंतनैर्बृहद्भिर्वाजैर्महद्भिरन्नैर्युक्तोऽस्मे अस्मासु वितरमत्यन्तविशिष्टमनुग्रहं कुर्वन्विभाहि विशेषेण दीप्यस्व ।

अथ द्वादशीमृचमाह—

नृवद्वसो सदमिद्धेह्यस्मे । भूरि तोकाय तन-
याय पश्वः । पूर्वीरिषो बृहतीरारे अघाः ।
अस्मे भद्रा सौश्रवसानि सन्तु, इति ।

हे वसो जगन्निवासहेतो वह्ने नृवन्नृभिर्भृत्यैर्युक्तं भूरि प्रभूतं धनं सदमित्सर्वदैवास्मे अस्मासु धेहि संपादय । तोकायास्मत्पुत्राय तनयाय तदीयपुत्राय च पश्वः

१ क. 'श्वक्त्वं' । २ क. 'विविधम'। ३ क 'भिरपरयैर्युं'।

पशून्संपादय । किंच पूर्वीश्चिरंतनाः पूर्वपुरुषोचिता बृहतीः प्रभूता इषोऽन्नान्यारेऽस्मत्समीपेऽघाः क्षारय संपादयेत्यर्थः । अस्मे अस्मासु भद्रा कल्याणरूपाणि सौश्रवसान्यतिशोभनकीर्त्यादीनि सन्तु ।

अथ त्रयोदशीमृचमाह—

पुरूण्यंग्ने पुरुधा त्वाया । वसूनि
राजन्वसुताते अश्याम् । पुरूणि
हि त्वे पुरुवार सन्ति । अग्ने
वसु विधत्ते राजनि त्वे (५) इति ।

जागृवाꣳसो अनुग्मन्मानुषाणां चर्षणीनां यंतेमाश्यां द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये दशमोऽनुवाकः ॥ १० ॥

---

हे वसुताते धनस्य विस्तारयितर्हे राजन्दीप्यमानाग्ने त्वाया त्वया निमित्तभूतेन पुरुधा बहुप्रकाराणि पुरूणि प्रभूतानि वसूनि धनान्यश्यां व्याप्नुयाम् । हे पुरुवार बहुभिर्वरणीयाग्ने त्वे त्वयि हि यस्मात्कारणात्पुरूणि बहूनि धनानि सन्ति तस्मात्कारणाद्विधत्ते परिचरते यजमानाय वसु धनं राजनि त्वे त्वयि प्राप्नुयात्मिति शेषः ।

अत्र मीमांसा । दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वाऽस्त्यसौ ।
आग्नेय्ये वेति वचनं प्रकृतौ सार्थकं यतः ॥
अग्नीषोमावग्निनैव लक्षेतां वचनं विना ।
अनर्थकात्तत्र वाक्याद्विकृतावूहवारणम् ॥

“ त्वꣳ ह्यग्ने प्रथमो मनोता ” इत्ययं मनोतामन्त्रोऽग्नीषोमीयपशौ पठितः । वायव्यपशावप्ययं चोदकप्राप्तः । तत्र “ त्वं हि वायो प्रथमः” इत्येवमूहोऽस्ति । यत्तु वचनं यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्येति तत्प्रकृतौ पठितं तत्रैव

च सार्थकम् । द्विदेवत्यपशावेकदेवत्यमन्त्रस्य प्रकरणपठितस्याप्ययोग्यत्वशङ्कायां पुनर्विधानार्थत्वात् । मैवम् । छत्रिणो गच्छन्तीत्यादिवन्मन्त्रगतस्याग्निशब्दस्याग्नीषोमलक्षकत्वेनायोग्यत्वशङ्कया अनुदयात् । अतः प्रकृतावनर्थकं तद्वाक्यं विकृतावूहनिवारणेन चरितार्थं भवति । तस्मादूहो नास्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथैकादशोऽनुवाकः ।

---

दशमे मनोतासूक्तमभिहितम् । एकादशे हविर्वनस्पतिस्विष्टकृतां मैत्रावरुणेन वक्तव्याः पुरोनुवाक्याः प्रैषाश्चोच्यन्ते । कल्पः—" यदा जानातीन्द्राग्निभ्यां छागस्य हविषोऽवदीयमानस्यानुब्रूहीति तदा मैत्रावरुणः पुरोनुवाक्यामन्वाह, आभरत२ शिक्षतम् " इति । पाठस्तु—

आभरत२ शिक्षतं वज्रबाहू ।
अस्मा२ इन्द्राग्नी अवत२ शचीभिः ।
इमे नु ते रश्मयः सूर्यस्य । येभिः
सपित्वं पितरो न आयन्, इति ।

हे वज्रबाहू वज्रायुधपाणी इन्द्राग्नी आभरतं धनमाहरतम् । आहृत्य च शिक्षतं संस्कुरुतम् । शचीभिः स्वकीयशक्तिभिरवतमस्मान्रक्षतम् । नोऽस्माकं पितरो येभिर्यैः सूर्यस्य रश्मिभिः सपित्वमायन्संबन्धित्वं प्राप्तास्ते सूर्यस्य रश्मय इमे नु इम एव भवदधीना वर्तन्ते । अतः पितॄनिवास्मान्पालयतम् ।

अथ प्रैषमाह—

होता यक्षदिन्द्राग्नी । छागस्य हविष आत्तामद्य । मध्यतो मेद उद्भृतम् । पुरा द्वेषोभ्यः । पुरा पौरुषेय्या गृभः । घस्तां नूनम् ( १ ) । घासे अज्राणां यवसप्रथमानाम् । सुमत्क्षराणा२ शतरुद्रियाणाम् । अग्निष्वात्तानां पीवोपवस-

त्तानाम् । पार्श्वतः श्रोणितः शितामत उत्सा-

दतः । अङ्गादङ्गादवत्तानाम् । करत एवे-

न्द्राग्नी । जुषेताꣳ हविः । होतर्यज, इति ।

दैव्यो होता यक्षत्पूजयतु । हे इन्द्राग्नी युवां हविषो हविर्भूतस्य छागस्य मध्यतो मध्यदेशादुद्धृत्य मेद उत्कृष्य संपादितं मेदःप्रभृति सारमद्यास्मिन्कर्मण्यात्तां भक्षयताम् । द्वेषोभ्यः पुरा द्वेषेभ्यो रक्षोभ्यः पूर्वं रक्षांसि यावन्नोपघ्नन्ति ततः पुरा, तथा पौरुषेय्या गृभः पुरा पुरुषसंबन्धिनो ग्रहणात्पूर्वं विरोधिनः पुरुषा यावद्गृहीत्वा न गच्छन्ति ततः पूर्वमेव नूनं घस्तामवश्यं भुञ्जाताम् । घस्यन्ते भक्ष्यन्ते हवींष्यस्मिन्कर्मणीति घासो यागस्तस्मिन्घासेऽज्राणामजनीयानां क्षेप्य-माणानां सुसंस्कृतानामिति यावत् । यवसप्रथमानां यवसमन्नं प्रथमं मुख्यं येषां हविषां तानि यवसप्रथमानि तेषां सुमत्क्षराणां सुष्ठु मादयति येषां क्षरणं मुखा-दुदरप्रवेशस्तादृशानां शतरुद्रियाणां शतं रुद्रा देवा येषामधिष्ठानभूतास्तेषामग्नि-ष्वात्तानामग्निना जाठरेणाऽऽहवनीयेन वा स्वादितानां पीवोपवसनानां पीवा स्थूला त्वक्सैवोपवसनमाच्छादनस्थानीयं येषां हविषां तानि पीवोपवसनानि तेषाम् । तथा पार्श्वतः पार्श्वादिभ्यः प्रथममवत्तानाम् । पार्श्वश्रोणी प्रसिद्धे । शितामतशब्देन दोर्यकृद्वाऽभिधीयते । उत्सादशब्देन गुदकाण्डम् । तत ऊर्ध्व-मङ्गादङ्गात्सर्वस्मादन्यस्मादवयवादवत्तानां हविषां यान्यवदानानि तानि सर्वा-णीन्द्राग्नी एव करतः कुरुताम् । ततो हविरिदं जुषेताम् । तदर्थं हे मनुष्यहो-तर्यज याज्यां पठ ।

अथ वनस्पतेः पुरोनुवाक्यामाह-

देवेभ्यो वनस्पते हवीꣳषि । हिरण्यपर्ण

प्रदिवस्ते अर्थम् । प्रदक्षिणिद्रशनया नियूय ।

ऋतस्य वक्षि पथिभी रजिष्ठैः, इति ।

हे वनस्पते यूपात्मकाग्ने हिरण्यपर्ण सुवर्णवर्णपत्रोपेत सुवर्णसदृशज्वालोपेत वा । त्वं देवेभ्यो हवींषि वक्षि वहसि । कीदृशानि हवींषि तेऽर्थं तव प्रयोज-

१ क °पघ्नच्छन्ति ।

नभूतानि प्रदिवः प्रवराणि यथापूर्वं प्रवृत्तानीत्यर्थः। किं कृत्वा रशनया यूपवे-ष्टनहेतुभूतया प्रदक्षिणित्प्रदक्षिणाकारेण नियूय नितरामात्मानं बद्ध्वा तत ऋतस्य यज्ञस्य संबन्धीनि हवींषि रजिष्ठैः पथिभिर्ऋजूत्तमैर्मार्गैर्वहसीत्यन्वयः।

अथ प्रैषमाह—

होता यक्षद्वनस्पतिमभि हि । पिष्टतमया रभिष्ठया रशनयाऽधित । यत्रेन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि । यत्र वनस्पतेः प्रिया पाथाꣳसि । यत्र देवानामाज्यपानां प्रिया धामानि । यत्राग्नेर्होतुः प्रिया धामानि । तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षत् । रभीयाꣳसमिव कृत्वी (.३) । करदेवं देवो वनस्पतिः । जुषताꣳ हविः । होतर्यज, इति ।

दैव्यो होता वनस्पतिरूपं देवं यजतु । हि यस्मात्कारणात्पिष्टतमया श्लक्ष्णतमया रभिष्ठया रभस्वत्तमया शीघ्रतमं प्रवृत्तया रशनयाऽभ्यधित वनस्पतिनामात्मकमबध्नात् । अत एव रशनया नियूयेत्युक्तम् । तस्मात्कारणात्तादृशोऽयं यूप एतं पशुं तत्रोपावस्रक्षत्तस्मिन्स्थान उपसंमापयतु । कुत्रेति तदुच्यते—इन्द्राग्न्योर्देवयोः संबन्धिनश्छागरूपस्य हविषः प्रियाणि धामानि स्थानानि यत्र विद्यन्ते । वनस्पतेर्देवस्य च प्रियाणि पाथांस्युदकानि यत्र विद्यन्ते । आज्यपानां प्रयाजादिदेवानां च प्रियाणि स्थानानि यत्र विद्यन्ते । होतुर्होमनिष्पादकस्याग्नेः प्रियाणि स्थानानि यत्र विद्यन्ते । तत्रैतमुपावस्रक्षदित्यन्वयः । किं कृत्वा प्रस्तुत्येव प्रथममेव श्रपयित्वा किंचोपस्तुत्येव संनिधावेव प्रशस्य रभीयांसमिव कृत्वा देवानां प्रीत्युत्पादनेन रभस्वत्तरामिव कृत्वा । उपावस्रक्षादित्यन्वयः । वनस्पतिर्देव एवं करदुक्तप्रकारं करोतु । इदं हविश्च जुषताम् । हे मनुष्यहोतस्तदर्थं याज्यां पठ ।

अथ स्विष्टकृतः पुरोनुवाक्यामाह—

पिप्रीहि देवाꣳ उशतो यविष्ठ । विद्वाꣳ

ऋतूꣳ ऋतुपते यजेह। ये दैव्या ऋत्विजस्ते-
भिरग्ने। त्वꣳ होतॄणामस्याऽऽयजिष्ठः, इति।

हे यविष्ठ युवतमाग्ने उशतः कामयमानान्देवान्पिप्रीह्यतिशयेन प्रीणय। हे ऋतुपते सूर्यात्मना कालपरिपालक त्वमृतून्कालविशेषान्विद्वाञ्ज्ञानन्वर्तसे तस्मादिहोचिते काले यज। देवेषु भवा ये दैव्या ऋत्विजः सन्ति "अग्निर्होताऽश्विनाऽध्वर्यू त्वष्टाऽग्नीत्" इत्यादिनाऽऽम्नातास्तेभिरतैर्दैव्यैः सह त्वमस्य यजमानस्य संबन्धिनां होतॄणामृत्विजां मध्य आयजिष्ठः सर्वतो यष्टृतमोऽसि।

अथ प्रैषमाह—

होता यक्षदग्निꣳ स्विष्टकृतम्। अयाडग्निरि-
न्द्राग्नियोश्छागस्य हविषः प्रिया धामानि।
अयाड्वनस्पतेः प्रिया पाथाꣳसि। अयाड्दे-
वानामाज्यपानां प्रिया धामानि। यक्षदग्ने
होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्।
आयजतामेज्या इषः। कृणोतु सो अध्वरा
जातवेदाः। जुषताꣳ हविः। होतर्यज (४), इति।

नूनमर्थꣳ कृत्वी पाथाꣳसि सप्त च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याय एकादशोऽनुवाकः॥ ११॥

---

दैव्यो होता स्विष्टकृतमग्निं यजतु। इन्द्राग्नियोः संबन्धिनश्छागरूपस्य हविषो यानि प्रियाणि स्थानानि तान्ययमग्निरयाट्पूजितवान्। तथा वनस्पतेः प्रियाणि पाथांसि जलानि हवींषि वाऽयाडिष्टवान्। आज्यपानां प्रयाजादिदेवानां प्रियाणि स्थानानि पूजितवान्। होतुर्होमनिष्पादकस्याग्नेः प्रियाणि स्थानानि स्विष्टकृदयमग्निः पूजितवान्। उक्तानां सर्वेषां देवानां स्वकीयो महिमा योऽस्ति तमुद्दिश्य दैव्यो होता यक्षद्यजतु। आयजतामाभिमुख्येन यागं कुर्वतां यजमानामामेज्या

आभिमुख्येन यष्टव्या इष्टोऽभीष्टा या देवताः सन्ति ताः सर्वा अध्वराऽस्मिन्यज्ञे स जातवेदाः स्विष्टकृद्रूपः सोऽग्निः कृणोतु स्विष्टाः करोतु । तदर्थमयं स्विष्टकृदग्निरिदं हविर्जुषताम् । हे मनुष्यहोतर्यज तदर्थं याज्यां पठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ षष्ठे द्वादशोऽनुवाकः ।

---

एकादशे हविषां वनस्पतेः स्विष्टकृतश्च पुरोनुवाक्याः प्रैषाश्चाभिहिताः । अथ द्वादशे तेषां याज्या उच्यन्ते । कल्पः—"अथ होता यजतु, उपोह यत्" इति । पाठस्तु—

उपोह यद्विदथं वाजिनो गूः । गीर्भिर्विप्राः
प्रमतिमिच्छमानाः । अर्वन्तो न काष्ठां नक्ष-
माणाः । इन्द्राग्नी जोहुवतो नरस्ते, इति ।

यद्ये विप्रा ऋत्विज उपोह समीप एव विदथं गूर्यज्ञं गच्छन्तो वर्तन्ते । कीदृशा विप्रा वाजिनो वाजेनान्नेन हविर्भक्षणेन युक्ताः । गीर्भिः स्तुतिभिः प्रमतिं प्रकृष्टां मतिं देवताह्वानविषयां मतिमिच्छमानाः । काष्ठां कर्मसमाप्तिं नक्षमाणा गच्छन्तः । तत्र दृष्टान्तः—अर्वन्तो नाश्वा यथा स्वकीयां गमनसमाप्तिं प्राप्नुवन्ति तद्वत् । ते नरस्तादृशा ऋत्विज इन्द्राग्नी देवौ जोहुवतो होमेनाऽऽराधयन्तो वर्तन्ते ।

अथ वनस्पतेर्याज्यामाह—

वनस्पते रशनयाऽभिधाय । पिष्ट-
तमया वयुनानि विद्वान् । वहं
देवत्रा दिधिषो हवीꣳषि । प्र
च दातारममृतेषु वोचः, इति ।

हे वनस्पते यूप पिष्टतमया श्लक्ष्णतमया रशनयाऽभिधायाऽऽत्मानं बद्ध्वाऽ-

---

१ क. स्विष्टं । २ क. ख. 'ताघ्यान' ।

स्माकं देवानां वयुनानि ज्ञानान्यभिप्रायान्वा विद्वाञ्जानन्देवत्रा देवेषु हवींषि वह मापय। किंच हे दिधिषो धारणाकुशल वनस्पते दातारं हविर्दाने प्रवृत्तं यजमानममृतेषु देवेषु प्रवोचोऽनेनैतानि हवींषि दत्तानीति मब्रूहि।

अथ स्विष्टकृतो याज्यामाह—

अग्निꣳ स्विष्टकृतम्। अयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि (१)। अयाड्वनस्पतेः प्रिया पाथाꣳसि। अयाड्देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्। आयजतामेज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः। अग्ने यदद्य विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूः। हव्या वह यविष्ठ या ते अद्य (२), इति।

धामानि भूरेकं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

स्विष्टकृन्नामकमग्निं वयं यजामह इति शेषः। अयाडग्निरित्यादिकं पूर्वानुवाकवद्व्याख्येयम्। हे स्विष्टकृदग्ने विशः प्रविष्टस्यानुष्ठितस्याध्वरस्य संबन्धि यद्धविरस्ति तदद्य वेरशान भक्षय। होतर्होमकर्तः पावक शोधक शोचे दीप्यमान, एतान्यग्निविषयाणि विशेषणानि। हि यस्मात्त्वं यज्वा यागस्य कर्ता वस्मादृताऽस्मदीये यज्ञे महिना महिम्ना यजासि देवान्प्रीणयसि। यद्यस्मा-

१ क °नेनेमानि।

त्कारणाद्विभूर्विशिष्टो भवसि तस्मात्कारणाद्धे यविष्ठ युवतम, अद्य ते तव या हव्या यानि हव्यान्यस्माभिर्दीयन्ते तानि सर्वाणि वह स्वी कुरु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः ।

---

द्वादशे हविर्वनस्पतिस्विष्टकृतां याज्या अभिहिताः । त्रयोदशेऽनूयाजानां मैत्रावरुणप्रैषा उच्यन्ते । कल्पः—"यदा जानाति देवेभ्यः प्रेष्येति तन्मैत्रावरुणः प्रेष्यति देवं बर्हि सुदेवमिति । अथ होता यजति—'देवं बर्हिः । वसुवने वसुधेयस्य वेतु' इति, तमेव व्यतिषङ्गमुत्तरेणोत्तरेण मैत्रावरुणः प्रेष्यत्युत्तरेणोत्तरेण होता यजति" इति । तत्रास्मिन्ननुवाके प्रैषाः । उत्तरानुवाके याज्याः । प्रैषाणां मध्ये प्रथमं प्रैषमाह—

देवं बर्हिः सुदेवं देवैः स्यात्सुवीरं वीरैर्वस्तो-
र्वृज्येताक्तोः प्रभ्रियेतात्यन्यान्राया बर्हिष्मतो
मदेम वसुवने वसुधेयस्य वेतु यज, इति ।

देवं देवनशीलं बर्हिः प्रथमानूयाजदेवस्वरूपं बर्हिर्नामकं यदस्ति तद्देवैरन्यैः सह सुदेवं स्याच्छोभनदीप्तिकमस्तु । वीरैरस्मदीयैः पुत्रैः सह सुवीरं स्याच्छोभनवीरोपेतमस्तु । वस्तोर्देवानां वासाय वेद्यामाच्छादनाय च वृज्येत बर्हिर्भवेत् । अक्तोः स्रुचां हविषां वाऽभिव्यक्तये प्रभ्रियेत प्रकर्षेण धार्येत । यदेतद्वेद्यामास्तरणीयं बर्हिस्तदभिमानी बर्हिर्नामकोऽनूयाजदेवः, तस्माद्देवप्रसङ्गाद्दर्भवर्णनं युक्तम् । अस्य बर्हिर्देवस्य प्रसादादन्यान्बर्हिष्मत इतरान्यागयुक्तान्पुरुषान्राया धनेनातिक्रम्य मदेम हृष्याम । वसुधेयस्य धनप्रदातुर्देवस्य वसुवने धनदानाय वेत्वाज्यं पिबतु । यज तदर्थं हे होतर्याज्यां पठ ।

अथ द्वितीयं प्रैषमाह—

देवीर्द्वारः संघाते विड्वीर्यामञ्छिथिरा ध्रुवा
देवहूतौ वत्स ईमेनास्तरुण आमिमीयात्कुमारो

वा नवंजातो मैना अर्वा रेणुकंकाटः पृणंग्व-
सुवनें वसुधेयंस्य वियन्तु यजं, इति ।

द्वारशब्दाभिधेयाः स्त्रीमूर्तयो द्वितीयानूयाजदेवतास्ता देव्यः संघाते विड्वी-द्वाराभिमानिनीत्वात्कवाटद्वयमेलने दृढशक्तयो यामन्याने निर्गमनकाले शिथिराः कवाटोद्घाटनेन शैथिल्यं प्राप्ता देवहूतौ देवानामाह्वाने प्रवेशने वा ध्रुवा नित्यं प्रवृत्तास्तिष्ठन्ति । एना द्वारो वत्सादिराभिमीयादागत्य प्रविशेयुः । महावकाश-तया सर्वेषां प्रवेशं द्वारदेवता अनुमन्यन्ते न तु कश्चिदपि तत्र प्रतिबध्यत इत्यर्थः । वत्स ईं वत्सोऽपि तिर्यग्जातिरपि प्रविशेत्, तत्र मनुष्यः प्रविशेदिति किमु वक्त-व्यम् । स च मनुष्योऽनेकविधस्तरुणो युवा कुमारो बालो नवजातस्तदानीमे-वोत्पन्नः स सर्वोऽपि ना द्वारः प्रविशेत् । रेणुककाटो दुर्दान्तो भूमिं रेणुं कृत्य यः संचरति तादृगर्वा धूर्तोऽश्वः कवाटभङ्गक्षम एना द्वारो मा पृणगाभिर्द्वार्भिः संपृक्तो मा भूत् । वसुवन इत्यादि पूर्ववत् । द्वारमूर्तीनां बहुत्वाद्वियन्त्विति बहु-वचनम् ।

अथ तृतीयं प्रैषमाह—

देवी उषासानक्ताऽद्यास्मिन्यज्ञे प्रयत्यंह्वेतामपि
नूनं दैवीर्विशः प्रायांशिष्टा॰ सुप्रीते सुधिते
वसुवनें वसुधेयंस्य वीतां यजं, इति ।

उषासानक्तशब्दवाच्ये अहोरात्राभिमानिन्यौ तृतीयानूयाजदेव्यौ ते उभे अद्यास्मिन्नहन्यस्मिन्यज्ञे पशुयागे प्रयति प्रवर्तमाने सत्यह्वेतां देवादीनाह्वयेताम् । अपि दैवीर्विशो देवसंबन्धिनीरपि प्रजाः सर्वा नूनमवश्यं प्रायाशिष्टां प्रकर्षेण गतवत्यौ दैवीः प्रजा आह्वातुं तत्समीपं प्रतिगच्छत इत्यर्थः । कीदृशौ सुप्रीते स्वयं सुष्ठु प्रीते न तु वैमुख्यं भजमाने । सुधिते सुस्थिरे सुष्ठुप्रारब्धनिर्वहणपरे । वसुवन इत्यादि पूर्ववत् । देव्योर्द्वित्वाद्वीतामिति द्विवचनम् ।

अथ चतुर्थं प्रैषमाह—

देवी जोष्ट्री वसुंधिती ययोंरन्याऽघा द्वेषा॰सि
यूयवदान्यावंक्षद्वसु वार्याणि यजंमानाय

१ क. 'अदेवतं तं ।

वसुवनें वसुधेयंस्य वीतां यज, इति ।

जोष्ट्रीशब्दवाच्ये चतुर्थानूयाजदेवमूर्ती द्वे देव्यौ वसुधिती सुखप्राप्तियुक्ते यत्रो-देव्योर्जोष्ट्रयोर्मध्येऽन्यैका देव्यघा पापानि द्वेषांसि द्वेष्याणि च रक्षःप्रभृतीनि च यूयवत्पृथकुर्यान्नाशयेदित्यर्थः । अन्येतरा जोष्ट्री देवी यजमानाय वार्याणि वसु वरणीयानि धनान्यावक्षत्सर्वतो वहति ।

अथ पञ्चमं प्रैषमाह—

देवी ऊर्जाहुती इषमूर्जमन्याऽऽवक्ष-
त्सग्धिꣳ सपीतिमन्या नवेन पूर्वं
दयमाना स्याम पुराणेन नवं तामू-
र्जमूर्जाहुती ऊर्जयमाने अधातां वसु-
वनें वसुधेयंस्य वीतां यज, इति ।

ऊर्जाहुतीशब्दवाच्ये पञ्चमानूयाजदेवते स्त्रीमूर्ती द्वे देव्यौ विद्येते । तयोर्मध्येऽन्यैका देवीषमन्नमूर्जं क्षीरादिरसं चाऽऽवक्षदावहति । अन्येतरा देवी सग्धिं सहभोजनं सपीतिं सहपानं चोभयोः प्रापितवती । तयोर्देव्योः प्रसादादेव वयं नवेन व्रीह्यादिना सहैव पुराणं व्रीह्यादिकं दयमाना रक्षन्तः कुसूलादिषु स्थापयन्तः स्याम तिष्ठेम । तथा पुराणेन धान्येन सहैव नवं धान्यं दयमानाः स्याम । ऊर्जाहुती एवंनामिके देव्यौ तां नवपुराणधान्यजातिमुपर्युपचीयमानबहुविधनवपुराणधान्यपूर्णापूर्जमन्नसमृद्धिमूर्जयमाने सर्वस्य लोकस्य संपादयन्त्यावस्मभ्यमप्यधातां संपादयेताम् ।

अथ षष्ठं प्रैषमाह—

देवा दैव्याहोतारा नेष्टारा पोतारा हुताघशꣳ-
सावाभरद्वसू वसुवनें वसुधेयंस्य वीतां यज, इति ।

दैव्याहोतृशब्दवाच्यौ षष्ठानूयाजदेवस्य द्वौ देहौ । तद्देहधारिणौ देवौ नेष्टारा यज्ञस्य नेतारौ पोतारा शोधयितारौ हताघशंसौ हता अघशंसाः पापबुद्धयो याभ्यां तादृशावाभरद्वसू आह्रियमाणधनौ तौ वीतामित्यन्वयः ।

१३०

अथ सप्तमं प्रैषमाह—

देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती
द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीम॑ रुद्रैर्य-
ज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम
वसुवने वसुधेयस्य वियन्तु यज, इति ।

इडादिनामयुक्तास्तिस्रो देव्यः सप्तमानूयाजदेवतास्तासां मध्य एकैकस्या मूर्तित्रययुक्तत्वात्पुनरपि तिस्रो देवीरित्युच्यन्ते । तासां मध्ये या भारती सेयमादित्यैः सह द्यां द्युलोकमस्पृक्षत्स्पृशतु हविषा देवांस्तर्पयितुं तत्र गच्छतु । सरस्वती तु देवी रुद्रैः सहेमं यज्ञमावीदवतु रक्षत्वत्रैव स्थित्वा यज्ञं निर्वर्तयतु । अथ वसुमत्या धनयुक्तयेडया देव्या सधमादं सहैकस्थाने हर्षो यथा भवति तथा मदेम तृप्ता भूयास्म । इहैव यज्ञफलेनास्मान्योजयत्वित्यर्थः ।

अथाष्टममाह—

देवो नराशंसस्त्रिशीर्षा षडक्षः शत-
मिदेनं शितिपृष्ठा आदधति सहस्रमीं
प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो
बृहस्पतिः स्तोत्रमश्विनाऽऽध्वर्यवं वसु-
वने वसुधेयस्य वेतु यज, इति ।

नराशंसाख्योऽष्टमानूयाजदेवो यः सोऽयं त्रिभिः शिरोभिः षड्भिरक्षिभिश्च युक्तः, एनं नराशंसं शतमिच्छतसंख्याका एव शितिपृष्ठाः श्वेतपृष्ठा गावो यज्ञे दक्षिणा योग्या आदधत्याभिमुख्येन धारयन्ति । सहस्रमीं सहस्रमेव सहस्रसंख्याका एव शितिपृष्ठाः प्रवहन्ति यज्ञात्मकमेनं नराशंसं फलसाधनसमर्थं कुर्वन्ति । मित्रावरुणेन्मित्रावरुणावेवास्य नराशंसस्य होत्रं होमव्यापारं कर्तुमर्हतो न त्वन्यः कश्चित् । बृहस्पतिरेव स्तोत्रमर्हति । अश्विनावेवाऽऽध्वर्यवमर्हतः ।

---

१ क होतृव्यापारं ।

अथ नवममाह—

देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग्द्यामग्रेणा-
स्पृक्षदान्तरिक्षं मध्येनाऽऽप्राः पृथिवीमुपरेणा-
दृ॑हीद्वसुवने वसुधेयस्य वेतु यज, इति ।

वनस्पत्याख्यो नवमानूयाजदेवो योऽस्ति सोऽयं वर्षप्रावा यज्ञद्वारेण वर्षस्य पूरयिता । घृतनिर्णिग्घृतस्य शोधयिता । द्यां द्युलोकमग्रेणास्पृक्षद्यूपरूपस्य स्वस्याग्रभागेण स्पृशतु । मध्येन भागेनान्तरिक्षमाप्राः पूरयतु । पृथिवीमुपरेण तक्षणरहितेन मूलप्रदेशेनादृंहीद्दृढी करोतु ।

अथ दशममाह—

देवं बर्हिर्वारितीनां निधे धासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं
यशस्वदेना बर्हिषाऽन्या बर्ही॑ष्यभिष्याम
वसुवने वसुधेयस्य वेतु यज, इति ।

बर्हिराख्यं यद्दशमानूयाजदेवतारूपं तद्देवं द्योतमानं सद्वारितीनां वारां जलानामितयो गतयो वारितयस्तासां निधे निधानाय संपादनाय धासि स्वकीयं मनो धारयति । कीदृशं बर्हिः, प्रच्युतीनामप्रच्युतं विनाशवतां वस्तूनामविनाशकारणम् । निकामधरणं स्वेच्छया सर्ववस्तूनां धारणसमर्थम् । पुरुस्पार्हं बहुभिः स्पृहणीयम् । यशस्वद्यशस्करम् । एना बर्हिषाऽनेन बर्हिरभिमानिदेवेनान्या बर्हींषीतरयजमानसंबन्धीनि यज्ञनिष्ठानि बर्हींष्यभिष्यामाभिभवितुं वयं समर्थाः स्याम ।

अथैकादशमाह—

देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः
सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने
यान्देवानयाड्या॑ँ अपिप्रेर्ये ते होत्रे अम-

त्सत ताँ᳖ँ᳖ ससनुषीँ᳖ होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमँ᳖ स्विष्टकृच्चाग्ने होताऽभूर्वसुवने वसुधेयस्य नमोवाके वीहि यज ( १ ), इति ।

यजैकं च ।

देवं बर्हिर्देवीर्द्वारो देवी उषासानक्ता देवी जोष्ट्री देवी ऊर्जाहुती देवा दैव्या होतारा देवीस्तिस्रस्तिस्रो देवीर्देवो नराशꣳसो देवो वनस्पतिर्देवं बर्हिर्वारितीनां देवो अग्निः स्विष्टकृत्सुद्रविणा वीहि यज ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये-
त्रयोदशोऽनुवाकः ॥ १३ ॥

---

यस्तु स्विष्टकृन्नामकोऽग्निर्देवः सोऽयं सुद्रविणा सुद्रविणः शोभनधनो मन्द्रो हर्षणशीलः कविर्विद्वान्सत्यमन्मा सत्यमनन आजयी शास्त्रीयया मर्यादया यष्टा होता देवानामाह्वाता होतुर्होतुरायजीयाल्लोँके यो यो होताऽस्ति तस्मात्सर्वस्मादतिशयेन शास्त्रीयमर्यादामनुल्लङ्घ्य यष्टा । हेऽग्न ईदृशस्त्वं यान्देवानयाडिष्टवानसि यांश्च देवानपिप्रेः प्रीणितवानसि ये च देवास्ते तव होत्रे होतृकृत्येऽमत्सतामाद्यन्हृष्टवन्तो दिवि स्थितेषु तेषु देवेषु ससनुषीं हवींषि दत्तवतीं देवंगमां देवानेव गच्छन्तीं तां होत्रां होतृक्रियामिममस्मदीयं यज्ञं प्रत्येरयाऽऽभिमुख्येन प्रापयास्मदीये यज्ञे सर्वदैव तुष्टिकरीं होतृक्रियां त्वमनुतिष्ठेदि( रि )त्यर्थः । हेऽग्ने त्वं स्विष्टकृद्धोता चाभूः । यदस्मादिष्टं तच्छोभनं त्वया कृतं तादृशो होमस्य कर्ताऽभूः । अतो नमोवाके यजमाननमस्कारोक्तौ सत्यां वसुवने धनस्य संभजनाय च वसुधेयस्य व्रीह्यग्नावाधीयमानमिदमाज्यरूपं द्रव्यं भक्षय । हे मनुष्यहोतस्तदर्थं त्वं यज याज्यां पठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

अथ चतुर्दशोऽनुवाकः ।

---

त्रयोदशे मैत्रावरुणप्रैषा अनूयाजविषया उक्ताः । चतुर्दशे होतुर्याज्या अनूयाजविषया उच्यन्ते । ता एता एकादश याज्या आह—

देवं बर्हिः । वसुवने वसुधेयस्य वेतु । देवीर्द्वारः । वसुवने वसुधेयस्य वियन्तु । देवी उषासानक्ता । वसुवने वसुधेयस्य वीताम् । देवी जोष्ट्री । वसुवने वसुधेयस्य वाताम् । देवी ऊर्जाहुती । वसुवने वसुधेयस्य वीताम् (१) । देवा दैव्या होतारा । वसुवने वसुधेयस्य वीताम् । देवीस्तिस्रस्तिस्रो देवीः । वसुवने वसुधेयस्य वियन्तु । देवो नराशꣳसः । वसुवने वसुधेयस्य वेतु । देवो वनस्पतिः । वसुवने वसुधेयस्य वेतु । देवं बर्हिर्वारितीनाम् । वसुवने वसुधेयस्य वेतु (२) । देवो अग्निः स्विष्टकृत् । सुद्रविणा मन्द्रः कविः । सत्यमन्माऽऽयजी होता । होतुर्होतुरायजीयान् । अग्ने यान्देवानयाट् । याꣳ अपिप्रेः । ये ते होत्रे अमत्सत । ताꣳ ससनुषीꣳ होत्रां देवंगमाम् । दिवि देवेषु यज्ञमेरयेमम् । स्विष्टकृच्चाग्ने होताऽभूः । वसुवने वसुधेयस्य नमोवाके वीहि (३), इति ।

वीतां वेत्वभूरेकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये चतुर्दशोऽनुवाकः ॥ १४ ॥

---

पूर्वानुवाकोक्तप्रैषवाक्यवदेतानि याज्यावाक्यानि सर्वाण्यपि व्याख्येयानि । प्रैषरूपत्वाभावाद्यजेति पदं न प्रयुज्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ पञ्चदशोऽनुवाकः ।

---

चतुर्दशेऽनूयाजानां याज्या अभिहिताः । पञ्चदशे सूक्तवाकविषयो मैत्रावरुणप्रैषोऽभिधीयते । कल्पः—“ यदा जानाति सूक्तवाकाय सूक्ता प्रेष्येति तन्मैत्रावरुणः प्रेष्यति ‘ अग्निमद्य ’ इति । पाठस्तु—

अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशं बध्नन्निन्द्राग्निभ्यां छागꣳ सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राग्निभ्यां छागेनाघस्तां तं मेदस्तः प्रति पचताऽग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यर्ष आर्षेयर्षीणां नपादवृणीतायं यजमानो बहुभ्य आसंगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्स्वाऽऽच गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ( १ ), इति ।

अग्निमद्यैकम्।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्याये पञ्चदशोऽनुवाकः ॥ १५ ॥+

अञ्जन्ति होता यक्षत्समिद्धो अद्याग्निरजैदैव्या जुषस्वाऽऽवृत्रहणा गीर्भिस्त्व॰ ह्याभरतमुपोहयद्देवं बर्हिः सुदेवं देवं बर्हिरग्निमद्य पञ्चदश।

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठाध्यायः समाप्तः ॥ ६ ॥

अद्यस्मिन्नहन्ययं यजमानोऽग्निमेव होतारं होमनिष्पादकमवृणीत। किं कुर्वन्, पक्तीः पक्तव्यानि हवींषि पचन्। तथा पुरोडाशं विशेषेण पचन्। तथेन्द्राग्निभ्यां छागं यूपे बध्नन्। अद्यास्मिन्नहनि यूपरूपो वनस्पतिर्देव इन्द्राग्निभ्यां छागेन निमित्तेन तद्बधाय सूपस्था सुस्थिरा हि (?) स्थितिरभवत्। तं पशुं मेदस्तो वपाया आरभ्य ताविन्द्राग्नी अद्यस्तामभक्षयताम्। पचता पक्वानि सर्वाणि हवींषि प्रत्यग्रभीष्टामिन्द्राग्नी प्रतिगृहीतवन्तौ। किंच ताविन्द्राग्नी पुरोडाशेनाऽऽत्मानमवीवृधेतामवर्धयताम्। अथास्मिन्कर्मणि हे ऋषेऽतीन्द्रियदर्शिन्होतस्त्वामयं यजमानोऽवृणीत वृतवान्। आर्षेय हे ऋषिकुलोद्भव, ऋषीणां नपाद्धे ऋषिनप्तर्गोत्रप्रवर्तकमृषिं प्रति चतुर्थ इत्यर्थः। एतदुभयमृषिविशेषणम्। किमर्थं वृतवानिति तदुच्यते—आसंगतेभ्यो बहुभ्य आगत्यास्मिन्कर्मणि संबद्धानां बहूनां देवानामर्चनाभिप्रायेण वृतवानिति सोऽभिप्राय उच्यते। एष होता मे वसु वारि पशुरूपं वसु पृषदाज्यरूपं वारि च देवेष्वायक्ष्यते समन्ताद्यागं करिष्यतीति। ता या देवदानानि यानि तानि देवेभ्यो देयानि हवींषि देवा अदुर्ऋत्विजो दत्तवन्तः, तानि सर्वाणि हविष्फलान्यस्मै यजमानायाऽऽ च

+एतदग्रे वैदिकपाठे प्रसिद्धमधिकं किंचित्तद्यथा—"अञ्जत्यग्निर्होता नो गीर्भिर्विप्र उपोहयद्विदथवाजिनां सप्तत्रिंशत्। अञ्जन्त्युपावसृजन्नान्याकरदेवं देवो वनस्पतिरष्टात्रिंशत्। अञ्जन्ति ते सुक्रतवो जुषस्वाऽऽभरतं देवो वनस्पतिः पञ्चचत्वारिंशत्" इति।

१ क. ख. तद्बन्धनाय। २ क ख. 'दर्शनहोत'। ३ क. दत्तानि।

शास्त्वानायासेन सिध्यन्त्वित्येवमाशिषं च कुरु । आगुरस्व च तत्सिद्धयर्थमुद्यमं च कुरु । हे होतरिषितो मयाऽभिलषितः प्रेषितश्चासि । भद्रवाच्याय कल्याणवचनाय प्रेषितो मानुषो होता त्वं सूक्तस्य वाको वचनं यस्य सोऽयं देवः सूक्तवाकस्तस्मै सूक्तवाकाय देवाय सूक्ता ब्रूहि " इदं द्यावापृथिवी " इत्यनुवाकोक्तानि शोभनानि वचनानि कथय ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे
षष्ठः प्रपाठकः समाप्तः ॥ ६ ॥

---

## अथ कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे
## तृतीयकाण्डे सप्तमप्रपाठकस्याऽऽरम्भः ।

---

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
कथितं प्राशुकं हौत्रं षष्ठे पूर्वप्रपाठके ।
प्रपाठके सप्तमेऽस्मिन्नाच्छिद्रं काण्डमुच्यते ॥ २ ॥
प्रायश्चित्तेन मन्त्रैश्च यज्ञच्छिद्रं प्रपूर्यते ।
तत्सर्वमुक्तमत्रेति काण्डमच्छिद्रमीरितम् ॥ ३ ॥

तत्राऽऽद्येनानुवाकत्रयेण प्रायश्चित्तमुच्यते । उपरितनैरेकादशभिरनुवाकैस्तत्र तत्रापेक्षिता मन्त्रा उच्यन्ते । तत्र प्रथमानुवाके दर्शपूर्णमासविषयाणि कानिचिदुच्यन्ते । यदुक्तं सूत्रकारेण—" तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यञ्जुहुयात्पृथगरणीष्वग्नीन्समारोप्य प्रयाति यत्र वसेत्तदेतामिष्टिꣳ सꣳस्थापयेत् " इति । तेमेनं होमं विधत्ते—

हरिः ॐ ।

सर्वान्वा एषोऽग्नौ कामान्प्रवेशयति । योऽग्नीनन्वाधाय व्रतमुपैति । स यदनिष्ट्वा प्रयायात् ।

---

१ क. 'मुक्त्वा तदुप' । २ क. तमेतं ।

अकामप्रीता एनं कामा नानुप्रयायुः ।
अतेजा अवीर्यः स्यात् । स जुहुयात् ।
तुभ्यं ता अङ्गिरस्तम । विश्वाः सुक्षितयः
पृथक् । अग्ने कामाय येमिर इति । कामा-
नेवास्मिन्दधाति (१)। कामप्रीता एनं कामा
अनुप्रयान्ति । तेजस्वी वीर्यावान्भवति, इति ।

दर्शपूर्णमासाभ्यां यियक्षुः पर्वणि प्रातरग्निहोत्रादूर्ध्वमाहवनीयं प्रणीय देवा गातुविद इति मन्त्रं जपित्वा ममाग्ने इत्यादिभिर्मन्त्रैरग्नीनामुपसमिन्धनं करोति । तदिदमग्नीनामन्वाधानमध्वर्युणा क्रियते । यजमानस्तु दक्षिणेनाऽऽहवनीयमवस्थाय व्रतमुपैष्यन्समुद्रं मनसा ध्यायत्यथ जपति—"अग्ने व्रतपते व्रतं चरिष्यामि" इति । तदिदं व्रतोपायनं यः पुमानेवमग्नीनन्वाधाय व्रतं कर्मानुष्ठानलक्षणं करोत्येष पुमान्सर्वानपि स्वकीयान्कामानभिलषितार्थानग्नौ प्रवेशयति । अग्निरेव मम सर्वेषामर्थानां साधक इत्येवं निश्चित्य प्रवर्तते । अत एवाग्निविषयो मन्त्र एवमाम्नायते—"त्वयाऽध्यक्षेण पृतना जयेम" इति । एवं सति सोऽन्वाहिताग्निर्यदीष्टिमकृत्वा प्रयाणं कुर्यात्तदानीमेनं कामा अपेक्षिता अर्था न प्राप्नुयुः । कीदृशाः कामा अकामप्रीताः कामेन प्रीताः कामप्रीता न कामप्रीता अकामप्रीताः । पूर्वमग्नौ प्रवेशकाले यजमानसंबन्धिना कामेन सर्वेऽपि काम्याः पदार्थाः प्रीता इदानीं तस्यानादरेण सा प्रीतिर्व्यपगता । तस्मात्कामाप्रीताः काम्यपदार्था एनं यजमानं परित्यजन्ति । ततश्चायं तेजोवीर्यादिकामरहितः स्यात् । तस्मात्सोऽन्वाहिताग्निर्देवानिष्ट्वा प्रयास्यन्नुक्तदोषवान्स्यात्तस्य परिहाराय 'तुभ्यं ताः' इति मन्त्रेण जुहुयात् । प्रयास्यतो वास्तोष्पतीयहोमोऽप्यन्यत्राऽऽम्नातः—"यदहुत्वा वास्तोष्पतीयं प्रयायात् । रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति" इति । सोऽयमाहिताग्निमात्रसाधारणः । अयं त्वन्वाहिताग्निविषय इति विशेषः । मन्त्रार्थस्त्वतिशयेनाङ्गसौष्ठवयुक्तोऽङ्गिरस्तमस्तादृश हेऽग्ने कामाय सर्वकामप्रदत्वेन कामरूपाय तुभ्यमग्नये ता लोकवेदप्रसिद्धा विश्वाः सर्वाः सुक्षितयः कामभोगहेतवः सुभूमयः पृथक्प्रत्येकं येमिरे प्रजापतिना नियमिताः सम-

१ क. 'होत्रे हुत्वाऽऽह' । २ क. 'धनमिरये' । ३ क. प्राप्ता ।

पिताः। अतः कामानां त्वदधीनत्वान्मह्यं कामान्प्रयच्छेत्यर्थः । अनेन होमेन तुष्टः सोऽग्निरस्मिन्यजमाने कामितानर्थान्संपादयत्येव । ते च कामिता अर्था अन्वाधानकालवत्काममीताः सन्त एनं यजमानमनुप्रयान्ति । ततोऽयं तेजोवीर्यादिकामयुक्तो भवति ।

यदुक्तं सूत्रकारेण—"यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेत्—अन्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीय भूरित्युपस्थाय" इति । तदिदं विधत्ते—

संततिर्वा एषा यज्ञस्य । योऽग्नीनन्वाधाय
व्रतमुपैति । स यदुद्वायति । विच्छित्तिरे-
वास्य सा। तं प्राञ्चमुद्धृत्य। मनसोपतिष्ठेत।
मनो वै प्रजापतिः। प्राजापत्यो यज्ञः (२)।
मनसैव यज्ञꣳ संतनोति । भूरित्याह ।
भूतो वै प्रजापतिः। भूतिमेवोपैति, इति ।

यो यजमानः प्रथममग्नीनन्वाधायानन्तरं व्रतमुपैति तस्य यजमानस्यैषाऽन्वाधानव्रतोपायनानुष्ठितिर्यज्ञस्य संततिर्वै, अविच्छेद एव संपद्यते । एवं सति सोऽन्वाहिताग्निर्यदुद्वायति विनश्येत्तदानीमस्य यज्ञस्य सा वह्निविनाशरूपा विच्छित्तिरेव संपद्यते । अनुष्ठानसांतत्याभावात् । अतो विच्छेदपरिहाराय तमग्निं प्राञ्चमुद्धृत्य गार्हपत्यादाहवनीयं प्रणीयेत्यर्थः । प्रणयनादूर्ध्वं मनसा तमग्निमुपतिष्ठेत भूरिति मन्त्रं जपेदित्यर्थः । चाक्षुषव्यक्तरूपमूर्त्यभावेनाव्यक्तत्वात् । मन एव प्रजापतेः स्वरूपम् । यज्ञश्च प्रजापतिना सृष्टत्वात्प्राजापत्यः । अतो मनसोपस्थाने सति प्रजापतिरूपेण मनसा प्राजापत्यं यज्ञं विच्छित्तिपरिहारेण संततं करोति । तस्माद्भूरिति मन्त्रं जपेत् । भूतो नित्यसिद्धः प्रजापतिरेव भूशब्दवाच्योऽतस्तन्मन्त्रपाठेनैश्वर्यमेव प्राप्नोति ।

यदुक्तं सूत्रकारेण—"यद्याहिताग्नेरग्निरपक्षायेदाशम्या परासात्परि वाजपतिः कविरग्निरिति त्रिः प्रदक्षिण परिक्रम्य तं संभरेदिदं त एकम्" इति । तदिदं विधत्ते—

वि वा एष इन्द्रियेण वीर्येणर्ध्यते । यस्याऽऽ-

हिंताग्नेरग्निरपक्षायति । यावच्छम्यया प्रविध्येत् । यदि तावदपक्षायेत् । तꣳ संभरेत् । इदं त एकं पर उत एकम् (३) । तृतीयेन ज्योतिषा संविशस्व । संवेशनस्तनुवै चारुरेधि । प्रिये देवानां परमे जनित्र इति । ब्रह्मणैवैनꣳ संभरति । सैव ततः प्रायश्चित्तिः, इति ।

आहिताग्नेर्यस्य यजमानस्यायमग्निरपक्षायति यदा स्वकीयादायतनादपेत्य बहिः पतत्येष यजमान इन्द्रियेण वीर्येण च वियुक्तो भवति तदानीं शम्यां हस्ते स्वीकृत्य स्वकीयेन सर्वेणापि बलेन दूरे परास्येत् । तया शम्यया यावद्भूमदेशः प्रविध्येद्व्याप्नोति तावतः प्रदेशस्य मध्ये यद्यङ्गारोऽपक्षायेत्पतितः स्यात्तमङ्गारम् 'इदं ते' इति मन्त्रेण संभरेदुद्धरेत्पुनरपि स्वकीयायतने स्थापयेत् । मन्त्रस्यायमर्थः—हेऽग्ने ते तव बहिः पतितमिदमेकं ज्योतिरुतापि च परः परस्तात्स्वकीय एव स्थाने स्थितमेकं ज्योतिस्तदुभयमपि तृतीयेन ज्योतिषा परमात्मरूपेण संविशस्व संयोजयस्व । तनुवै स्वकीयस्य शरीरस्य संवेशनः परमात्मज्योतिषि संयोजयिता त्वं चारुरेधि प्रक्षालितदोषो भव । किं निमित्तमिति तदुच्यते—देवानां प्रिये प्रीतिहेतौ । परमे जनित्रे प्रकृष्टे फलजनके यागे निमित्तभूते सति यागसिद्ध्यर्थमित्यर्थः । एवं कुर्वन्यजमानो ब्रह्मणैव मन्त्रेणैव परमात्मनैव वा तमेनमग्निं संभरति पुनः समीचीनं करोति । सैव तथाविधसंभरणक्रियैव ततः प्रायश्चित्तिस्तस्माद्बहिष्पतनदोषादपगमः( महेतुः ) ।

यदुक्तं सूत्रकारेण—“ यदि परस्तरामपक्षायेत् । अनु प्रयायावस्येत् । तदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ” इति । तदिदं विधत्ते—

यदि परस्तरामपक्षायेत् । अनु प्रयायावस्येत् । सो एव ततः प्रायश्चित्तिः, इति ।

यदि शम्योपतनदेशात्परस्तरामतिशयेनं दूरदेशेऽपक्षायेदङ्गारोऽपगम्य पतेत्तदानीं स्वयमपि तदङ्गारमनु तत्रैव देशे प्रयायं यात्वाऽवस्येद्देवयजनमध्यस्येत् ।

---

१ ख. ग. 'म्यायत' । २ क. ख. 'म बाह्यदे' । ३ क. 'य गत्वाऽव' ।

तत्र पाथिकृतीमिष्टिं कृत्वा श्वोभूते गृहेषु प्रत्यवस्यति। सों एव यथोक्तानुष्ठितिरेव प्रायश्चित्तिस्तस्माद्दोषादपगमहेतुः ।

यदुक्तं सूत्रकारेण—" यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेदथोत्तरस्मै हविषे वत्सानपाकृत्योपक्सेत् " इति । तदिदं विधत्ते—

ओषधीर्वा एतस्य पशून्पयः प्रविशति । यस्य हविषे वत्सा अपाकृता धयन्ति ( ४ ) । तान्यद्दुह्यात् । यातयाम्ना हविषा यजेत । यन्न दुह्यात् । यज्ञपरुरन्तरियात् । वायव्यां यवागूं निर्वपेत् । वायुर्वै पयसः प्रदापयिता । स एवास्मै पयः प्रदापयति । पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे ( ५ ) । अथोत्तरस्मै हविषे वत्सानपाकुर्यात् । सैव ततः प्रायश्चित्तिः, इति ।

यस्य यजमानस्य हविषे हविरर्थमपाकृता वत्सा गोभिः संयुज्य धयन्ति स्तनं पिबन्त्येतस्य यजमानस्य हवीरूपं पय ओषधीः पशूंश्च प्रविशति । तत्र वत्सैः पीतत्वात्पशुप्रवेशः स्पष्टः । ओषधीदेवताप्रवेशस्तु शास्त्रसिद्धः । अत्रेदं चिन्त्यते—तान्पीतपयसो वत्सान्पुनरपि सायंकाले गोसमीप उपावसृज्य ता गा दुह्यान्न वेति । यदि दुह्यात्तदानीं हविर्यातयामं वत्सैः पूर्वं पीतत्वेन गतसारं भवति । तादृशेन हविषा यजेत । यदि न दुह्यात्तदानीं यज्ञपरुरन्तरियात्सांनाय्याभावेन यज्ञावयवो विच्छिद्येत । अतस्तद्दोषपरिहाराय वायुदेवताकां यवागूं निर्वपेत् । " वायवः स्थोपायवः स्थ " इतिमन्त्रानुसारेणापाकृतानां वत्सानां वाय्वधीनत्वाद्वत्सद्वारेण वायुरेव पयसः प्रदापयिता । ततोऽस्मै यजमानाय स एव वायुः पयः प्रदापयति । किंच यवागूनिष्पादिका ओषधयः पय एव क्षीरस्य गोभक्षिततृणजन्यत्वात् । पयस्तु

स्वयमेव पयो न तु तत्रोपचारोऽस्ति । तथा सति यवागूहेत्वोषधिरूपेण पयसै-वास्मै यजमानाय क्षीररूपं पयः संपादयति । अथ यवागूनिर्वापादूर्ध्वमुत्तरस्मै हविषे परेद्युरनुष्ठेयस्य सांनाय्यस्य सिद्धये पुनरपि वत्सानपाकुर्यात्पृथक्कुर्यात् । सैव यवागूरेव ततः प्रायश्चित्तिस्तस्माद्दोषादपगमहेतुः ।

यदुक्तं सूत्रकारेण—" यस्य सायं दुग्धं हविरार्तिमार्छतीन्द्राय व्रीहीन्निरुप्यो-पवसेद्यत्प्रातः स्यात्तच्छृतं कुर्यादथेतर ऐन्द्रः पुरोडाशः स्यात्तस्य प्रातर्दोहेन सम-वदाय प्रचरेदेतदेव प्रातर्दोह आर्तिगते प्रायश्चित्तं सायंदोहेनास्य समवदाय प्रच-रेत् " इति । तदेतद्विधत्ते—

अन्यतरान्वा एष देवान्भागधेयेन व्यर्धयति ।
ये यजमानस्य सायं गृहमागच्छन्ति । यस्य
सायं दुग्धꣳ हविरार्तिमार्छति । इन्द्राय
व्रीहीन्निरुप्योपवसेत् । पयो वा ओषधयः ।
पय एवाऽऽरभ्य गृहीत्वोपवसति । यत्प्रातः
स्यात् । तच्छृतं कुर्यात् (६)। अथेतर ऐन्द्रः
पुरोडाशः स्यात् । इन्द्रिय एवास्मै समीचीं
दधाति । पयो वा ओषधयः । पयः पयः ।
पयसैवास्मै पयोऽवरुन्धे । अथोत्तरस्मै हविषे
वत्सानपाकुर्यात् । सैव ततः प्रायश्चित्तिः, इति ।

द्विविधा देवाः । केचन यजमानस्य गृहे सायमागच्छन्ति । अपरे पुनः प्रातरागच्छन्ति । तत्र सायं दुग्धस्य विनाशे कांश्चिद्देवान्सायमागच्छतो भागेन विरहितान्करोति । ततस्तत्परिहारायेन्द्रार्थं व्रीहीणां निर्वापमात्रं कृत्वा तस्मि-न्दिने पुरोडाशमनिष्पाद्य वह्निसमीपे निवसेत् । तथा सत्योषधीनां पयोहेतु-त्वेन पयोरूपत्वादोषधीरूपं पय एवोपक्रम्य देवताश्च स्वाधीनत्वेन गृहीत्वा समीपे निवसति । ततो यत्प्रातर्दुग्धं स्यात्तच्छृतं पक्वं कुर्यात् । तथा सति सांनाय्यरूपयोर्दधिक्षीरयोर्मध्ये क्षीरं मुख्यमेव संपद्यते । अथानन्तरमितरो हवि-ष्पदार्थः पूर्वेद्युर्निरुप्तैर्व्रीहिभिरैन्द्रः पुरोडाश एव भवेत् । तेन क्षीरेण पुरोडाशेन

चास्मै यजमानायेन्द्रिये हविर्द्वयसाध्ये द्वे फलोत्पादनसामर्थ्ये समीची अनुकूले संपादयति। पयो वेत्यादि पूर्ववत्।

यदुक्तं सूत्रकारेण—"यस्योभौ दोहावार्तिमार्छेयातामाग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चशरावमोदनमग्निं पुरोडाशेन यजेतैन्द्रं पञ्चशरावेण" इति। तदेतद्विधत्ते—

उभयान्वा एष देवान्भागधेयेन व्यर्धयति। ये यजमानस्य सायं च प्रातश्च गृहमागच्छन्ति। यस्योभयꣳ हविरार्तिमार्छति (७)। ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्। अग्निं देवतानां प्रथमं यजेत्। अग्निमुखा एव देवताः प्रीणाति। अग्निं वा अन्वन्या देवताः। इन्द्रमन्वन्याः। ता एवोभयीः प्रीणाति। पयो वा ओषधयः। पयः पयः। पयसैवास्मै पयोऽवरुन्धे। अथोत्तरस्मै हविषे वत्सानपाकुर्यात् (८)। सैव ततः प्रायश्चित्तिः, इति।

दधिपयसोरुभयोरप्यार्तौ सायं प्रातश्चाऽऽगतानुभयविधानमपि देवान्भागहीनान्करोति। अतस्तत्परिहारायेन्द्रदेवताकं शरावपञ्चकपरिमितव्रीहिं निष्पाद्यौदनं निवर्पेत्। तस्मादैन्द्रादोदनात्पूर्वं देवतानां मध्ये मुख्यमग्निमष्टाकपालेन पुरोडाशेन यजेत्तेनाग्निप्रमुख्या देवताः सर्वा एव प्रीणयति। काश्चिद्देवता अग्निमेवानुवर्तन्ते। अन्यास्त्विन्द्रमेव। हविर्द्वयेन द्विविधा अपि तास्ताः प्रीणयति। पयो वेत्यादि पूर्ववत्।

यदुक्तं सूत्रकारेण—"यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत। जघनेन वेदिमन्तर्वेदि वोदगुल्बं संहननं स्तृणीयाद्यदा निरात्रीणा स्यादथैनामुपह्वयेतामूहमस्मि" इति। तदिदं विधत्ते—

अर्धो वा एतस्य यज्ञस्य मीयते। यस्य व्रत्येऽ-

ह्न्पत्न्यनालम्भुका भवति । तामपरुध्य यजेत । सर्वेणैव यज्ञेन यजते । तामिष्ट्वोपह्वयेत । अमूह-मस्मि । सा त्वम् । द्यौरहम् । पृथिवी त्वम् । सामाहम् । ऋक्त्वम् । तावेहि संभवाव । सह रेतो दधावहै । पुꣳसे पुत्राय वेत्तवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति । अर्ध एवैना-मुपह्वयते । सैव ततः प्रायश्चित्तिः (९), इति । दधाति यज्ञ उत एकं धर्यन्ति रुन्धे कुर्यादार्छत्यपाकुर्यात्पृ-

थिवी त्वमष्टौ च ।

सर्वान्विवै यदि परस्तरामन्यतरानुभयानर्धो वै ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

व्रत्येऽहन्यागानुष्ठानदिने यस्य यजमानस्य पत्न्यनालम्भुका स्प्रष्टुमयोग्या रज-स्वला भवति, एतदीयस्य यज्ञस्यार्ध एको भागो मीयते विनश्यति । दंपती हि कर्मणः कर्तारौ तत्र स्त्रियाः कर्मायोग्यत्वादर्थहानिः । तदानीं हानिपरिहाराय तां स्त्रियमपरुध्य बहिर्निःसार्य जघनेन वेदिमन्तर्वेदि वोदशुल्बं संनहनं स्तीर्त्वा यजेत । एवं कुर्वन्सर्वेणैव यज्ञेन यजते । अथेष्टचा अनन्तरं यदा रजस्वलाया रात्रित्रयमतीतं भवति तदा तां भोगार्थं 'अमूहमस्मि' इत्यनेन मन्त्रेणोपह्वयेत । मन्त्रस्यायमर्थः—सामशब्दे योऽयं ममेत्युत्तरभागो यश्च सेति पूर्वभागस्तयोर्मध्ये हे जाये अहमुत्तरभागोऽस्मि त्वं पूर्वभागः । द्यावापृथिव्योर्मध्ये द्यौरहमस्मि । पृथिवी त्वमसि । ऋक्सामयोर्मध्ये सामाहमस्मि । ऋग्रूपा त्वमसि । तत्र यथा सामऋ-क्शब्दावयवावेकी भवतः, यथा च द्यावापृथिव्या ऋक्सामे च तद्वत्तावे-वाऽऽवामुभौ संभवाव । अतस्त्वमेह्युभौ सह रेतो धारयाव । किमर्थं पुंसे पुत्राय

---

१ क. ख. ततः । २ ग. सामाहंशब्दे योऽङ्भिस्यु ।

वेत्तवै पुंस्त्वसामर्थ्योपेतं पुत्रं लब्धुं तथा धनपुष्ट्यादिसिद्ध्यर्थं च। एवं कुर्वन्यजमानो यज्ञस्य यो लुप्तोऽर्थस्तस्मिन्नेवार्थं एनां पत्नीमुपह्वयते। सैव तथाविधानुष्ठितिरेव ततः प्रायश्चित्ती रजस्वलादोषादपगमहेतुः।

अत्र मीमांसा। षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

आर्तौ पञ्चशरावो यः स दोहद्वयसंक्षये।
एकनाशेऽपि वाऽऽद्येऽस्तु हविर्विदुभयोक्तितः॥
हविरार्त्युक्तिमात्रेण निमित्तं पर्यवस्यति।
उभयोक्त्यविवक्षायामेकनाशेऽप्यसौ भवेत्॥

दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते—"यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति। सोऽयं यागो दोहद्वयं निमित्तीकृत्यानुष्ठेयो न त्वेकदोहक्षये। कुतः। उभयशब्दस्य श्रुतत्वात्। आर्तिशब्दस्य विशेषणत्वेन श्रूयमाणो हविःशब्दो यथा विवक्षितार्थस्तथा हविःशब्दविशेषणस्योभयशब्दस्यापि विवक्षितार्थत्वादुभयहविरार्तिरेव निमित्तमिति चेत्। मैवम्। आर्तिमात्रोपन्यासे साकाङ्क्षितत्वान्निमित्तं न पर्यवस्यतीति हविःशब्दार्थो विवक्षितव्यः। तावतैव निमित्तस्य पर्यवसितत्वादुभयशब्दार्थो न विवक्षितः। हविरार्तिमात्रस्य निमित्तत्वे सति सायंदोहप्रातर्दोहार्त्योरुभयोर्निमित्तत्वं सिद्धमेवात्रोभयशब्देनानूद्यते। तस्मादेकनाशे द्वयनाशेऽप्यसावोदनो निर्वपणीयः।

तत्रैवान्यच्चिन्तितम्—

द्रव्यप्रतिनिधिः पञ्चशरावो भिन्नकर्म वा।
दोहद्वयार्तितो दर्शे द्रव्यं स्यादीप्सितत्वतः॥
प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते।
शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते॥

योऽयं पञ्चशराव ओदनः पूर्वमुदाहृतः, नासौ कर्मान्तररूपः, किंतु पूर्वस्मिन्नेव कर्मणि दोहद्वयरूपे द्रव्येऽपचरिते सति तत्प्रतिनिधिद्रव्यत्वेनायं विधीयते। कुतः। दर्शयागे द्रव्यस्यापेक्षितत्वात्। इति चेत्। मैवम्। "ऐन्द्रं पञ्चशरावम्" इति द्रव्यदेवतयोः प्रतीतौ कर्मान्तरविधेर्वारयितुमशक्यत्वात्। यदि पूर्वस्मिन्नेव कर्मण्युभयं विधीयते, तदा कर्मणः प्राप्तत्वादुभयोर्द्रव्यदेवतयोर्विधौ वाक्यं भिद्येत। तस्माद्द्रव्यदेवताभ्यां विशिष्टं कर्मान्तरं विधीयते।

१ क. 'विराद्युभयो'।

तत्रैवान्यच्चिन्तितम्—

दर्शे प्रत्याम्नाय एतदङ्गं वा हविरार्तितः ।
दर्शयागे निवृत्तेऽस्य प्रत्याम्नायतया विधिः ॥
पूर्वं द्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात् ।
अनिवृत्तेस्तदङ्गं स्यादार्तिवैगुण्यहानये ॥

पञ्चशरावद्रव्यकमिन्द्रदेवताकं यत्कर्मान्तरं कथितं तदेतद्दर्शयागस्य प्रतिनिधित्वेन विधीयते । कुतः । उभयहविरार्त्या दर्शयागस्य निवृत्तत्वात् । इति चेत् । नैवम् । पूर्वयोर्दधिपयसोर्नाशेऽपि पयोन्तरेण दध्यन्तरेण च दर्शेऽनुष्ठीयमाने हविरार्तिकृतं वैगुण्यं परिहरन्नयं पञ्चशरावयागो दर्शयागस्याङ्गं भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः ।

---

प्रथमे दर्शपूर्णमासेष्टिविषयाणि प्रायश्चित्तान्यभिहितानि । द्वितीयेऽग्निहोत्रसांनाय्यसाधारणानि प्रायश्चित्तान्यभिधीयन्ते । यदुक्तं सूत्रकारेण—" यस्याग्निहोत्रं सांनाय्यं वा विष्यन्देतोदङ्परेत्य वल्मीकवपामुद्धृत्य ' प्रजापते न त्वदेतानि ' इति प्राजापत्ययर्चा वल्मीकवपायामवनीय भूरित्युपस्थायान्यां दुग्ध्वा पुनर्जुहुयाद्यदि सांनाय्यमन्यदा गमयेत् " इति । तदिदं विधत्ते—

यद्विष्यण्णेन जुहुयात् । अप्रजा अपशुर्यजमानः स्यात् । यदनायतने निनयेत् । अनायतनः स्यात् । प्राजापत्ययर्चा वल्मीकवपायामवनयेत् । प्राजापत्यो वै वल्मीकः । यज्ञः प्रजापतिः । प्रजापतावेव यज्ञं प्रतिष्ठापयति । भूरित्याह । भूतो वै प्रजापतिः (१) । भूतिमेवोपैति । तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होः-

तव्यम् । सैव ततः प्रायश्चित्तिः, इति ।

विष्षण्णं विष्यन्दितं श्रपणादिकाले पात्राद्बहिः पतितं तदवशिष्टेन हविषा किं होतव्यं किंवा तद्धविरग्न्यायतनादन्यत्र निनयेदिति चिन्तनीयम् । अत्र होमपक्षे यजमानः प्रजापशुरहितः स्यात् । अन्यत्र निनयनपक्षे गृहरहितः स्यात् । तदुभयदोषपरिहाराय वल्मीकवपायां 'प्रजापते-न त्वदेतानि' इत्यृचा तदवनयेत् । वल्मीकस्य प्रजापतिवद्बहुप्रायश्चित्तित्वात्प्राजापत्यत्वम् । यज्ञश्च प्रजापतिसृष्टत्वात्तद्रूपः । अतो वल्मीके तदवनयनेन वल्मीकरूपे प्रजापतावेव प्रजापतिरूपं यज्ञं प्रतिष्ठापयति । ततो भूरिति मन्त्रेणोपतिष्ठेत । सत्तावाचिनो भूधातोरुत्पन्नः शब्दो भूतं नित्यसिद्धं प्रजापतिमाचष्टे । तदुपस्थानेनैश्वर्यमेव प्राप्नोति । तदेतत्कृत्वा पुनरग्निहोत्रार्थमन्यां गां दुग्ध्वा होतव्यम् । सैव तथाविधक्रियैव ततो दोषादपगमहेतुः ।

यदुक्तं सूत्रकारेण—"यदि कीटोऽवपद्येत मध्यमेनान्तिमेन वा पलाशपर्णेन 'महि द्यौः पृथिवी च नः' इति द्यावापृथिव्ययर्चाऽन्तःपरिधि निनीयान्यां दुग्ध्वा पुनर्जुहुयाद्यदि सांनाय्यमन्यदा गमयेत्" इति । तदिदं विधत्ते—

यत्कीटावपन्नेन जुहुयात् । अप्रजा अपशुर्यजमानः स्यात् । यदनायतने निनयेत् । अनायतनः स्यात् । मध्यमेन पर्णेन द्यावापृथिव्ययर्चाऽन्तःपरिधि निनयेत् । द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति(२)। तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । सैव ततः प्रायश्चित्तिः, इति ।

अग्निहोत्रार्थं यद्धविः कीटेनोपहतं तस्य होमपक्षान्यत्रनिनयनपक्षौ पूर्ववद्दुष्टौ । ततो मध्यमेन पलाशपर्णेन मही द्यौरिति मन्त्रेण परिधेरन्तःप्रदेशे निनयेत् । ततो द्यावापृथिव्योरेव प्रतिष्ठापितं भवति । तत्कृत्वेत्यादि पूर्ववत् । यदि सांनाय्ये कीटपतनं स्यात्तदानीमन्तःपरिधि निनीयान्यत्सांनाय्यं संपादयेदिति द्रष्टव्यम् ।

यदुक्तं सूत्रकारेण—"यस्याग्निहोत्रमवर्षेन्मित्रो जनान्कल्पयति प्रजानन् ।

मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभिचष्टे । सत्याय हव्यं घृतवज्जुहोतेति तत्कृत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात् " इति । तदिदं विधत्ते—

यद्यवृष्टेन जुहुयात् । अपरूपमस्याऽऽत्मञ्जायेत । किलासो वा स्यादर्शसो वा । यत्प्रत्येयात् । यज्ञं विच्छिन्द्यात् । स जुहुयात् । मित्रो जनान्कल्पयति प्रजानन् (३) । मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभिचष्टे । सत्याय हव्यं घृतवज्जुहोतेति । मित्रेणैवैनत्कल्पयति । तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । सैव ततः प्रायश्चित्तिः, इति ।

अवपतितेन वर्षेण दूषितमववृष्टं तादृशं हविर्यदा भवेत्तदा किं तेन होतव्यं किंवा होममकृत्वा प्रत्यागन्तव्यम् । होमपक्षेऽस्य यजमानस्याऽऽत्मनि स्वदेहेऽपरूपं निन्दितं रूपं प्रादुर्भवेत् । किं तन्निन्दितमिति तदुच्यते । किलासः कुष्ठी । अर्शसा रोगेण युक्तोऽर्शसः । उभयोरन्यतरदरूपं शरीरे प्रादुर्भवेत् । दोषद्वयनिवृत्त्यर्थं मित्रो जनानिति मन्त्रेण जुहुयात् । मन्त्रस्यायमर्थः—योऽयं मित्राख्यो देवः सोऽयं प्रजानंस्तत्तज्जनसामर्थ्यं प्रकर्षेण विद्वान्सञ्जनान्सर्वान्कल्पयति । इष्टसाधनसमर्थान्करोति । स च मित्रः पृथिवीं दाधार । उत द्यामपि दाधार । द्यावापृथिव्योर्दार्ढ्यं कृतवानित्यर्थः । किंच स मित्रः कृष्टीर्मनुष्याननिमिषा निमेषरहिता आलस्यरहिता यथा भवन्ति तथाऽभिचष्टेऽभितः ख्यापयति बोधयतीत्यर्थः । बोधप्रकार एव स्पष्टी क्रियते—हे मनुष्याः सत्यायावितथाय कर्मफलाय घृतवद्घृतपूर्णं हव्यं जुहोत जुहुतेति । एवं सति मित्रदेवतामुखेनैवैनद्धविः कल्पयत्यववर्षेण दो(षणदो)षरहितं करोति । तत्कृत्वेत्यादि पूर्ववत् ।

यदुक्तं सूत्रकारेण—" यदि पूर्वस्यामाहुत्या[२] हुतायामुत्तराऽऽहुतिः स्कन्दे-

१ क. °ण बिन्दुपतनेन दू° । २ क. °ज्ञानन्प्रजननसा° । ३ ख °ति मन्त्रदे° ।

यदि वोत्तरया पूर्वामभिजुहुयाद्यत्र वेत्थ वनस्पते " इत्यादि । तदिदं विधत्ते—

यत्पूर्वस्यामाहुत्यां हुतायामुत्तराऽऽहुतिः स्कन्देत् । द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत । यदुत्तरयाऽभिजुहुयात् ( ४ ) । चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्येत । यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामयेति वानस्पत्ययर्चा समिधमाधाय । तूष्णीमेव पुनर्जुहुयात् । वनस्पतिनैव यज्ञस्याऽऽर्तां चानार्तां चाऽऽहुती विदाधार । तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । मेव ततः प्रायश्चित्तिः, इति ।

अग्निहोत्रे द्वे आहुती होतव्ये, तत्रैकाहुतेरूर्ध्वं द्वितीयाहुतिद्रव्यस्य नाशे सति यजमानसंबन्धिनो द्विपात्पशवो मनुष्या विनश्येयुः । द्रव्यविनाशाभावेऽपि होमकालेऽतिहाय पूर्वामाहुतिं जुहोतीति पूर्वाहुतिस्थानमतिलङ्घ्यान्यत्र होमविधानाद्यदि पूर्वाहुतेरुपर्युत्तराहुतिं जुहुयात्तदा चतुष्पात्पशवो विनश्येयुः। तस्माद्द्रव्यनाशे पूर्वाहुतिदेशहोमे च दोषपरिहाराय ' यत्र वेत्थ ' इत्यादिमन्त्रेण समिधमादध्यात् । मन्त्रस्यायमर्थः—हे वनस्पते देवानां गोप्यानि नामानि यस्मिन्देशे त्वं वेत्थ तस्मिन्देशेऽस्मदीयानि हव्यानि मापय। अनेन मन्त्रेण समिधमाधायाग्निहोत्रहवण्यामवशिष्टं द्रव्यं मन्त्ररहितमेव जुहुयात् । तथा सति यज्ञस्य संबन्धिनी येयमार्ता द्वितीयाऽऽहुतिर्याऽप्यनार्ता प्रथमाऽऽहुतिस्तदुभयमपि वनस्पतिदेवतामुख्ये( खे )नैव विभज्य धृतवान्भवति । तत्कृत्वेत्यादि पूर्ववत् ।

यदुक्तं सूत्रकारेण—" यदि पुरा प्रयाजेभ्यो बहिष्परिध्यङ्गारः स्कन्देत्तं स्रुवस्य बुध्नेनाभिनिदध्यात् । ' मा तमो मा ' इत्यादि । तदेतद्विधत्ते—

यत्पुरा प्रयाजेभ्यः प्राङ्गारः स्कन्देत् । अध्व-

यँवै च यजमानाय चाकँ स्यात् (५)। यद्द-
क्षिणा। ब्रह्मणे च यजमानाय चाकँ स्यात्।
यत्प्रत्यक्। होत्रे च पत्नियै च यजमानाय चाकँ
स्यात्। यदुदङ्। अग्नीधे च पशुभ्यश्च यजमा-
नाय चाकँ स्यात्। यदभिजुहुयात्। रुद्रोऽस्य
पशून्घातुकः स्यात्। यन्नाभिजुहुयात्। अशान्तः
प्रह्रियेत (६)। स्रुवस्य बुध्नेनाभिनिदध्यात्।
मा तमो मा यज्ञस्तमन्मा यजमानस्तमत्। नमस्ते
अस्त्वायते। नमो रुद्र परायते। नमो यत्र निषी-
दसि। अमुं मा हिँसीरमुं मा हिँसीरिति येन
स्कन्देत्। तं प्रहरेत्। सहस्रशृङ्गो वृषभो जात-
वेदाः। स्तोमपृष्ठो घृतवान्त्सुप्रतीकः। मा नो
हासिन्मेत्थितो नेत्त्वा जहाम। गोपोषं नो वीर-
पोषं च यच्छेति। ब्रह्मणैवैनं प्रहरति। सैव ततः
प्रायश्चित्तिः (७), इति।

वै प्रजापतिः स्थापयति प्रजानन्नभिजुहुयात्स्याद्ध्रियेत जहाम त्रीणि च।

यद्विष्वण्णेन यत्कीटा यदववृष्टेन यत्पूर्वस्यां यत्पुरा।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये
द्वितीयोऽनुवाकः ॥ २ ॥

---

अङ्गारस्कन्दनं कालभेदेन द्विविधम्। प्रयाजेभ्यः पूर्वमुत्तरं चेति। तत्रोत्तर-
कालीनस्य स्कन्दनस्य पूर्वानुवाकोक्तं प्रायश्चित्तं द्रष्टव्यम्। तत्र हि यस्याऽऽ-

हिताग्नेरग्निरपक्षायतीत्यादिना प्रायश्चित्तमुक्तं तद्यद्यपि सर्वकालसाधारणं तथाऽप्यत्र पुरा प्रयाजेभ्य इति विशेषाभिधानादेतद्व्यतिरिक्तविषयं द्रष्टव्यम्। अङ्गारादिस्कन्दनं प्राच्यादिदिग्भेदाच्चतुर्विधम्। तत्र प्राच्यां स्कन्दने सत्यध्वर्युयजमानयोरकं स्यात्। कं सुखं तद्विपरीतमकं दुःखम्। एवं दक्षिणादिदिक्ष्वपि योज्यम्। तस्य स्कन्नाङ्गारस्योपरि होमाहोमपक्षयोरुभयोरपि दोषोऽस्ति। होमपक्षे पशुहानिः। अहोमपक्षे रुद्ररूपोऽग्निरशान्त उग्रः सन्प्रहृतः स्यात्। अतस्तद्दोषपरिहाराय स्रुवस्य मूलेन तमङ्गारं "मा तमो मा" इत्यादिमन्त्रेणाभिनिदध्यात्। मन्त्रस्य चायमर्थः—हेऽग्ने स्कन्नाङ्गार त्वं मा तमो ग्लानिं मा प्राप्नुहि यज्ञोऽपि मा तमत्, ग्लानिं मा प्राप्नोति। यजमानोऽपि मा तमत्। आयते पुनः स्वस्थानं प्रत्यागच्छते ते तुभ्यं नमोऽस्तु। हे रुद्र परायते परतो गच्छते तुभ्यं नमोऽस्तु। अथ यत्र स्थाने गत्वा निषीदसि तस्मै च स्थानाय नमोऽस्तु। पूर्वादिदिक्षु मध्ये येन दिग्भागेनायमङ्गारः स्कन्देत्तस्मिन्दिग्भागे पूर्वप्रोक्तस्याध्वर्युयजमानादेर्नाम गृहीत्वा मा हिंसीरित्येवं प्रार्थयेत। अमुं मा हिंसीरिति द्विरुक्तिः सर्वसंग्रहार्था। तद्विवरणं त्वापस्तम्बेन प्रपञ्चितम्—"अध्वर्युं मा हिꣳसीर्यजमानं मा हिꣳसीरिति यदि पुरस्ताद्ब्रह्माणं मा हिꣳसीर्यजमानं मा हिꣳसीरिति यदि दक्षिणतो होतारं मा हिꣳसीः पत्नीं मा हिꣳसीर्यजमानं मा हिꣳसीरिति यदि पश्चादाग्नीध्रं मा हिꣳसीः पशून्मा हिꣳसीर्यजमानं मा हिꣳसीरिति यद्युत्तरतः" इति। अनेन प्रकारेणाङ्गारस्योपरि स्रुवमूलमाक्रमय्य तत ऊर्ध्वं सहस्रशृङ्ग इति मन्त्रेण तमङ्गारं पुनरप्यग्नौ प्रहरेत्। मन्त्रस्यायमर्थः—सहस्रशृङ्गो बहुज्वालो वृषभः कामानां वर्षिता जातवेदा जातानां वेदिता स्तोमपृष्ठः स्तोमैस्त्रिवृदादिभिः साध्यस्तोत्रो घृतवान्प्रशस्तेन बहुना घृतेन युक्तः सुप्रतीकः शोभनमुखस्तादृशो भवान्मेथितोऽस्माभिरेकीभूतः सन्नोऽस्मान्मा हासीन्मा परित्यजतु। वयमपि त्वां तथा वर्तमानं नेज्जहाम नैव परित्यजाम। किंच गवादिपुष्टिं पुत्रादिपुष्टिं च नोऽस्मभ्यं प्रयच्छ। एवं सति ब्रह्मणैवानेन मन्त्राभिमानिना देवेनैवैनमग्निमायतने प्रक्षिपति। इयमेवोक्तिर्दोषस्य प्रायश्चित्तिः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः

---

द्वितीयेऽग्निहोत्रादिप्रायश्चित्तान्युक्तानि । तृतीये मुख्याग्न्यसंभवे सत्यनुकल्पा होमाधारा उच्यन्ते । यदुक्तं सूत्रकारेण—" यदि कालसंनिकर्षेऽग्निर्मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य जुहुयादथात्वरमाणः पुनर्मन्थेद्यद्यन्यं न विन्देदजाया दक्षिणे कर्णे होतव्यमजस्य तु ततो नाश्नीयात् " इत्यादि । तत्र प्रथममनुकल्पं विधत्ते—

वि वा एष इन्द्रियेण वीर्येणर्ध्यते । यस्याऽऽहिताग्नेरग्निर्मथ्यमानो न जायते । यत्रान्यं पश्येत् । तत आहृत्य होतव्यम् । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति, इति ।

यस्य यजमानस्यारणिसमारूढो विनष्टो वाऽग्निः प्रत्यासन्ने होमकाले निर्मथ्यमानोऽपि सहसा न जायत एष यजमान इन्द्रियपाटवेन शरीरसामर्थ्येन च वियुक्तो भवति । तस्य होमकालातिपातो मा भूदिति लौकिकं कंचिदग्निमानयाग्निहोत्रे हुते सति शास्त्रीयाग्नावेव हुतं भवति । ततः पुनरग्निसिद्ध्यर्थं मन्थनं कुर्यात् ।

अथाऽऽहर्तव्यस्याप्यग्नेरसंभवे पक्षान्तरं विधत्ते—

यद्यन्यं न विन्देत् । अजायाꣳ होतव्यम् । आग्नेयी वा एषा । यदजा । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति (१), इति ।

यदा लौकिकोऽग्निरपि न लभ्येत तदानीमजामानीयाऽऽहवनीयस्थाने स्थापयित्वा तदीये दक्षिणे कर्णे जुहुयात् । अग्नेरजायाश्च सृष्टिकाले प्रजापतिमुखे समुद्भूतत्वात्परस्परसंबन्धः । अग्नावित्यादि पूर्ववत्

अजाकर्णे हुतवतः कंचिन्नियमं विधत्ते—

अजस्य तु नाश्नीयात् । यदजस्याश्नी-

---

१ क. °र्ध्य त°।

यात् । यामेवाग्नावाहुतिं जुहुयात् । तामद्यात् । तस्मादजस्य नाऽऽश्यम्, इति ।

अजासंबन्धि यत्क्षीरादिकं तदयं नाश्नीयात् । तद्भक्षणे त्वाहुतिरेव भक्षिता स्यात् । तस्मान्न भक्षेत् ।

अजाया अप्यलाभे पक्षान्तरमत्र विधत्ते—

यद्यजां न विन्देत् । ब्राह्मणस्य दक्षिणे हस्ते होतव्यम् । एष वा अग्निर्वैश्वानरः। यद्ब्राह्मणः । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति (१) । ब्राह्मणं तु वसत्यं नापरुन्ध्यात् । यद्ब्राह्मणं वसत्या अपरुन्ध्यात् । यस्मिन्नेवाग्नावाहुतिं जुहुयात् । तं भागधेयेन व्यर्धयेत् । तस्माद्ब्राह्मणो वसत्यं नापरुध्यः, इति ।

वैश्वानरनामकस्याग्नेर्ब्राह्मणजात्यभिमानिदेवतात्वाद्ब्राह्मणस्य तद्रूपत्वम् । तद्धस्ते हुतवान्पुरुषः स्वगृहे निवासार्थमागतं ब्राह्मणं न परिहरेत् । तत्परिहारे स्वकीयमग्निं भागरहितं कुर्यात् । तस्माद्ब्राह्मणो वासाय नापरुध्यः।

अथ ब्राह्मणस्याप्यलाभे पक्षान्तरं विधत्ते—

यदि ब्राह्मणं न विन्देत् । दर्भस्तम्बे होतव्यम् । अग्निवान्वै दर्भस्तम्बः । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति । दर्भाꣳस्तु नाध्यासीत (२) । यद्दर्भानध्यासीत । यामेवाग्नावाहुतिं जुहुयात् । तामध्यासीत । तस्माद्दर्भा नाध्यासितव्याः, इति ।

पुनराधानब्राह्मणे दर्भैरादधीत इत्येवमग्न्याधानसाधनत्वेन दर्भाणां श्रुतत्वाद्दर्भस्तम्बस्याग्नियुक्तत्वम्। तत्र होता दर्भाणामुपरि न वसेत्।

अथ दर्भाणामप्यलाभे पक्षान्तरं विधत्ते—

यदि दर्भान्न विन्देत्। अप्सु होतव्यम्। आपो वै सर्वा देवताः। देवतास्वेवास्याग्निहोत्रꣳ हुतं भवति। आपस्तु न परिचक्षीत। यदापः परिचक्षीत (४)। यामेवाप्साहुतिं जुहुयात्। तां परिचक्षीत। तस्मादापो न परिचक्ष्याः, इति।

अन्यत्र—"ते देवा अग्नौ तनूः संन्यदधत" इत्यभिधानादग्निः सर्वदेवतात्मकः। स चाग्निरप्सु प्रविष्टः—"स निलायत सोऽपः प्राविशत्" इति श्रुतेः। तस्मादपां सर्वदेवतारूपत्वम्। अप्सु होता कदाचिदप्यपो न निन्देत्। अजस्य तु नाश्नीयादित्यादिनोक्ता व्रतविशेषाः सांवत्सरिकाः। तथा चाऽऽहाऽऽपस्तम्बः—"सांवत्सरिकाण्येतानि व्रतानीत्याश्मरथ्यो यावज्जीवमित्यालेखनः" इति।

तदेवं मुख्याग्न्यसंभवेऽनुकल्पपरम्पराऽभिहिता। अथ यदुक्तं सूत्रकारेण—"अग्नये विविचयेऽष्टाकपालं यस्याऽऽहिताग्नेरन्यैरग्निभिरग्नयः सꣳसृजेरन्मिथो वा" इति। तदिदं विधत्ते—

मेध्या च वा एतस्यामेध्या च तनुवौ सꣳसृज्येते। यस्याऽऽहिताग्नेरन्यैरग्निभिरग्नयः सꣳसृज्यन्ते। अग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत्। मेध्यां चैवास्यामेध्यां च तनुवौ व्यावर्तयति, इति।

आहिताग्नेर्यस्य यजमानस्य स्वकीया अग्नयोऽन्यदीयैः श्रौतस्मार्तलौकिकाग्निभिः संसृज्येरन्। एतस्य यजमानस्य मेध्यामेध्यतनुवौ संसृष्टे भवतः। स्वकीयाः श्रौताग्नयो यागयोग्यत्वान्मेध्या तनूः। अग्न्यन्तरममेध्या तनूः। तदुभयं योऽग्निर्विविनक्ति सोऽयं विविचिस्तस्मै हविर्निर्वापे सत्यसौ तनूद्वयं परस्परं व्यावृत्तं करोति।

अथ पूर्वोक्तसंवत्सरव्रतधारणयोर्विशेषः सूत्रकारेणोक्तः—"संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्" इति। तदिदं विधत्ते—

अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्।
अग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति।
स एवैनं व्रतमालम्भयति (५), इति।

अजस्य तु नाश्नीयादित्यादीनां व्रतानां पालको व्रतपतिः। तथाविधायाग्नये पुरोडाशनिर्वापे सति तमग्निं स्वोचितेन भागेन परितोषयति। स च तुष्ट एनं यजमानं व्रतसंपूर्तियुक्तं करोति।

"अथ गर्भꣳ स्रवन्तमित्यारभ्याग्निहोत्रस्थालीं श्रवन्तीमभिमन्त्र्य" इति सूत्रकारेण यदुक्तं तमभिमेत्याऽऽह—

गर्भꣳ स्रवन्तमगदमकः। अग्निरिन्द्रस्त्वष्टा बृहस्पतिः। पृथिव्यामवचुश्चोतैतत्। नाभिप्राप्नोति निर्ऋतिं पराचैः। रेतो वा एतद्वाजिनमाहिताग्नेः। यदग्निहोत्रम्। तद्यत्स्रवेत्। रेतोऽस्य वाजिनꣳ स्रवेत। गर्भꣳ स्रवन्तमगदमकरित्याह। रेत एवास्मिन्वाजिनं दधाति (६), इति।

अत्र गर्भमित्यारभ्य पराचैरित्यन्तो मन्त्रः। तस्यायमर्थः—अग्निहोत्रस्थाल्यां हविर्लक्षणो यो गर्भो वर्तते स यदि स्थालीभङ्गे सति तच्छिद्रेण स्रवेत्तदानीमग्नीन्द्रादिदेवसंघस्तं गर्भमगदं स्रवणरूपरोगरहितमकः करोतु। एतदग्निहोत्रहविः पृथिव्यामवचुश्चोत गलितमासीत्। तदिदं गलितं हविर्निर्ऋतिं पापदेवतां पराचैः पराङ्मुखीभूत्वा(य) नाभिप्राप्नोत्याभिमुख्येन तद्धविर्नाऽऽप्नोत्विति। यद्यप्यनेन मन्त्रेण स्थालीमभिमन्त्रयेदिति विधिः साक्षान्न श्रुतस्तथाऽपि मन्त्रलिङ्गं शाखान्तरं च पर्यालोच्य सूत्रकारेण विधिरुन्नीतः। तस्मिन्मन्त्रे प्रथमपादस्य तात्पर्यं रेतो वा इत्यादिनोच्यते। अग्निहोत्राख्यं हविर्यदस्ति तदेतदाहिताग्ने रेतो वाजिनं भोज्यान्नस्थानीयं च। अतो हविः-

स्रवणेन तस्योभयस्य स्रवणं भवति । ततो मन्त्रस्य प्रथमपादे—"स्रवन्तमगदमकः" इत्युक्त्वा( क्त्या )यजमाने रेतो वाजिनं चेत्युभयमपि स्थापितं भवति ।

द्वितीयपादगतानामग्निरित्यादीनां चतुर्णां पदानां क्रमेण तात्पर्यं दर्शयति—

अग्निरित्याह। अग्निर्वै रेतोधाः । रेत एव तद्दधाति । इन्द्र इत्याह। इन्द्रियमेवास्मिन्दधाति । त्वष्टेत्याह । त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत् । रूपमेव पशुषु दधाति । बृहस्पतिरित्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवास्मै प्रजाः प्रजनयति, इति ।

जाठराग्निर्वै रेतः पक्वं कृत्वा गर्भरूपेण धारयत्यतो रेतोधाः । इन्द्रो हीन्द्रियस्याधिष्ठाता । त्वष्टा च रूपनिर्माता । बृहस्पतिश्च ब्रह्मरूपत्वात्प्रजोत्पादकः ।

तृतीयपादस्य तात्पर्यं दर्शयति—

पृथिव्यामवचुश्चोतैतदित्याह । अस्यामेवैनत्प्रतिष्ठापयति, इति ।

भूम्यां गलितमित्युक्त्वा तद्धविर्भूमौ प्रतिष्ठितं करोति ।

चतुर्थपादस्य तात्पर्यं दर्शयति—

नाभिप्राप्नोति निर्ऋतिं पराचैरित्याह । रक्षसामपहत्यै ( ७ ), इति ।

अजाग्नावेवास्याग्निहोत्रꣳ हुतं भवति भवत्यासीत परिचक्षीत लम्भयति दधाति देवानां बृहस्पतिः पञ्च च ।

वि वै यद्यन्यमजायां ब्राह्मणस्य दर्भस्तम्बेऽप्सु होतव्यम् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

१ क. ख. °ग्निर्हि रे°।

निर्ऋतेरप्राप्तिकथनेन सर्वाण्यपि रक्षांस्यपहतानि भवन्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

तृतीये श्रौताग्निप्रतिनिधौ लौकिकोऽग्न्यजादयः केचित्प्रायश्चित्तविशेषाश्चोक्ताः । चतुर्थपञ्चमषष्ठानुवाकैरैष्टिकयाजमानमन्त्रा उच्यन्ते । अनुवाकभेदस्त्वध्ययनसंप्रदायप्राप्तः । तत्र चतुर्थानुवाके "याः पुरस्तात्" इति यो मन्त्रस्तस्य विनियोगमापस्तम्ब आह—"प्रणीताः प्रणीयमाना अनुमन्त्रयते" इति । पाठस्तु—

याः पुरस्तात्प्रस्रवन्ति । उपरिष्टात्सर्वतश्च याः ।

ताभी रश्मिपवित्राभिः । श्रद्धां यज्ञमारभे, इति ।

या आपः पूर्वस्यां दिशि प्रवहन्ति याश्चोपरिष्टाद्याश्च सर्वास्वपि दिक्षु प्रवहन्ति । रश्मिपवित्राभिः सूर्यरश्मय एव पवित्रं शुद्धिकारणं यासां तास्तादृशीभिः । अत एवोत्पवनमन्त्रे समाम्नायते—"देवो वः सवितोत्पुनात्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इति । ताभिरद्भिरहं श्रद्धां प्राप्य यज्ञं प्रारब्धं करोमि ।

"देवा गातुविदः" इत्यन्वाधानोपक्रमे जपेत् । पाठस्तु—

देवा गातुविदः । गातुं यज्ञाय

विन्दत । मनसस्पतिना देवेन ।

वाताद्यज्ञः प्रयुज्यताम्, इति ।

गातुर्मार्गस्तं विदन्तीति गातुविदस्तादृशा हे देवा यूयं यज्ञानुष्ठानार्थं गातुं विन्दत मार्गं लभध्वम् । सोऽयं यज्ञो मनसस्पतिनाऽस्मदीयमनःपालकेन देवेन परमेश्वरेण वाताद्वायोः सकाशात्प्रयुज्यतां प्रेर्यताम् । अनुष्ठानस्य क्रियारूपस्य चलनहेतुर्वायुः कारणम् ।

---

१ क. °िनधयो लौ° । २ क °कारन्याद° । ३ क ख. °वाकैष्टि° ।

" तृतीयस्यै " इत्यनेन मन्त्रेण पलाशशाखाछेदने यः शकलो भूमौ पतितस्तमाददीत । पाठस्तु—

तृतीयस्यै दिवः । गायत्रिया सोम आभृतः (१) । सोमपीथाय संनयितुम् । वल्कलमन्तरमाददे, इति ।

पृथिवीमारभ्य गणनायां येयं तृतीयलोकरूपा द्यौस्तस्या दिवः सकाशाद्गायत्रीछन्दोदेवतया सोमो वल्ल्यात्मक आभृतः समानीतः । सोमपीथाय दिवः साकाशादानीतस्य सोमस्य पानाय संनयितुं सांनाय्यं कर्तुमन्तरं वकलं पलाशशाखाया अभ्यन्तरं यच्छकलं तदाददे स्वी करोमि । अयमर्थः—पर्णवल्कैरातञ्चनं कृत्वा तेन निष्पन्नेन दध्ना सांनाय्येन हुत्वा तच्छेषे भक्षिते सोमःपीतो भवति । दध्नो मन्त्रेण सोमीकरणात् । तथा चाऽऽतञ्चनमन्त्रब्राह्मणे समाम्नातम्—" सोमेन त्वाऽऽतनच्मीन्द्राय दधीत्याह । सोममेवैनत्करोति " इति ।

आपो देवीरिति सांनाय्यपात्राणि प्रोक्ष्यमाणान्यभिमन्त्रयेत् । पाठस्तु—

आपो देवीः शुद्धाः स्थ । इमा पात्राणि शुन्धत । उपातङ्क्याय देवानाम । पर्णवल्कमुत शुन्धत, इति ।

देवीर्द्योतनात्मिका हे आपो यूयं स्वत एव शुद्धाः स्थ । तस्मादिमानि सांनाय्यपात्राणि शोधयत । ततो देवानां संबन्धि यदुपातङ्क्यमातञ्चनं तदर्थं पर्णवल्कं नूतनपलाशशकलमपि शुन्धत शोधयत ।

अथाऽऽतञ्चनमन्त्रमाह—

पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पय इन्द्राय हविषे ध्रियस्व । गायत्री पर्णवल्केन । पयः सोमं करोत्विमम् (२), इति ।

अस्मदीयेषु गृहेषु यत्पयो विद्यते यच्च पयो गोषु स्थितं यदपि पयो वत्सेषु

पीतमविनष्टं तथाविध हे पय इन्द्राय हविष इन्द्रसंबन्धिहविरर्थं ध्रियस्व धृतं भव। गायत्री देवी पर्णवल्केनाऽऽतञ्चनार्थं निक्षिप्यमाणेन पात्रस्थं पय इमं सोमं करोतु।

अथाऽऽहवनीयेऽन्वाधीयमाने जप्यं मन्त्रत्रयम्। तत्र प्रथममाह–

अग्निं गृह्णामि सुरथं यो मयोभूः। य उद्यन्त-
मारोहति सूर्यमह्ने। आदित्यं ज्योतिषां ज्योति-
रुत्तमम्। श्वो यज्ञाय रमतां देवताभ्यः, इति।

योऽग्निर्मयोभूः सुखस्य भावयिता योऽग्निरह्नेऽहःसिद्ध्यर्थमुद्यन्तं सूर्यमारोहति। तथा चाग्निहोत्रब्राह्मणे पठ्यते–"उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति" इति। कीदृशं सूर्यमादित्यमदितेः पुत्रं ज्योतिषां चन्द्रादीनां मध्य उत्तमं ज्योतिरधिकज्योतिःस्वरूपमीदृशं सूर्यं योऽग्निः समारोहति तादृशमग्निं सुरथं शोभनरथयुक्तं गृह्णामि स्वी करोमि। ततो गृहीतोऽयमग्निः श्वः परेद्युर्देवताभ्यो देवता आराधयितुं यज्ञाय यज्ञनिष्पत्तये रमतामस्मद्गृहे क्रीडतु।

अथ द्वितीयमाह–

वसून्रुद्रानादित्यान्। इन्द्रेण सह
देवताः। ताः पूर्वः परिगृह्णामि।
स्व आयतने मनीषया, इति।

वस्वादीनन्यांश्च देवता इन्द्रेण सहितास्ताः सर्वाः पूर्व इतरयजमानेभ्यः प्रथमभूतोऽहं स्व आयतने स्वकीयस्थाने मनीषया प्रज्ञया परिगृह्णामि।

अथ तृतीयमाह–

इमामूर्जं पञ्चदशीं ये प्रविष्टाः। तान्देवान्परि-
गृह्णामि पूर्वः (३)। अग्निर्हव्यवाडिह तानाव-
हतु। पौर्णमासꣳ हविरिदमेषां मयि। आमा-
वास्यꣳ हविरिदमेषां मयि, इति।

१ क. ख. पतिं सदवतिष्ठत्तथा°. २ क. ख. देवादीनां।

इमां वर्तमानामूर्जमन्नहेतुं पञ्चदशीं शुक्लपक्षस्य कृष्णपक्षस्य वा पञ्चदशसंख्यापूरणीं तिथिं ये देवाः प्रविष्टास्तान्देवानहमितरयजमानेभ्यः पूर्वभावी सन्परिगृह्णामि । हव्यवाडयमग्निरिह कर्मणि तान्देवानिहाऽऽवहतु । एषां देवानां संबन्धि पौर्णमास्यां प्रयोक्तव्यमिदं हविर्मयि वर्तताम् । तथाऽमावास्यां[यां]प्रयोक्तव्यमेषां देवानामिदं हविर्मयि वर्तताम् । इदं च मन्त्रभागद्वयं य( त )योस्तिथ्योर्व्यवस्थया पठनीयम् ।

अथाऽऽहवनीयगार्हपत्ययोर्मध्ये स्थित्वा जप्यं मन्त्रमाह—

अन्तराऽग्नी पशवः । देवसꣳसद्-
मागमन् । तान्पूर्वः परिगृह्णामि ।
स्व आयतने मनीषया, इति ।

अग्नी अन्तराऽनयोरग्न्योर्मध्ये येयं देवसंसद्देवानां स्थानं तदुद्दिश्य पशवः सर्वे समागमन् । तस्मात्तत्रस्थान्देवान्पूर्वः परिगृह्णामीत्यादि पूर्ववद्व्याख्येयम् ।

अथ गार्हपत्येऽन्वाधीयमाने जप्यं मन्त्रद्वयम् । तत्र प्रथममाह—

इह प्रजा विश्वरूपा रमन्ताम् । अग्निं गृह-
पतिमभिसंवसानाः । ताः पूर्वः परिगृह्णामि
( ४ ) । स्व आयतने मनीषया, इति ।

गृहपतिं गृहस्य पालकमिमं गार्हपत्याग्निमभिसंवसाना अभितः सम्यगाच्छाद्य वर्तमाना विश्वरूपा बहुविधाः पुत्रपौत्रभृत्यादिरूपाः प्रजा इहास्मिन्स्थाने रमन्तां क्रीडन्तु । अतस्तत्र स्थितास्ताः सर्वा देवताः पूर्वः परिगृह्णामीत्यादि पूर्ववत् ।

अथ द्वितीयमाह—

इह पशवो विश्वरूपा रमन्ताम् । अग्निं
गृहपतिमभिसंवसानाः । तान्पूर्वः परिगृ-
ह्णामि । स्व आयतने मनीषया, इति ।

पशवो गवाश्वादयः । अन्यत्पूर्ववत् ।

अथ दक्षिणाग्नावन्वाधीयमाने जप्यं मन्त्रमाह––

अयं पितॄणामग्निः । अवाड्ढव्या
पितृभ्य आ । तं पूर्वः परिगृह्णामि ।
अविषं नः पितुं करतु, इति ।

अयं दक्षिणस्यां दिशि वर्तमानः पितॄणां संबन्धी वह्निः पितृभ्यः पित्रर्थमा समन्ताद्धव्या हवींष्यवाड्वहतु । तं दक्षिणाग्निमितरेभ्यः पूर्वभावी सन्नहं परिगृह्णामि । सोऽग्निर्नोऽस्मदीयं पितुमन्नमविषं करद्विषरहितं करोतु ।

अथ सभ्याग्नेरुपस्थानमन्त्रमाह––

अजस्रं त्वाᳪं सभापालाः (५) । विजयभागᳪं समिन्धताम् । अग्ने दीदाय मे सभ्य ।
विजित्यै शरदः शतम्, इति ।

यत्राक्षैर्दीव्यन्ति विजयन्ते सा सभा तस्यां सभायां साधुः सोऽग्निः सभ्यः । हे सभ्य त्वामस्मदीयाः सभापालकाः समिन्धतां सम्यग्दीप्यन्ताम् । कीदृशं त्वामजस्रमनवरतं विजयभागं विजयेन लभ्यो भागो यस्य तादृशम् । हे सभ्याग्ने मे मम शतं शरदः शतसंख्याकान्संवत्सरान्विजित्यै विजयाय त्वं दीदाय दीप्यस्व ।

अथाऽऽवसथ्योपस्थानमन्त्रमाह––

अन्नमावसथीयम् । अभिहराणि
शरदः शतम् । आवसथे श्रियं
मन्त्रम् । अहिर्बुध्नियो नियच्छतु, इति ।

अह्नि द्यूते विजयं प्राप्ताः पुरुषा आगत्य यत्र भोजनार्थं निवसन्ति स प्रदेश आवसथस्तत्राऽऽनीतमावसथीयं, तादृशमन्नमभिहराण्याभिमुख्येनोपहरामि । कंचिदपि न हिनस्तीत्यहिः । बुध्ने मूले जगदादौ भवो बुध्नियः । आहिर्बुध्निय इत्येतन्नामकः पञ्चमोऽग्निः शतं शरदः शतसंख्याकान्संवत्सरानावसथेऽस्मदीये गृहे श्रियं धनादिसमृद्धिं मन्त्रमृगादिसमृद्धिं च नियच्छतु ददातु ।

---

१ ग. येन ।

अथ पञ्चस्वप्यग्निष्वन्वाहितेषु जप्यं मन्त्रमाह—

इदमहमग्निज्येष्ठेभ्यः । वसुभ्यो यज्ञं प्रब्र-
वीमि । इदमहमिन्द्रज्येष्ठेभ्यः (६) ।
रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठे-
भ्यः। आदित्येभ्यो यज्ञं प्रब्रवीमि, इति ।

अग्निर्ज्येष्ठो मुख्यो येषु ते वसवोऽग्निज्येष्ठास्तदर्थमस्मदीयं यज्ञमिदं प्रब्रवीमी-दानीमेव भवदीयोऽयं यज्ञ इति कथयामि । एवं रुद्रादित्यवाक्ययोरपि योजनीयः ।

कल्पः—'पयस्वतीरोषधय इति पुरा बर्हिष आहर्तोर्जायापती अश्नीतः' इति । पाठस्तु—

पयस्वतीरोषधयः । पयस्वद्वीरुधां पयः । अपां
पयसो यत्पयः । तेन मामिन्द्र सꣳसृज, इति ।

सारवाची पयःशब्दः । ओषधयः पयस्वत्यः सारवत्यः । वीरुधां लतानां संबन्धि यत्पयो निर्गतं क्षीरं तदपि पयस्वत्सारवत् । अपां मध्ये यत्पयः सारं यच्च पयसो गवादिक्षीरस्य पयः सारं तेन सारेण सर्वेण हे इन्द्र मां संसृज योजय ।

अथ व्रतोपायनमन्त्रानाह—

अग्ने व्रतपते व्रतं चरिष्यामि । तच्छकेयं
तन्मे राध्यताम् । वायो व्रतपत आदित्य
व्रतपते (७)। व्रतानां व्रतपते व्रतं चरि-
ष्यामि । तच्छकेयं तन्मे राध्यताम्, इति ।

व्रतस्यानुष्ठेयस्य कर्मणः पालको व्रतपतिस्तादृश हेऽग्ने व्रतमिदमहं चरिष्यामि। त्वदनुग्रहेण तद्व्रतं कर्तुमहं शकेयं शक्तो भूयासम् । तद्व्रतं मे मदर्थं राध्यतां समृद्धं भवतु । वाय्वादित्यमन्त्रयोरपि व्रतं चरिष्यामीत्यादिकमनुषञ्जनीयम् ।

---

१ क 'मेवास्मदी' । २ क 'यो वर्हीषाते ।

अग्निवाय्वादित्येभ्यो व्यतिरिक्तोऽपि यः कश्चिद्देवो व्रतानां सर्वेषां मध्ये विशेषेणास्मदीयस्य व्रतस्य पालकस्तद्विषयश्चतुर्थो मन्त्रः। 'अग्ने व्रतपते' इत्येक एव मन्त्रो ब्राह्मणस्येत्येकः पक्षः। तदनुसारेण 'मम नाम प्रथमम्' इत्यनुवाके स मन्त्र आम्नातः। चत्वारोऽप्येते मन्त्रा ब्राह्मणस्येत्यपरः पक्षः। तथा च सूत्रकार आह—'सर्वान्ब्राह्मणः' इति। एतदनुसारेणाऽऽद्यमन्त्रस्यात्र पुनः पाठः।

अथ वत्सापाकरणहेतोः पलाशशाखाया आहरणमन्त्रमाह—

इमां प्राचीमुदीचीम्। इषमूर्जमभि सꣳस्कृताम्।
बहुपर्णामशुष्काग्राम्। हरामि पशुपामहम्, इति।

इमां पलाशशाखामहं हरामि गृहे प्रापयामि। कीदृशीं प्राचीं प्राच्यां दिशि प्रसृताम्। उदीचीमुत्तरस्यां प्रसृतां वा। इषमन्नमूर्जं क्षीरादिरसं चाभि संस्कृताम्, "इषे त्वोर्जे त्वा" इतिमन्त्रपूर्वकच्छेदनेन संपादिताम्। बहुपर्णत्वमशुष्काग्रत्वं च प्रसिद्धम्। पशुपां पशूनां वत्सानां च पालयित्रीम्। आर्द्रत्वात्पर्णबहुत्वाच्च ताडने वेदनाभावः पालनम्।

अथ प्रसारिते शुल्बे द्वाविध्मसंभरणमन्त्रौ। तयोः प्रथमं मन्त्रमाह—

यत्कृष्णो रूपं कृत्वा। प्राविशस्त्वं
वनस्पतीन्। ततस्त्वामेकविꣳशतिधा।
संभरामि सुसंभृता (८), इति।

हेऽग्ने त्वं यद्यस्मात्कारणात्कृष्णमृगो भूत्वा तदीयं रूपं कृत्वा वनस्पतीन्प्राविशः प्रविष्टवानासि। तथा च ब्राह्मण आम्नायते—"अग्निर्देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। स वनस्पतीन्प्राविशत्" इति। ततस्तस्मात्कारणाद्वनस्पतिषु प्रविष्टं त्वामेकविंशतिधा पञ्चदश सामिधेनीकाष्ठानि त्रयः परिधयो द्वे आघारसमिधावनूयाजसमिदेकेत्येकविंशतिप्रकारम्। सुसंभृता सष्ठु भरणसमर्थेन शुल्बेन संभरामि संभूय धारयामि।

अथ द्वितीयमाह—

त्रीन्परिधीꣳस्तिस्रः समिधः। यज्ञा-
युरनुसंचरान्। उपवेषं मेक्षणं

धृष्टिम् । संभरामि सुसंभृता, इति ।

य एते त्रयः परिधयो ये चाऽऽघारसमिधावेकाऽनूयाजसमिदिति त्रयः समिद्विशेषाः । एते षडपि यज्ञस्याऽऽयुरनुसंचरन्ति । उपवेषोऽङ्गाराणामुदीच्यां दिशि निरूहणहेतुः । मेक्षणं चरोरुपधानसाधनम् । धृष्टिरङ्गाराणां प्रत्यङ्गनिरूहणसाधनम् । एतत्सर्वं सुसंभृता संभरामि ।

अथ परिस्तरणार्थानां दर्भाणां छेदनाय शस्त्रसंयोजनमन्त्रमाह—

या जाता ओषधयः । देवेभ्यस्त्रि-
युगं पुरा । तासां पर्व राध्या-
सम् । परिस्तरमाहरन्, इति ।

युगशब्देन कालविशेषा लक्ष्यन्ते । ते च कालविशेषास्त्रिविधा वर्षाशरद्वसन्तात्मकाः । त्रियुगं यथोक्तकालं देवेभ्यो देवार्थं पुरा सृष्टयादौ या ओषधयो जाताः । एतदेवाभिप्रेत्याऽऽग्रयणप्रकरणे सूत्रकारेणोक्तम्—“ वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैः ” इति । तासामोषधीनामहं पर्व च्छेदनयोग्यं संधिस्थानं राध्यासं साधयिष्यामि । किं कुर्वन्परिस्तरमाहरन्परिस्तरणसाधनहेतुं दर्भमानयन् ।

अथ च्छेदनमन्त्रमाह—

अपां मेध्यं यज्ञियम् । सदेवꣳ शिव-
मस्तु मे (१) । आच्छेत्ता वो मा
रिषम् । जीवानि शरदः शतम्, इति ।

अपां संबन्धि मेध्यं शुद्धमत एव यज्ञियं यज्ञयोग्यं सदेवं देवैः सहितं देवानां परिस्तरणयोग्यं तादृशं यत्सारमस्ति तन्मे मम शिवमस्तु । तच्चापां सारं दर्भरूपम् । तथा चान्यत्रापः प्रकृत्याऽऽम्नायते— तासां यन्मेध्यं यज्ञियं सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभवन् ” इति । तादृशा हे दर्भा वो युष्माकमाच्छेत्ताऽप्यहं मारिषं हिंसितो मा भूवं किंतु शतं शरदः संवत्सराञ्जीवानि ।

अथ संनहनमन्त्रमाह—

अपरिमितानां परिमिताः । संनह्ये सुकृ-

ताय कम्। एनो मा निगां कतमच्च-
नाहम्। पुनरुत्थाय बहुला भवन्तु, इति।

अपरिमिता अनन्ता ये दर्भास्तेषां मध्ये परिमिताः कतिपये दर्भा मया गृहीता न तु सर्वे। ततः संतानविच्छेदं न करोमि। सुकृताय शोभनाय कर्मणे तान्दर्भानहं कं सुखं यथा भवति तथा संनह्ये बध्नामि। कतमच्चन किंचिदपि स्वल्पमप्येनः पापं मा निगां नितरामहं मा प्राप्नवानि। पापाभावे हेतुः—एते दर्भाः पुनरुत्थाय भूयोऽप्याच्छेदनस्थानादुत्पद्य बहुलाः प्रभूता भवन्तु। अत आच्छेदनं दर्भाणां हितमेव।

अथ पिण्डपितृयज्ञे बर्हिरास्तरणमन्त्रमाह—

सकृदाच्छिन्नं बर्हिरूर्णामृदु। स्योनं पितृभ्यस्त्वा भराम्यहम्। अस्मिन्त्सीदन्तु मे
पितरः सोम्याः। पितामहाः प्रपितामहाश्चानुगैः सह (१०), इति।

सकृदाच्छिन्नमेकवारमेव लूनं यद्बर्हिरूर्णामृदु तूलवन्मृदुस्पर्शं स्योनं सुखकरमस्ति। हे बर्हिस्तादृशं त्वां पितृभ्यः पित्रर्थमहं भरामि संस्तृणामि। अस्मिन्नास्तीर्णे बर्हिषि सोम्याः सोमार्हा मे पितरः पितामहाः प्रपितामहाश्चानुगैः स्वकीयैर्भृत्यैः सह सीदन्तु निवसन्तु।

अथ शाखापवित्रस्य क्रियमाणस्यानुमन्त्रणार्थौ द्वौ मन्त्रौ। तत्र प्रथममाह—

त्रिवृत्पलाशे दर्भः। इयान्प्रादेशसंमितः। यज्ञे पवित्रं पोतृतमम्।
पयो हव्यं करोतु मे, इति।

पलाशे पलाशशाखाविशेषे दर्भः पवित्ररूप आश्रित इति शेषः। कीदृशो दर्भस्त्रिवृत्त्रिगुणः। तद्दर्भस्य परिमाणमियानित्यभिनीय प्रदर्श्यते। प्रादेशसंमित इति वचनेनापि स्पष्टी क्रियते। सोऽयं दर्भो मे ममास्मिन्यज्ञे पयोऽस्माभिः

१ क. निरन्तरम°। २ क. त्रिरावृत्तः। त°।

संपाद्यमानं क्षीरं हव्यं होमयोग्यं करोतु । कीदृशं पयः पवित्रं स्वयंशुद्धं पोतृत-ममस्माकमतिशयेन शोधकम् ।

अथ द्वितीयमाह—

इमौ प्राणापानौ । यज्ञस्याङ्गानि
सर्वशः । आप्याययन्तौ संचर-
ताम् । पवित्रे हव्यशोधने, इति ।

हव्यशोधने हविषां शोधके द्वे पवित्रे दर्भरूपे तद्रूपाविमावस्मदीयौ प्राणा-पानौ यज्ञस्य सर्वशोऽङ्गानि सर्वानप्यवयवानाप्याययन्तौ वर्धयन्तौ संचरताम् ।

अथ पवित्रकरणमन्त्रमाह—

पवित्रे स्थो वैष्णवी । वायुर्वो
मनसा पुनातु ( ११ ), इति ।

हे पवित्रे शुद्धिहेतू युवां वैष्णवी स्थो यज्ञात्मकस्य विष्णोः संबन्धिनी स्थः। वायुर्देवो युवां मनसा स्मरणमात्रेण पुनातु शोधयतु ।

अथ प्रस्तरे पवित्रसंसर्जनमन्त्रमाह—

अयं प्राणश्चापानश्च । यजमानमपिगच्छताम् ।
यज्ञे ह्यभूतां पोतारौ । पवित्रे हव्यशोधने, इति ।

अयं दर्भरूपः प्राणश्चापानश्चेत्युभौ यजमानं प्रस्तररूपमपिगच्छतामनुप्रविश्य वर्तेताम् । हि यस्मादेतौ यज्ञे पोतारौ शोधकावप्यभूतां तस्मादिमे पवित्रे । हव्य-शोधने सर्वस्यापि हविषः शोधके ।

अथ दर्भमयस्य वेदस्य निष्पादनमन्त्रमाह—

त्वया वेदिं विविदुः पृथिवीम् । त्वया
यज्ञो जायते विश्वदानिः । अच्छिद्रं
यज्ञमन्वेषि विद्वान् । त्वया होता संत-
नोत्यर्धमासान्, इति ।

हे वेद निष्पाद्यमान त्वया सहायभूतेन सर्वे देवाः पृथिवीं विस्तीर्णां भूम्या-

त्मिकां वा वेदिं विविदुर्लब्धवन्तः । अत एव ब्राह्मणमाम्नायते—"वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्" इति । असुरवित्तं चेयं भूमिः । तथा चान्यत्राऽऽम्नातम्—"असुराणां वा इयमग्र आसीत्" इति । "भूमिरेव वेदिः सा वा इयꣳ सर्वैव वेदिः" इति श्रुत्यन्तरात् । तस्माद्वेदेन साधनेन भूम्यात्मिका वेदिर्देवैर्लब्धा । किंच हे वेद त्वया यज्ञो विश्वदानिर्विश्वस्य फलस्य दाता जायते । किंचं त्वं विद्वानभिज्ञः सन्नच्छिद्रमविगुणं यज्ञमन्वेष्यनुप्रामोषि संपादयसीत्यर्थः । किंच त्वया सहायभूतेन होता होमस्य कर्ताऽर्धमासाञ्शुक्लकृष्णपक्षरूपान्संतनोति यज्ञानुष्ठानेन संततान्करोति । तथा च ब्राह्मणम्—"वेदꣳ होताऽऽहवनीयात्स्तृणन्नेति । यज्ञमेव तत्संतनोत्युत्तरस्मादर्धमासात् । तꣳ संततमुत्तरेऽर्धमास आलभते । तं काले काल आगते यजते" इति । एवं पुनः पुनरनुष्ठानाद्यज्ञविशिष्टानामर्धमासानां सांतत्यं संपद्यते ।

अथ दोहने वत्सबन्धनरज्जुस्वीकारानुमन्त्रणमन्त्रमाह—

त्रयस्त्रिꣳशोऽसि तन्तूनाम् । पवित्रेण
सहाऽऽगहि (१२)। शिवेयꣳ रज्जुर-
भिधानी । अघ्नियामुपसेवताम्, इति ।

जायमानरज्ज्वंशा गुणास्तन्तवस्तेषां तन्तूनां त्रयस्त्रिंशोऽसि । हे वत्सबन्धनरज्जुविशेष त्वं त्रयस्त्रिंशत्संख्याविशिष्टः समूहोऽसि, तावद्भिस्तन्तुभिर्निष्पादित इत्यर्थः । हविर्भुजां देवानां तत्संख्योपेतत्वात्तदात्मना प्रशंसितुमियं संख्योच्यते न त्वत्र विहिता काचित्तन्तुसंख्याऽस्ति । हे तथाविध रज्जुविशेष स त्वं पवित्रेण शुद्धिसामर्थ्येन सहाऽऽगह्यागच्छ । इयमभिधानी बन्धनरज्जुः शिवा सुखकरी सत्यघ्नियां गामुपसेवताम् ।

अथ क्षीरपाकार्थमङ्गारेषु कुम्भ्यामधिश्रयणे मन्त्रमाह—

अंप्रस्रꣳसाय यज्ञस्यं । उखे उपंदधा-
म्यहम् । पशुभिः संनीतं बिभृताम् ।
इन्द्राय शृतं दधि, इति ।

हे उखे कुम्भि यज्ञस्य यज्ञार्थस्य सांनाय्यस्याप्रस्रंसाय संस्रंसपरिहारार्थं

त्वामहमुपदधाम्यङ्गारेषु स्थापयामि । सेयमुखा पशुभिः संनीतं गोभिः संपादितं क्षीरमिन्द्रार्थं शृतं पक्वं दधि च कृत्वा बिभृतां धारयतु । यद्यपि " मातरिश्वनो घर्मोऽसि " इत्यधिश्रयणमन्त्रः संहितायामाम्नातस्तथाऽप्ययं मन्त्रस्तेन सह विकल्प्यते ।

अथ वत्सापाकरणार्थायाः पलाशशाखाया मूलं छित्त्वा प्रादेशपरिमितं यमुपवेषं करोति तस्य करणे मन्त्रमाह—

उपवेषोऽसि यज्ञाय । त्वां परिवेषमधारयन् ।
इन्द्राय हविः कृण्वन्तः । शिवः शग्मो भवासि
नः ( १३ ), इति ।

हे पलाशशाखांश यज्ञार्थं त्वमुपवेषोऽस्युपेत्याङ्गारनिरूहणादिना व्यापकोऽसि तस्मादिन्द्रार्थं हविः कुर्वन्त ऋत्विग्यजमानास्त्वां परिवेषं यज्ञस्य परितो व्यापकमधारयन् । तादृशस्त्वं नोऽस्माकं शिवः सुखकरः शग्मः शान्तश्च भवसि ।

अथ दारुपात्रादिना कुम्भ्यामपिधानकाले यजमानेन जप्यमन्त्रमाह—

अमृण्मयं देवपात्रम् । यज्ञस्याऽऽ-
युषि प्रयुज्यताम् । तिरःपवित्रमति
नीताः । आपो धारय माऽतिगुः, इति ।

यदेतद्देवपात्रं देवानां योग्यं पिधानपात्रं तदेतन्मृन्मयं न भवति । ' न मृन्मयेनापिदध्यात् ' इति निषेधात् । किं त्वयोमयं दारुमयं वा । ' अयस्पात्रेण वा दारुपात्रेण वा पिदधाति ' इति विधानात् । तच्च पात्रं यज्ञस्य यज्ञाङ्गस्य सांनाय्यस्याऽऽयुष्यायुर्निमित्तं सुरक्षितत्वनिमित्तं प्रयुज्यतां पिधाने साधनी क्रियताम् । पिधानस्य प्रयोजनमुच्यते । तिरःपवित्रं कुम्भ्यां तिर्यक्त्वेन स्थापितं यत्पवित्रं तदतिक्रम्याऽऽपो नीता दोहनपात्रसंक्षालनीया आपस्तिरःपवित्रव्यवधानेन कुम्भ्यामासिक्ताः । हेऽध्वर्यो ताः पवित्रगता आपो माऽतिगुर्यथा कुम्भीमतिक्रम्य बहिर्न गच्छन्ति तथा कर्तुं पिधानमात्रेण धारय ।

अथ प्रोक्ष्यमाणानां सांनाय्यपात्राणामभिमन्त्रणे मन्त्रमाह—

देवेन सवित्रोत्पूताः । वसोः सूर्यस्य

रश्मिभिः । गां दोहपवित्रे रज्जुम् ।
सर्वा पात्राणि शुन्धत, इति ।

एताः प्रोक्षणसाधनभूता आपः सवित्रा सूर्येण देवेन वसोर्जगन्निवासहेतोस्तस्य सूर्यस्य रश्मिभिश्चोत्पूता उत्कर्षेण शुद्धा संपन्नास्तादृश्यो हे आप इमां गां दोहपवित्रे यद्दोहनपात्रं यच्च कुम्भ्यां स्थापितं तदुभयं रज्जुं बन्धनहेतुमन्यान्यपि सर्वाणि सांनाय्यपात्राणि शुन्धत शोधयत ।

अथ सायंकालेऽरण्यादागच्छन्तीनां गवां प्रतीक्षणे मन्त्रमाह—

एता आचरन्ति मधुमद्दुहानाः । प्रजा-
वतीर्यशसो विश्वरूपाः (१४) ।
बह्वीर्भवन्तीरुपजायमानाः । इह
व इन्द्रो रमयतु गावः, इति ।

एता दृश्यमाना गाव आचरन्ति, अस्मानाभिमुख्येनाऽऽगच्छन्ति । कीदृश्यो गावो मधुमन्मधुररसोपेतं दुग्धं दुहानाः प्रजावतीर्बहुवत्सा यशसो हेतुरूपा विश्वरूपाः शुक्लकृष्णादिनानारूपा बह्वीर्भवन्तीः संतानवृद्ध्या बहुभावं गच्छन्त्य उपजायमानाः कर्मसु पुनः पुनरुपयुज्यमानाः । तादृश्यो हे गावो वो युष्मानिह मद्गृह इन्द्रो रमयतु क्षीरादिसमृद्ध्या रतिहेतून्करोतु ।

अथ वत्सबन्धने मन्त्रमाह—

पूषा स्थ, इति ।

हे वत्स त्वं पूषा स्थ पूषाऽसि क्षीरस्य पुष्टिहेतुरसि ।

अथ दोग्धुरुपसादने मन्त्रमाह—

अयक्ष्मा वः प्रजया सꣳसृजामि ।
रायस्पोषेण बहुला भवन्ती । ऊर्जं
पयः पिन्वमाना घृतं च । जीवो
जीवन्तीरुप वः सदेयम्, इति ।

हे गावो वो युष्मान्प्रजया संसृजामि वत्सेन संयोजयामि । कीदृशीर्युष्मा-

नयक्ष्मा रोगरहिता रायस्पोषेण धनपुष्ट्या बहुला भवन्तीर्बहुलाः प्रथिता भवन्ती पुष्टिहेतुभूता भवन्त्वित्यर्थः । ऊर्जं रसोपेतं पयो घृतं च पिन्वमानाः सिञ्चतीर्युष्मत्प्रसादादहं जीवश्चिरंजीवी जीवन्तीश्चिरं जीवन्तीर्वो युष्मानुपसदेयमुपेत्य भजामि।

अदुह्यमानाया गोरभिमन्त्रणे मन्त्रमाह—

द्यौश्चेमं यज्ञं पृथिवी च संदुंहाताम् ।
धाता सोमेन सह वातेन वायुः । यज-
मानाय द्रविणं दधातु (१५), इति ।

द्यौः पृथिवी चेत्येते उभे देवते इमं यज्ञमेतद्यज्ञसाधनं पयः संदुहाताम् । तथा सोमेनौषधीशेन सहावस्थितो यो धाता वातेन प्राणात्मनाऽवस्थितो यश्च वायुस्तावुभावपि संदुहाताम् । अथ सर्वोऽयं देवतागणो यजमानाय द्रविणं दधातु धनं संपादयतु ।

अथ धाराघोषस्यानुमन्त्रणे मन्त्रमाह—

उत्सं दुहन्ति कलशं चतुर्बिलम् ।
इडां देवीं मधुमतीꣳ सुवर्विदम् ।
तदिन्द्राग्नी जिन्वतꣳ सूनृतावत् ।
तद्यजमानममृतत्वे दधातु, इति ।

दोग्धारः पुरुषा इडां गां कलशं कलशसमानमूधो दुहन्ति । कीदृशं कलशमुत्सं क्षीरप्रस्रवणोपेतं चतुर्बिलं स्तनचतुष्टयगतैश्चतुर्भिर्बिलैर्युक्तम् । कीदृशीमिडां देवीं द्योतमानां मधुमतीं मधुररसोपेतां सुवर्विदं स्वर्गस्य लम्भयित्रीम् । तद्दुग्धमिन्द्राग्नी जिन्वतं प्रीणयतं प्रीतिहेतुं कुरुतम् । कीदृशं तद्दुग्धं सूनृतावत्प्रियसत्यात्मकवचनयुक्तमिदं क्षीरं मधुरं स्वादुतरमित्यादिशब्दैरुच्यमानमित्यर्थः । तच्चेन्द्राग्न्यनुगृहीतं क्षीरं यजमानममृतत्वे कर्मफले दधातु स्थापयतु ।

अथ दुग्धमानयन्तं पुरुषं प्रत्यध्वर्योः प्रश्नमन्त्रमाह—

कामंधुक्षः प्र णो ब्रूहि ।

इन्द्राय हविरिन्द्रियम्, इति।

हे दोग्धर्वर्द्यमानासु गोषु मध्ये गां कामधुक्षो दुग्धवानसि नोऽस्मभ्यं ब्रूहि। इन्द्रियमिन्द्रियवृद्धिकारणमिदं हविरिन्द्राय संपाद्यते तस्माद्युक्तमाचक्ष्व।

अथ दोग्धुः प्रत्युत्तरमन्त्रमाह—

अमूं यस्यां देवानाम्। मनु-
ष्याणां पयो हितम्, इति।

गङ्गायमुनादिनामानि मनुष्यैर्गोषु व्यवह्रियन्ते। स च नामविशेषोऽमूमितिसर्वनाम्ना निर्दिश्यते। इमां गङ्गां दुग्धवानस्मीत्यर्थः। यस्यां गङ्गायां देवानां मनुष्याणां च हितं पयो वर्ततेताममूमिति पूर्वत्रान्वयः।

अथ वाग्यमनयुक्तस्याध्वर्योर्वाग्विसर्जनमन्त्रमाह—

बहु दुग्धीन्द्राय देवेभ्यः। हव्यमाप्या-
यतां पुनः (१६)। वत्सेभ्यो मनु-
ष्येभ्यः। पुनर्दोहाय कल्पताम्, इति।

हे गौर्बहु क्षीरं दुग्धि। तत्क्षीररूपं हव्यमिन्द्रार्थं देवार्थं च पुनराप्यायतां भूयो वर्धताम्। ततो वत्सार्थं मनुष्यार्थं च। पुनर्दोहाय गौरियं कल्पतां शक्ता भवतु।

अथ दध्याद्यातञ्चनस्योपर्यग्निहोत्रोच्छेषणस्याभ्यातञ्चने मन्त्रमाह—

यज्ञस्य संततिरसि। यज्ञस्य
त्वा संततिमनु संतनोमि, इति।

हेऽग्निहोत्रोच्छेषण यज्ञस्य संततिरविच्छेदकारणं त्वमसि। तादृशं त्वां यज्ञस्य संततिमनु यज्ञसंबन्धिनमविच्छेदमभिलक्ष्य संतनोमि दुग्धेन संततं करोमि।

अथ दारुपात्रादिना कुम्भ्या अपिधाने मन्त्रमाह—

अदस्तमसि विष्णवे त्वा। यज्ञायापि-
दधाम्यहम्। अद्भिररिक्तेन पात्रेण।

याः पूताः परिशेरते, इति।

हे क्षीरादस्त्वमनुपक्षीणं त्वमसि। या आपः पूताः शुद्धाः सत्यः परिशेरतेऽपिधानपात्रस्योपरि वर्तन्ते ताभिरद्भिररिक्तेन जलसहितेन पात्रेण विष्णवे व्याप्तिमते यज्ञाय हे क्षीर त्वामहमपिदधामि।

अथ परिवासनशकलस्य प्रक्षेपणे मन्त्रमाह—

अयं पयः सोमं कृत्वा। स्वां योनिमपि-
गच्छतु (१७)। पर्णवल्कः पवित्रम्।
सौम्यः सोमाद्धि निर्मितः, इति।

अयं क्षीरे प्रक्षिप्यमाणः पर्णवल्कः पलाशशाखासंबन्धिशकलः पवित्रं शुद्धं पयः सोमं सोमसमानं कृत्वा स्वां योनिं स्वकीयस्थानमपिगच्छतु प्राप्नोतु। कीदृशः पर्णवल्कः सौम्यः सोमसंबन्धी तदेव स्पष्टी क्रियते—सोमाद्धि निर्मितस्तृतीयस्या दिवो गायत्र्या समानीयमानात्सोमाद्यः पर्णो भूमौ पतितस्तस्मात्सोमपर्णादुत्पन्नः पलाशवृक्षः। अतः पर्णवल्कस्य सोमसंबन्धित्वम्।

अथ शाखापवित्रस्य प्रज्ञातत्वेन क्वचिदवस्थापने मन्त्रमाह—

इमौ पर्णं च दर्भं च। देवानां हव्य-
शोधनौ। प्रातर्वेषाय गोपाय। विष्णो
हव्यं हि रक्षसि, इति।

योऽयं पर्णः पलाशशाखारूपो यश्च दर्भः पवित्ररूपस्ताविमावुभौ देवानां हविषः शोधकौ। प्रातर्वेषाय प्रातर्दोहात्मने व्यापिने यज्ञाय तौ पर्णदर्भौ गोपाय रक्ष। हि यस्मात्कारणाद्धे विष्णो त्वं हव्यं रक्षसि तस्मात्तदुपयुक्तस्य शाखापवित्रस्य रक्षणं तवोचितम्।

सायंकाले वह्निषु परिस्तीर्यमाणेषु जप्यं मन्त्रमाह—

उभावग्नी उपस्तृणते। देवता उपवसन्तु
मे। अहं ग्राम्यानुपवसामि। मह्यं गोप-
तये पशून् (१८), इति।

आभृतं इमं गृह्णामि पूर्वस्ताः पूर्वः परिगृह्णामि सभापाला इन्द्र ज्येष्ठेभ्य आदित्य व्रतपते सुसंभृता मे सह पुनातु गहिनो विश्वरूपा दधातु पुनर्गच्छतु पशून् ।

याः पुरस्तादिमामूर्जमिह प्रजा इह पशवोऽयं पितॄणामग्निः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

आहवनीयगार्हपत्यावुभावप्यग्नी उपस्तृणतेऽध्वर्युरुपस्तृणाति । दक्षिणाग्निरपि ताभ्यामुपलक्ष्यते । एतद्यागसंबन्धिन्यो देवता मे मदर्थमुपवसन्त्वत्रोपेत्य निवसन्तु । अहं हि ग्राम्यान्पशूनुपवसामि नाश्नामि । किमर्थं मह्यं गोपतयेऽहं गोपतिर्गवां स्वामी यथा स्यामिति । अत एवान्यत्राऽऽम्नातम्—"यद्ग्राम्यानुपवसति तेन ग्राम्यानवरुन्धे" इति ।

अत्र विनियोगसंग्रहः—

अथ दार्शिकमन्त्राः स्युर्याः पुरस्तेत्यपो जपेत् ।
प्रणीयमाना देवा गेत्यन्वाधानात्पुरा जपेत् ॥ १ ॥
तृतीयशकलमादद्यादापः पात्राभिमन्त्रणम् ।
सपर्णवल्कैरातञ्च्यादग्निं पूर्वाग्निसंजपः ॥ २ ॥
अन्तर्वहन्त्योर्जपेन्मध्य इह प्रेत्यपरानलम् ।
अयं त्रिभिर्जपेद्दक्षिणाग्निसभ्यावसथ्यकान् ॥ ३ ॥
इदं जपेच्च सर्वांग्नीन्पयोऽश्नीतोऽत्र दंपती ।
अग्ने व्रेत्यादिका मन्त्रा व्रतोपायनकर्मणि ॥ ४ ॥
इमामाहरते शाखां यदिध्मं संभरेद्द्वयान् ।
याः परिस्तरणे दात्रस्पर्शच्छेदनबन्धनम् ॥ ५ ॥
सकृद्दर्भेण वेदिं तु पितृयज्ञे स्तृणाति हि ।
त्रिवृच्छाखापवित्रे तु क्रियमाणेऽनुमन्त्रयेत् ॥ ६ ॥
पविं कृत्वा पवित्रे द्वे अयं प्रस्तरयोजनम् ।
त्वयेति वेदं कुरुते त्रयो रज्ज्वभिमन्त्रणम् ॥ ७ ॥
अग्न कुम्भीं क्षिपेद्वह्नावुपवेषं करोत्युप ।
अमृज्जप्यं पिधाने स्याद्देवे पात्रोक्षणे जपः ॥ ८ ॥
एताः प्रतीक्षते धेनूः पूषा वत्साभिबन्धनम् ।
अयेति दोग्धोपसीदेद्द्यौश्च दोग्धेति गां जपेत् ॥ ९ ॥

---

१ क. ग. 'रस्तात्प्रयोज' ।

उक्तं धाराघोषमन्त्रः कामधुक्षेति पृच्छति ।
अमूं दोग्धा पतिं ब्रूयाद्धुं ब्रूयात्रिदोहते ॥ १० ॥
यज्ञाग्निहोत्रशेषं तु क्षिपेदातञ्चनोपरि ।
अदस्तं दारुपात्रेण पिधत्तेऽयं पयस्त्विति ॥ ११ ॥
शकलं निदधातीमौ गूहेच्छाखापवित्रकम् ।
उभौ सायं परिस्तीर्यमाणेष्वग्निषु संजपेत् ॥ १२ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥४॥

---

अथ पञ्चमोऽनुवाकः ।

---

चतुर्थे दर्शपूर्णमासाङ्गभूताः केचिन्मन्त्राः उक्ताः । पञ्चमे त्वपरे मन्त्राः कियन्तोऽप्यभिधीयन्ते । तत्राऽऽहवनीयागारे गार्हपत्यागारे वा शयानेन जप्यं मन्त्रमाह—

देवा देवेषु पराक्रमध्वम् । प्रथमा द्वितीयेषु । द्वितीयास्तृतीयेषु । त्रिरेकादशा इहमाऽवत । इदꣳ शकेयं यदिदं करोमि । आत्मा करोत्वात्मने । इदं करिष्ये भेषजम् । इदं मे विश्वभेषजा । अश्विना प्रावतं युवम्, इति ।

द्यावापृथिव्योरन्तरिक्षे च प्रत्येकमेकादशसंख्याका देवा वर्तन्ते । एतच्च ये देवा दिव्येकादश स्थ इति मन्त्रे समाम्नातम् । तत्र द्युलोकवर्तिन एकादशसंख्याका देवाः प्रथमास्तादृशा हे देवा द्वितीयेषु पृथिवीवर्तिषु देवेषु पराक्रमध्वमप्रतिबन्धेन वर्तध्वम् । तथा द्वितीया हे देवास्तृतीयेष्वन्तरिक्षवर्तिषु देवेषु पराक्रमध्वम् । हे त्रिरेकादशास्त्रिरावृत्ता एकादशसंख्याका देवाः सर्वेऽपि यूयं संभूयेह कर्मणि वर्तमानं मामवत रक्षत । यदिदं कर्मेदानीं करोमि तदिदं कर्म शकेयं संपूर्णं कर्तुं शक्तो भूयासम् । तत्रैतद्देहस्थमात्मैव स्वार्थं करोतु । कोऽन्यः

---

१ क. °हु दुग्धि त्रिदो° ।

सहायो भवितुमर्हति । तद्यथा संपद्यते तथा युष्माभिः प्रसादनीयम् । किंच भेषजं सर्वानिष्टोपशमनमिदं कर्म करिष्ये । हे विश्वभेषजा सर्वानिष्टोपशमनकुशलावश्विनौ युवामपि मे मदीयमिदं कर्म प्रावतं प्रकर्षेण रक्षतम् ।

अथाङ्गराणां पुरोडाशादपोहने मन्त्रमाह—

इदमहꣳ सेनाया अभीत्वर्यै

(१) । मुखमपोहामि, इति ।

अभीत्वर्या अभिभवितुं पुरोडाशमतिदाहेन हिंसितुं प्रवृत्तायै सेनाया अङ्गाररूपायां सेनायां मुखं प्रधानभूतमङ्गारमहमिदमिदानीमेवापोहाम्यपनयामि ।

अथ पुरोडाशस्याभिमन्त्रणे मन्त्रमाह—

सूर्य ज्योतिर्विभाहि । महत इन्द्रियाय, इति ।

हे पुरोडाशाधिकस्येन्द्रियस्य सिद्ध्यर्थं सूर्यसमानदीप्तिः सन्विशेषेण दीप्यस्व ।

अथाभिघारणे मन्त्रमाह—

आप्यायतां घृतयोनिः । अग्निर्हव्याऽनुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व । सुरूपं त्वा वसुविदम् । पशूनां तेजसा । अग्नये जुष्टमभिघारयामि , इति ।

घृतमेव योनिः कारणं यस्यासौ घृतयोनिः । घृतेन हि ज्वालोद्भवति । तादृशोऽग्निराप्यायतां हव्यानि चास्मदीयान्यनुमन्यतामङ्गी करोतु । हे पुरोडाश त्वमपि खं रन्ध्रं पाकजन्यमङ्क्ष्वाञ्जय । तथा त्वचमङ्क्ष्वाञ्जय । घृतेन पिहितरन्ध्रं स्निग्धच्छायं चाऽऽत्मानं कुरु । ततोऽहं सुरूपं शोभनरूपं च वसुविदं धनानां लम्भयितारमग्नये जुष्टं प्रियं त्वां पशूनां तेजसाऽनेन घृतेनाभिघारयाम्युपरि घृतधारया संस्करोमि ।

अथ पात्र्यामुपस्तरणमन्त्रमाह—

स्योनं ते सदनं करोमि (२) । घृतस्य

---

१ ख. °शात्राधि° । ग. °शात्राधि° ।

धार॑या सु॒शेवं॑ कल्पयामि, इति ।

हे पुरोडाश ते तव स्योनं सुखहेतुं सदनं स्थानं करोमि । घृतस्य धारया सुशेवं सुसेवितुं योग्यं यथा भवति तथा कल्पयामि संपादयामि ।

अथ पुरोडाशस्य सादने मन्त्रमाह—

तस्मि॑न्त्सीदा॒मृते॒ प्रति॑तिष्ठ । व्री॒ही॒णां

मे॑ध सुमन॒स्यमा॑नः, इति ।

हे व्रीहीणां मेध सारभूत पुरोडाश तस्मिन्स्थाने सीदावस्थितिं कुरु । तथा सुमनस्यमानः सुप्रीयमाणोऽमृते निरुपद्रवे तस्मिन्स्थाने प्रतितिष्ठ प्रविष्टो भव ।

अथ पुरोडाशस्योद्वासने मन्त्रमाह—

आ॒र्द्रः प्र॑थस्नु॒र्भुव॑नस्य गो॒पाः । शृ॒त

उत्स्ना॑ति ज॒निता म॑ती॒नाम्, इति ।

आर्द्रो घृतेन शीतीकृतः प्रथस्नुः प्रथनशीलो भुवनस्य गोपा भूतजातस्य गोपायिता शृतः पक्वो मतीनां प्रा(प्र)ज्ञानां जनितोत्पादयिता पुरोडाश उत्स्नाति स्वात्मानमग्नेः सकाशादुन्मुञ्चति ।

प्रातर्दोहस्याभिघारणे मन्त्रमाह—

यस्त॑ आ॒त्मा प॒शुषु॒ प्रवि॑ष्टः । दे॒वानां॑

वि॒ष्ठाम॑नु॒ यो वित॒स्थे । आ॒त्मन्वा-

न्त्सो॑म घृ॒तवा॒न्हि भू॒त्वा । दे॒वान्ग॑च्छ॒

सु॒वर्वि॑द॒ यज॑माना॒य मह्य॑म्, इति ।

हे प्रातर्दोह ते तव य आत्मा घृतोपलक्षणः पशुषु प्रविष्टः प्रविश्य वर्तते । यश्च देवानां विष्ठां विविधमवस्थानमनुलक्षीकृत्य स्वयमपि तदनुरूपं वितस्थे विविधं तिष्ठति । हे सोमसदृश पुरोडाश त्वमात्मन्वान्समीचीनस्वरूपवान्घृतवान्हि घृतयुक्तः प्रसिद्धो भूत्वा देवान्गच्छ प्राप्नुहि । यजमानाय मह्यं सुवर्विद स्वर्गं लभस्व ।

---

१ क 'व्रीँऽमृते' ।

अथ कपालानां प्रत्यञ्जने मन्त्रमाह—

इरा भूतिः पृथिव्यै रसो मोत्क्रमीत् ( ३ ), इति ।

इराऽन्नरूपो भूतिः प्रजानां भवनहेतुः पृथिव्यै रसः कपालरूपायाः पृथिव्याः सारांशो मोत्क्रमीत्कपालेभ्य उत्क्रान्तो मा भूत् ।

अथ होतृप्रवरेऽध्वर्युप्रवरे च यजमानेन जप्यं मन्त्रमाह—

देवाः पितरः पितरो देवाः । योऽहमस्मि स सन्यजे । यस्यास्मि न तमन्तरेमि । स्वं म इष्टꣳ स्वं दत्तम् । स्वं पूर्तꣳ स्वꣳ श्रान्तम् । स्वꣳ हुतम् । तस्य मेऽग्निरुपद्रष्टा । वायुरुपश्रोता । आदित्योऽनुख्याता । द्यौः पिता ( ४ ) । पृथिवी माता । प्रजापतिर्बन्धुः । य एवास्मि स सन्यजे, इति ।

हे देवाः पितरः पालयितारो हे पितरो देवा द्योतनात्मका उभयविधा यूयं मद्विज्ञापनां शृणुतेति शेषः । योऽहमस्मि पुरा वर्णाश्रमाभ्यां यादृशाचारोऽहमस्मि स सन्यजे तादृशाचार एव सन्स्वोचिताचारस्य लोपमकृत्वा युष्मान्यजे । किंच यस्यास्मि यस्य पितुरहं पुत्रोऽस्मि तं पितरं नान्तरेमि तदीयस्याऽऽचारस्यान्तरायं न करोमि । ‘ अवश्यं पितुराचारं मनसाऽपि न लङ्घयेत् ’ इति हि सर्वे वदन्ति । तादृशस्य मे यदिष्टं तत्स्वं भवतु । इह लोके वषट्कारेण देवेभ्यो यद्दत्तं तद्युष्मत्प्रसादात्परलोके भोगाय ममैव स्वं भवतु । तथा दत्तं दक्षिणाद्रव्यादिकं मम स्वं भवतु । पूर्तं पक्वमन्नादि पितृभ्यो दत्तं मम स्वं भवतु । श्रान्तं तपो रूपेणानुष्ठितं मम स्वं भवतु । तथा हुतं स्वाहाकारेण दत्तं मम स्वं भवतु । सर्वमेतद्यथा भवति तथा हे देवाः पितरश्च यूयमनुमन्यध्वम् । तस्य यथाशास्त्रं कुर्वतो मेऽयमग्निरुपद्रष्टा समीपे स्थित्वा द्रष्टा साक्षीत्यर्थः । अयं वायुरुपश्रोता समीपे स्थित्वा मद्वृत्तान्तं साक्षित्वेन शृणोति । आदित्यश्चानुख्याता मदीयस्य वृत्तान्तस्यानुक्रमेण ख्यापयिता । द्यौः पिता मम पितृस्थानीया पृथिवी च मातृस्थानीया प्रजापतिश्च बन्धुस्थानीयः । यस्मादेवं तस्मादहं य एवास्मि

यादृशाचारो यदीयपुत्रो यद्देवतासाक्षिकश्चास्मि स तादृश एव सन्यजे यष्टुं योग्यतां मम कुरुतेत्यभिप्रायः ।

अथ हविरवद्याने मन्त्रमाह–

मा भेर्मा संविक्था मा त्वां हिꣳसिषम् ।
मा ते तेजोऽपंक्रमीत् । भरतमुद्धरेमनु-
षिञ्च । अवदानानि ते प्रत्यवदास्यामि ।
नमस्ते अस्तु मा मा हिꣳसीः, इति ।

हे पुरोडाश मा भेर्मा भैषीर्भयं मा कार्षीः । मा च संविक्था मा कम्पिष्ठाः कम्पं मा कार्षीः । कम्पमानं त्वामहं मा हिंसिषं हिंसां न करोमि । अतो भीवरस्य ते तव तेजो माऽपक्रमीद्भयस्यास्माभिर्निराकृतत्वात् । अतस्त्वं भरतमिमं यजमानमुद्धर । देवेभ्यो हविर्भरणाद्यजमानो भरतः । ततोऽनुषिञ्च वृष्टिद्वारेण "ईम्" इमां छान्दसोऽयं मवर्णलोपः । पृथिवीमनुक्रमेण सिक्तां कुरु । त्वदीयान्यवदानानि प्रत्यवदास्यामि प्रत्येकमवदानं करिष्यामि । ते तुभ्यं नमोऽस्तु । मा मा हिंसीः प्रतिकूलस्यानाचरणात् ।

अथ हविषः प्रत्यभिघारणे मन्त्रमाह–

यदंवदानानि तेऽवद्यन् । विलोमाकार्षमाः-
त्मनंः (५) । आज्येन प्रत्यनज्म्येनत् ।
तत्त आप्यायतां पुनंः, इति ।

अवदानान्यवद्यन्नहं ते तव यद्विलोम प्रतिकूलमकार्षं तद्द्वारेणाऽऽत्मनो ममापि प्रतिकूलमकार्षमेतदुभयमप्याज्येन प्रत्यनज्मि प्रतिसमाहितं यथा भवति तथाऽञ्जनं करोमि । किंच ते तव विकृतमङ्गं पुनराप्यायतां भूयो वर्धताम् ।

अथ प्राशित्रावदाने मन्त्रमाह–

अज्यायो यवमात्रात् । आव्याधात्कृत्यतामिदम् । मा
रूरुपाम यज्ञस्य । शुद्धꣳ स्विष्टमिदꣳ हविः, इति ।

पुरा कदाचिद्रुद्रो यज्ञस्य साधनस्य पुरोडाशस्य कंचिदंशमविध्यत् । तथा

च ब्राह्मणमाम्नायते—"देवा वै यज्ञाद्रुद्रमन्तरायन् । स यज्ञमविध्यत्" इति । तस्माद्राव्याधाद्विद्धप्रदेशादिदं हविः कृत्यतां छिद्यताम् । कियद्धविर्यवमात्राद्-ज्यायो यवपरिमितमेव न तु ततोऽधिकं वयं यज्ञस्य पुरोडाशरूपस्य शरीरं मा रूरुपाम रोपणं विमोहनमुपद्रवस्तद्युक्तं न करवाम । यवमात्रादधिकावदाने ह्युप-द्रवः स्यात् । तथा चान्यत्राऽऽम्नातम्—"यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य" इति । इदं तु यवमात्रं हविर्देवैश्छिन्नत्वाच्छुद्धम् । तथा चाऽऽम्नायते—"तस्याऽऽविद्धं निरकृन्तन्यवेनं संमितं तस्माद्यवमात्रमवद्येत्" इति । किंचेदं हविः स्विष्टं शोभ-नयागहेतुः । तदप्याम्नातम्—"स्विष्टं वै न इदं भविष्यति" इति ।

अथेडावदाने मन्त्रमाह—

मनुना दृष्टां घृतपदीम् । मित्रावरु-
णसमीरिताम् । दक्षिणार्धादसंभिन्दन् ।
अवद्याम्येकतोमुखाम् (६), इति ।

दक्षिणार्धात्पुरोडाशस्य दक्षिणभागादसंभिन्दन्नितरावदानैरसंमिश्रयन्नहमिडा-मुद्दिश्यावद्यामि पुरोडाशांशमवखण्डयामि । कीदृशीमिडां मनुना प्रथमं दृष्टां तथा घृतं पादान्निष्पीडितं यस्याः सा घृतपदी तादृशीं मित्रावरुणाभ्यां सम्यक्प्रेरिता मित्रावरुणसमीरिता ताम् । तथा च मन्त्रान्तरमाम्नातम्—"मानवी घृतपदी मैत्रावरुणी" इति । पदानां ब्राह्मणमेवमाम्नायते—"मानवीत्याह । मनुर्ह्येता-मग्रेऽपश्यत् । घृतपदीत्याह । यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह । मैत्रावरुणी-त्याह । मित्रावरुणौ ह्येनाः समैरयताम्" इति । तथैकतोमुखामेकदिङ्मुखप्रभवां दक्षिणदिश्येवावस्थितां न तु दिगन्तर इत्यर्थः ।

अथ यजमानपञ्चमानामृत्विजामिडाभक्षणे मन्त्रमाह—

इडे भागं जुषस्व नः । जिन्व गा जिन्वार्वतः । तस्यास्ते
भक्षिवाणः स्याम । सर्वात्मानः सर्वगणाः, इति ।

हे इड इडाख्ये देवि नोऽस्माकं भागं जुषस्व प्रीतिपूर्वकमनुमन्यस्व । ततो गा जिन्व गोमहिष्यादीन्प्रीणय संवर्धयेत्यर्थः । अर्वतोऽश्वांश्च जिन्व तस्यास्तादृ-श्यास्ते तव भक्षिवाणो भक्षयितारः सर्वात्मानोऽविकलस्वरूपाः सर्वगणाः सर्वैः पुत्रपौत्रादिगणैश्च सहिताः [स्याम] ।

अथ बर्हिषदः पुरोडाशस्याभिमर्शने मन्त्रमाह—

ब्रध्न पिन्वस्व । ददतो मे मा क्षायि । कुर्वतो मे मोपदसत् । दिशां क्लृप्तिरसि । दिशो मे कल्पन्ताम् । कल्पन्तां मे दिशः (७) । दैवीश्च मानुषीश्च । अहोरात्रे मे कल्पेताम् । अर्धमासा मे कल्पन्ताम् । मासा मे कल्पन्ताम् । ऋतवो मे कल्पन्ताम् । संवत्सरो मे कल्पताम् । क्लृप्तिरसि कल्पतां मे, इति ।

यज्ञो वै ब्रध्न इति श्रुतेः, हे ब्रध्न यज्ञसाधकपुरोडाश पिन्वस्व त्वं प्रीतो भव । देवेभ्यस्त्वां ददतो मे मम मा क्षायि विद्यमानस्वरूपादुपक्षीणो मा भूः । यागं कुर्वतो मम फलं मोपदसत्क्षीणं मा भूत् । पूर्ववाक्येन(ण) साधनस्य यज्ञस्योपक्षयाभावः । उत्तरवाक्येन(ण) साध्यस्य फलस्याप्युपक्षयाभावः । हे पुरोडाश त्वं दिशां दिग्वासिजनानां क्लृप्तिः सामर्थ्यं स्वस्वव्यापारक्षमता सैव त्वमसि । अतस्त्वत्प्रसादान्मे मदर्थं दिशो दिग्वासिजनाः । आदरार्थं पुनर्वचनम् । ताश्च दिशो द्विविधा दैव्यो मानुष्यश्च । आदित्यगत्या संपादिताः प्राच्यादयो दैव्यः । मनुष्याणां परस्परावस्थानापेक्षया परिकल्पिताः प्राच्यादयो मानुष्यः । यद्वा दिशो देशकालव्यवस्थाः । ताश्च प्रजापत्यादिकृता दैव्यः । मन्वादिकृता मानुष्यः । अहोरात्रादयः स्पष्टाः । किं बहुना सर्वत्र त्वमेव क्लृप्तिः सामर्थ्यमसि । त्वज्जनितयज्ञाधनित्वात्सर्वव्यवहारसामर्थ्यस्य । अतो मे मदर्थं सर्वं दिगादिकं कल्पताम् ।

अथ चतुर्धाकृतस्य पुरोडाशस्य दिक्षु व्यूहने मन्त्रमाह—

आशानां त्वाऽऽशापालेभ्यः । चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यः (८) । विधेम हविषा वयम् । भजतां भागी भागम् । माऽभागो भक्त । निरभागं भजामः । अप-

स्पिन्व । ओषधीर्जिन्व । द्विपात्पाहि । चतु-
ष्पादव । दिवो वृष्टिमेरय । ब्राह्मणानामि-
दं हविः (९)। सोम्यानां सोमपीथिनाम् ।
निर्भक्तो ब्राह्मणः । नेहाब्राह्मणस्यास्ति, इति ।

हे पुरोडाश त्वामाशानां सर्वासां दिशां संबन्धिभ्य आशापालेभ्यो दिक्पालकेभ्यश्चतुर्भ्य इन्द्रयमवरुणकुबेरेभ्योऽमृतेभ्यो देवेभ्यः समर्पयामीति शेषः। भूतस्य सिद्धस्यास्य पुरोडाशस्याध्यक्षेभ्यः स्वामिभ्य इदमिदानीं वयं हविषा विधेम परिचरेम । अत्र भागी भागयोग्यः पुमान्स्वकीयं भागं भजताम् । अभागस्तदयोग्यः पुमान्मा भक्त भागं मा प्राप्नोतु । अभागं पुरुषं निर्भजामो वयं भागरहितं कुर्मः । अपः क्रियमाणमिदं कर्म पिन्व हे पुरोडाश त्वं वर्धय । ओषधीश्च जिन्व प्रीणय । द्विपात्पुत्रभृत्यादिकं पाहि । चतुष्पाद्गोमहिष्यादिकमव रक्ष । दिवः सकाशाद्वृष्टिमेरय प्रवर्तय । सोम्यानां सोमयोग्यानामत एव सोमपीथिनां सोमपानयुक्तानां ब्राह्मणानामृत्विजामिदं चतुर्धाकृतं हविः संपादितम् । अब्राह्मणस्तु निर्भक्तो भागान्निःसारितः । इहास्मिन्नार्त्विज्ये कर्मण्यब्राह्मणस्य भागो नास्ति । याजनस्य ब्राह्मणैकविषयत्वात् ।

अथ स्रुक्षु प्रस्तरस्याज्यमानस्यानुमन्त्रणे मन्त्रमाह—

समक्तं बर्हिर्हविषा घृतेन । समा-
दित्यैर्वसुभिः सं मरुद्भिः । समि-
न्द्रेण विश्वेभिर्देवेभिरक्ताम् । दिव्यं
नभो गच्छतु यत्स्वाहा, इति ।

इदं प्रस्ताराख्यं बर्हिर्घृतरूपेण हविषा समक्तं सम्यगक्तं भवतु । तथाऽऽदित्यवसुमरुदादिभिर्देवैर्घृतेन सम्यगज्यमानमस्तु । ततो दिव्यं द्योतमानं नभ आदित्याख्यं यत्तेजोऽस्ति तत्तेजोऽयं प्रस्तरः प्राप्नोतु । स्वाहा समर्पितोऽयं प्रस्तरः ।

अथ गार्हपत्यस्य दक्षिणत उपविष्टायाः पत्न्या जपार्थं मन्त्रमाह—

इन्द्राणीवाविधवा भूयासम् । अदितिरिव

सुपुत्रा। अस्थूरि त्वा गार्हपत्य (१०)।
उपनिषदे सुप्रजास्त्वाय, इति।

इन्द्रस्य पत्नीन्द्राणी सा कदाचिदपि विधवा न भवति तद्वदहमपि यावज्जीवमविधवा भूयासम्। अदितिर्देवमाता तद्वदहं सुपुत्रा भूयासम्। हे गार्हपत्यास्थूरि सर्वार्थसाधनसंपूर्णं त्वां सुप्रजास्त्वाय शोभनापत्यत्वसिद्ध्य उपनिषद उपेत्य निषीदामि।

अथ संपत्नीयहोममन्त्रमाह–

सं पत्नी पत्या सुकृतेन गच्छताम्। यज्ञस्य
युक्तौ धुर्यावभूताम्। संजानानौ विजहतामरातीः। दिवि ज्योतिरजरमारभेताम्, इति।

पत्या सहिता येयं पत्नी सा सुकृतेन सुष्ठु संपादितेन कर्मफलेन संगच्छताम्। तावुभौ युक्तौ परस्परसंबद्धौ यज्ञस्य धुर्यौ भारवाहकावभूतां यज्ञमनुतिष्ठतामित्यर्थः। संजानानौ परस्परमैकमत्यं गतावरातीः शत्रुं विजहतां विनाशयताम्। दिवि द्युलोकस्थितमजरं जरारहितं ज्योतिरादित्यात्मकमारभेतामाभिमुख्येन प्राप्नुताम्।

अथ नारिष्ठहोमार्थाश्चत्वारो मन्त्राः। तत्र प्रथममन्त्रमाह–

दश ते तनुवो यज्ञ यज्ञियाः। ताः
प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्रशिषमीडमानः। देवानां
दैव्येऽपि यजमानोऽमृतोऽभूत्, इति।

हे यज्ञ तदभिमानिदेवते तव यज्ञिया यज्ञयोग्यास्तनवः शरीराणि दशसंख्याकाः सन्ति। ताः सर्वास्तनूर्यजमानो घृतेन प्रीणातु वर्धयतु। नारिष्ठयोर्यज्ञस्य नेतारो यजमाना नरास्तेषां संबन्धिनो नारास्तेष्वतिशययुक्तौ नारिष्ठावग्निवायू जाठराग्निः प्राणवायुश्चातिशयेन नरेण संबद्धौ तयोर्नारिष्ठयोर्देवयोः प्रशिषं प्रकृष्टं शासनमीडमानः स्तुवन्यजमान इह देवानां संबन्धी सन्दैव्ये देवयोग्ये स्वर्गेऽप्यमृतो देवोऽभूत्।

अथ द्वितीयमाह—

यं वां देवा अकल्पयन् ( ११ )।
ऊर्जो भागꣳ शतक्रतू। एतद्वां तेन
प्रीणानि। तेन तृप्यतमꣳहहौ, इति।

हे शतक्रतू शतसंख्याककर्मनिष्पादकौ नारिष्ठौ वां युवयोरूर्जो रसस्य यं भागं देवा अकल्पयंस्तदेतदिदानीं मया दीयत इति शेषः। तेन दत्तेन वां युवामुभौ प्रीणानि प्रीतौ करोमि। तेन भागेन हेंऽहहावंहसः पापस्य हन्तारौ युवां तृप्यतम्।

अथ तृतीयमाह—

अहं देवानाꣳ सुकृतामस्मि लोके। ममेदमिष्टं
न मिथुर्भवाति। अहं नारिष्ठावनुयजामि
विद्वान्। यदाभ्यामिन्द्रो अदधाद्भागधेयम्, इति।

सुकृतां शोभनकर्मणां देवानां संबन्धिनि लोकेऽहमस्मि भूयासं मम संबन्धि यदिष्टं कर्म तदिदं मिथुर्न भवाति मिथ्या न भवत्यवश्यं फलप्रदमित्यर्थः। अहं नारिष्ठौ देवौ विद्वांस्तदीयमहिमानं जानन्ननुयजाम्यनुकूलां पूजां करोमि। यद्यस्मात्कारणादाभ्यां नारिष्ठाभ्यामिन्द्रो भागधेयं हविर्भागमदधात्संपादितवान्। तस्माद्यजामीति पूर्वत्रान्वयः।

अथ चतुर्थमाह—

अदारसृद्भवत देव सोम। अस्मिन्यज्ञे मरुतो
मृडता नः। मा नो विददभिभामो अशस्तिः
( १२ )। मा नो विदद्वृजना द्वेष्या या, इति।

हे देव सोम त्वमदारसृद्भवत दाराणामस्मदीयानां पत्नीनामस्रंसयिता भव पालको भवेत्यर्थः। हे मरुतो देवा यूयमस्मिन्यज्ञे नोऽस्मान्मृडता सुखयत। भामो भवदीयः क्रोधो नोऽभ्यस्मदाभिमुख्येन मा विदन्मा प्राप्नोतु। तथाऽशस्तिरपकीर्तिः

---

१ क. °र्नोऽन्नस्य।

शत्रुकृता नोऽस्मान्मा विदन्मा प्राप्नोतु । द्वेष्या वृजना द्वेष्यमन्यदपि पापं यदस्ति तन्मा प्राप्नोतु ।

अथ पौर्णमास्यां पार्वणहोमे मन्त्रमाह—

ऋषभं वाजिनं वयम् । पूर्णमासं यजामहे । स नो दोहताꣳ सुवीर्यम् । रायस्पोषꣳ सहस्रिणम् । प्राणाय सुराधसे । पूर्णमासाय स्वाहा, इति ।

ऋषभं श्रेष्ठं वाजिनमन्नवन्तं पूर्णमासमेतन्नामकं देवं वयं यजमाहे । स च देवः सुराधसे शोभनधनहेतवे प्राणाय प्राणवृत्तिस्थित्यर्थं नोऽस्माकं सुवीर्यं शोभनापत्ययुक्तं सहस्रिणं सहस्रसंख्यायुक्तं रायस्पोषं धनपुष्टिं दोहतां दोग्धां संपादयत्वित्यर्थः । पूर्णमासाय देवाय स्वाहेदं हविः स्वाहुतमस्तु ।

अमावास्यायां पार्वणहोममन्त्रमाह—

अमावास्या सुभगा सुशेवा । धेनुरिव भूय आप्यायमाना । सा नो दोहताꣳ सुवीर्यम् । रायस्पोषꣳ सहस्रिणम् । अपानाय सुराधसे । अमावास्यायै स्वाहा, इति ।

इयममावास्या देवता सुभगा सौभाग्ययुक्ता सुशेवा सुष्ठु सेवितुं योग्या । यथा धेनुः प्रतिदिनं क्षीरं प्रयच्छति पुनः पुनराप्याययति, एवमियममावास्या प्रतिमासं भूयो देवानामाप्याययति । सा न इत्यादि पूर्ववत् । अपानायापानवृत्तिस्थित्यर्थम् ।

अथ होतुरुपवेशनाधारैर्दर्भैर्वेद्या अभिस्तरणे मन्त्रमाह—

अभिस्तृणीहि परिधेहि वेदिम् । जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरिताः सुवर्णाः । निष्का इमे यजमानस्य ब्रध्ने, इति ।

अभीत्वर्थं करोमि क्रमीप्सिताऽऽत्मनं एकतोमुखां मे दिशोऽध्यक्षेभ्यो हवि-

गार्हपत्याकल्पयन्नशस्तिः सा नो दोहताꣳ सुवीर्यꣳ[१] सम च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

हे दर्भाभिस्तृणीह्यभित आस्तीर्णो भव । वेदिं परिधेह्याच्छादय । अमुया वेद्या सह शयाना शयनं प्राप्तस्त्वं जामिं जायमानां प्रजां मा हिंसीः । होतृषदना होता येषु दर्भेषु निषीदति तादृशा दर्भा हरिता हरितवर्णाः सुवर्णाः शोभनच्छाया इमे पुरतो वर्तमानाः सन्तो यजमानस्य ब्रध्ने कर्मफलभूत आदित्यलोके निष्का अलंकाराः सन्तु ।

अथ विनियोगसंग्रहः—

देवाः स्वामिजपायेदमङ्गाराणामपोहनम् ।
हविर्भिन्नयते सूर्य आप्यायेत्यभिघारयेत् ॥
स्योनं पात्र्यामुपस्तीर्य तस्मिन्निति हविः क्षिपेत् ।
आर्द्रेति हविरुद्वास्य यस्ते दोहाभिघारणम् ॥
इरा कपालान्यभ्यज्य देवास्तु प्रवरे जपेत् ।
मा भे हविरवद्येत यदा प्रत्यभिघारयेत् ॥
अघ्न्या प्राशित्रावदानं मनुनेडामवद्यति ।
इडे प्राश्नन्ति तां ब्रध्न पुरोडाशमभिस्पृशेत् ॥
आशा प्रतिदिशं व्यूहेत्समक्तां प्रस्तराञ्जनम् ।
इन्द्राणीति जपेत्पत्नी सं पत्नीति जुहोति हि ॥
दशेति नारिष्ठहोम ऋषभं पूर्णिमाहुतिः ।
अमेति दर्शहोमः स्यादभि वेदिं स्तृणाति हि ॥

अथ मीमांसा । नवमाध्यायस्य द्वितीयपादे चिन्तितम्—

संकीर्णौ संघयोर्होमौ न वा प्रकरणादुभौ ।
संकीर्णावुपकार्यस्य भेदादेतौ व्यवस्थितौ ॥

दर्शपूर्णमासप्रकरणे पठितत्वात्प्रयाजादिवद्दर्शेऽपि होमद्वयं कर्तव्यम् । पूर्णमासेऽपि तथेति चेत् । मैवम् । उपकार्ययोः संघयोर्व्यवस्थितत्वेनोपकारकयोर्होमयोरपि व्यवस्थाया युक्तत्वात् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

१ क. 'होमा ऋ' ।

अथ षष्ठोऽनुवाकः ।

चतुर्थपञ्चमयोरनुवाकयोरनुक्ताः परिशिष्टा ये मन्त्रास्ते सर्वे षष्ठेऽस्मिन्ननुवाकेऽभिधीयन्ते । तत्र दोहादूर्ध्वं प्रैषमन्त्रमाह—

परिस्तृणीत परिधत्ताग्निम् । परिहितोऽग्निर्यजमानं भुनक्तु । अपाꣳ रस ओषधीनाꣳ सुवर्णः । निष्का इमे यजमानस्य सन्तु कामदुघाः । अमुत्रामुष्मिँल्लोके, इति ।

हे दर्भा अग्निं परिस्तृणीत परित आच्छादयत । परिधत्त परितो धारयत । परिहितो युष्माभिः परितो धारितोऽग्निर्यजमानं भुनक्तु पालयतु । अयं दर्भसमूहोऽपां रसः सारभूत ओषधीनां मध्ये सुवर्णः शोभनवर्णोपेतः । इमे दर्भा यजमानस्यामुत्र परलोके तत्राप्यमुष्मिन्निन्द्रादिलोके निष्का अलंकारभूता कामदुघाः सन्तु ।

अथ ब्रह्मणो वरणे मन्त्रमाह—

भूपते भुवनपते । महतो भूतस्य पते । ब्रह्माणं त्वा वृणीमहे, इति ।

हे भूपते भूमेः पालक भुवनपतेऽन्तरिक्षपालक महतो भूतस्य पते द्युलोकस्यापि पालक त्वां वृणीमहे ।

अथ वृतस्य ब्रह्मणो जप्यं मन्त्रमाह—

अहं भूपतिरहं भुवनपतिः । अहं महतो भूतस्य पतिः (१) । देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि । देवसवितरेतं त्वा वृणते । बृहस्पतिं दैव्यं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि । मनो गायत्रियै । गायत्री

त्रिष्टुभे । त्रिष्टुब्जगत्यै । जगत्यनुष्टुभे । अनुष्टुक् पङ्क्त्यै । पङ्क्तिः प्रजापतये (२) । प्रजापतिर्विश्वेभ्यो देवेभ्यः । विश्वे देवा बृहस्पतये । बृहस्पतिर्ब्रह्मणे । ब्रह्म भूर्भुवः सुवः । बृहस्पतिर्देवानां ब्रह्मा । अहं मनुष्याणाम् । बृहस्पते यज्ञं गोपाय, इति ।

यजमानोक्तप्रकारेणाहं भूम्यादिलोकत्रयस्य पालकोऽस्मि । तत्पालकदेवरूपेण भावितत्वात्तादृशोऽहं सवित्रा प्रेरकेण देवेन प्रसूतोऽनुज्ञातः सन्नार्त्विज्यं करिष्यामि । हे सवितर्देव त्वामेवैतं ब्रह्माणं सर्वे यजमाना वृणते । कीदृशं त्वां बृहस्पतिरूपेणावस्थितं दैव्यं देवसंबन्धिनं ब्रह्माणं ब्राह्मणजातिम् । तत्सर्वं वृत्तान्तजातमहं मनसे मनोभिमानिने देवाय प्रब्रवीमि । मनोदेवश्च गायत्रियै देवतायै प्रब्रवीति । एवं गायत्र्यादयस्त्रिष्टुबादिभ्यो ब्रह्मपर्यन्तेभ्यो ब्रुवन्ति । तत्र ब्रह्मा(ह्म) भूरादिलोकत्रयात्मकम् । देवानां मध्ये बृहस्पतिरेव ब्रह्मा मनुष्याणां मध्येऽहं ब्रह्मा । हे बृहस्पते यज्ञमिमं गोपाय रक्ष । अहमपि त्वत्प्रसादाद्रक्षामीत्यभिप्रायः ।

अथाऽऽग्नीध्रेणाभिगृह्यमाणस्योत्करस्यानुमन्त्रणे मन्त्रमाह—

इदं तस्मै हर्म्यं करोमि । यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्वी (३) । अन्तर्दूतश्चरति मानुषीषु, इति ।

हे देवा वो युष्मानुद्दिश्य [यो] ब्रह्मचर्यं चरति नियमं करोति तस्मै नियमवत इदमिदानीं हर्म्यं निवासस्थानं करोमि । स ब्रह्मचारी मेधावी प्रज्ञावान् । तपस्वी नित्यं तपोयुक्तः । मानुषीषु मनुष्ययोग्यासु दिक्ष्वन्तर्मध्ये मनसा विवेकेन युक्तः सन्दूतश्चरति हिताहितप्राप्तिपरिहारोपायज्ञो वर्तते ।

अथ वेदेन संमृज्यमानाया वेदेरनुमन्त्रणे मन्त्रमाह—

चतुःशिखण्डा युवतिः सुपेशाः । घृतप्रतीका

भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय ।
मह्यं धुक्ष्व यजमानाय कामान्, इति ।

चतुःशिखण्डा चतुर्भिर्भूषणस्थानीयैर्युक्ता चतुष्कोणा वा युवतिराकारेण युवतिसदृशी यथा युवतिर्मध्ये संनततरा तथा वेदिरपि । अत एव सुपेशाः शोभनरूपयुक्ता घृतप्रतीका घृतोपक्रमा तस्यां हि वेद्यां प्रथमं घृतं स्थाप्यते । सा च भुवनस्य समस्तलोकस्य मध्ये यजमानस्य मम महते सौभगाय मर्मृज्यमाना वेदेन भृशं शोध्यमाना वर्तते । तथाविधे हे वेदे यजमानाय मह्यं कामान्धुक्ष्व संपादय ।

अथ क्रियमाणाया वेदेरनुमन्त्रणमाह—

भूमिर्भूत्वा महिमानं पुपोष । ततो
देवी वर्धयते पयांसि । यज्ञिया
यज्ञं वि च यन्ति शं च । ओष-
धीरापं इह शक्करीश्च, इति ।

इयं वेदिर्भूमिर्भूत्वा सर्वत्र पृथिवीभावेन वर्तमाना महिमानं माहात्म्यं पुपोष पुष्णाति । तत इयं वेदिर्देवीरूपा यागद्वारेण पयांसि वृष्टिजलानि वर्धयते । ततो जलवृद्धेरूर्ध्वं यज्ञिया यज्ञसंपादनार्हा ओषध्य आपः शक्र्यः पशवश्चेह वेद्यां यज्ञं वियन्ति च विविधं प्राप्नुवन्त्यपि । ततः शं च सुखमपि प्रयच्छन्तीति शेषः ।

अथाऽऽह्रियमाणस्य स्तम्बयजुषोऽनुमन्त्रणे मन्त्रमाह—

यो मा हृदा मनसा यश्च वाचा
(४) । यो ब्रह्मणा कर्मणा द्वेष्टि
देवाः । यः श्रुतेन हृदयेनेष्णता च ।
तस्येन्द्र वज्रेण शिरश्छिनद्मि, इति ।

हे देवा यः शत्रुर्मा हृदा तात्पर्ययुक्तेन मनसा द्वेष्टि यश्च वाचाऽधिक्षेपं-

१ क. °पपरया य° ।

तया द्वेष्टि। यश्च ब्रह्मणा ब्रह्मवर्चसेन वेदाध्ययनादिना वा कर्मणा तपोऽतिशयेन दानेन वा द्वेष्टि मात्सर्यं करोतीत्यर्थः। यश्च श्रुतेन बहुशास्त्रश्रवणेनैष्णतैषणशीलेनेदं धनादिकं ममैव भूयादित्येवंरूपेण हृदयेन च द्वेष्टि। हे इन्द्र तस्य सर्वस्य शत्रोः शिरस्त्वदीयेन वज्रेण स्फ्यरूपेण च्छिनद्मि।

अथ समास्तीर्णस्य बर्हिषोऽनुमन्त्रणे मन्त्रमाह---

ऊर्णाम्रदु प्रथमानꣳ स्योनम्। देवेभ्यो जुष्टꣳ सदनाय बर्हिः। सुवर्गे लोके यजमानꣳ हि धेहि। मां नाकस्य पृष्ठे परमे व्योमन्, इति।

ऊर्णाम्रदु कम्बलवन्म्रदुस्वरूपं प्रथमानं विस्तारयुक्तं स्योनं सुखकरमिदं बर्हिः सदनायोपवेशनाय देवेभ्यो जुष्टं देवानां प्रियं हे तादृग्बर्हिर्नाकस्य पृष्ठे दुःखरहितस्य स्थानस्योपरिभागे परम उत्कृष्टेऽत एव व्योमन्विशेषेण रक्षके स्वर्गलोके यजमानं मां धेहि स्थापय। हिशब्दोऽवधारणे। सर्वथा स्थापयेत्यर्थः।

अथ बर्हिषाऽऽस्तीर्यमाणाया वेदेरनुमन्त्रणे मन्त्रमाह--

चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रतीका वयुनानि वस्ते। सा स्तीर्यमाणा महते सौभगाय (५)। सा मे धुक्ष्व यजमानाय कामान्। शिवा च मे शग्मा चैधि। स्योना च मे सुषदा चैधि। ऊर्जस्वती च मे पयस्वती चैधि। इषमूर्जं मे पिन्वस्व। ब्रह्मतेजो मे पिन्वस्व। क्षत्रमोजो मे पिन्वस्व। विशं पुष्टिं मे पिन्वस्व। आयुरन्नाद्यं मे पिन्वस्व। प्रजां पशून्मे पिन्वस्व (६), इति।

घृतप्रतीकेत्यन्तं पूर्ववद्व्याख्येयम्। तादृशी वेदिर्वयुनानि कमनीयानि बर्हींषि वस्ते वस्त्रवदाच्छायति। सा तादृशी वेदिर्यजमानस्य महते सौभगाय बर्हिषा स्तीर्यमाणा वर्तते। हे वेदे सा त्वं यजमानाय मे कामान्धुक्ष्व संपादय। किंच मे मदर्थं शिवा च शान्तोपद्रवा च शग्मा सर्वकार्यशक्ता चैधि भव। तथा स्योना च सुखहेतुश्च सुषदा च सुष्ठुप्रवेशनयोग्या चैधि। तथोर्जस्वती बलवती पयस्वती क्षीरादिमती चैधि। तथेषमन्नमूर्जं दुग्धादिरसं च मे मदर्थं पिन्वस्व वर्धय। ब्रह्मा-ध्ययनादिसंपत्तिं तेजस्तन्निमित्तां कीर्तिं च मे पिन्वस्व। तथा क्षत्रं बलमोजः कान्तिं मे मदर्थं पिन्वस्व। विशं प्रजां शरीरपुष्टिं च मे पिन्वस्व। अथवा ब्रह्म-क्षत्रविशो वर्णत्रययुक्ताः प्रजाः। आयुः शतसंवत्सरोपेतमन्नाद्यमन्नादनसामर्थ्यं प्रजां पुत्रादीन्पशून्गवादीन्।

अथ परिधिषु परिधीयमानेष्वनुमन्त्रणे मन्त्रमाह—

अस्मिन्यज्ञ उप भूय इन्नु मे। अविक्षोभाय
परिधीन्दधामि। धर्ता धरुणो धरीयान्।
अग्निर्द्वेषाꣳसि निरितो नुदातै, इति।

अस्मिन्यज्ञे भूय इन्नु पुनः पुनरेव मे यजमानस्याविक्षोभाय चलनाभावाय परिधीनुपदधामि समीपे स्थापयामि। ते च परिधयस्त्रयोऽपि धारणशक्तियुक्ताः क्रमेण धर्तादिशब्दैस्त्रिभिरुच्यन्ते। तैः परिधिभिर्युक्तोऽग्निर्द्वेषांसि द्वेष्याणि रक्षः-प्रभृतीनितो यज्ञस्थानान्निर्णुदातै निष्कृत्य नाशयतु।

अथ वेदेर्मध्ये तिर्यक्त्वेन साद्यमानयोर्विधृत्याख्ययोर्दर्भयोरनुमन्त्रणे मन्त्रमाह—

विच्छिनाद्मि विधृतीभ्याꣳ सपत्नान्। जाता-
न्भ्रातृव्यान्ये च जनिष्यमाणाः। विशो-
यन्त्राभ्यां विधमाम्येनान्। अहꣳ स्वानामुत्त-
मोऽसानि देवाः। विशो यन्त्रे नुदमाने अरा-
तिम्। विश्वं पाप्मानममतिं दुर्मरायुम् (७)।

१ क. ख. सुष्ठु प्रवे°।

सीदन्ती देवी सुकृतस्य लोके । धृती स्थो विधृती स्वधृती । प्राणान्मयि धारयतम् । प्रजां मयि धारयतम् । पशून्मयि धारयतम्, इति ।

विविधमधोऽवस्थितो बर्हिषः पृथक्त्वेन प्रस्तरो धार्यत आभ्यामिति विधृती ताभ्यां संपत्नाञ्शत्रून्विच्छिनद्मि विनाशयामि । एवं सामान्येनोक्त्वा पुनर्विशेषेणोच्यते—जातान्पूर्वमुत्पन्नान्भ्रातृव्यान्विच्छिनद्मि । ये चान्ये जनिष्यमाणा भ्रातृव्याः शत्रव एनान्भ्रातृव्यान्विशः प्रजाया यन्त्राभ्यां नियमनसाधकाभ्यां दर्भाभ्यां विधमामि विनाशयामि । प्रजानियमनहेतुत्वम् “ विशोयन्त्रे स्थः ” इत्यस्मिन्नपि मन्त्रे समाम्नातम् । हे देवा अहं स्वानामात्मीयानां जनानां मध्य उत्तमोऽस्म्युत्कृष्टो भूयासम् । विशो यन्त्रे प्रजाया नियामके अरातिं शत्रुं नुदमाने विनाशयन्त्यौ तथा विश्वं पाप्मानं समस्तमपि पापममतिं रोगं दुर्मरायुं दुर्मरणहेतुं च नुदमाने सुकृतस्य लोके सीदन्ती अस्मिन्स्थाने तिष्ठन्त्यौ देवी द्योतनवत्यौ तादृश्यौ हे विधृती युवां धृती स्थः सर्वस्य जगतो धारयित्र्यौ स्थः । स्वधृती स्वायत्तधारणशक्तियुक्ते स्थः । तादृश्यौ युवां मयि प्राणान्धारयतं स्थापयतम् ।

अथ साद्यमानस्य प्रस्तरस्यानुमन्त्रणे मन्त्रमाह—

अयं प्रस्तर उभयस्य धर्ता । धर्ता प्रयाजानामुतानूयाजानाम् । स दाधार समिधो विश्वरूपाः । तस्मिन्त्स्रुचो अध्यासादयामि, इति ।

अयं साद्यमानः प्रस्तराख्यो दर्भमुष्टिरुभयस्य जुहूपभृल्लक्षणस्य धर्ता धारयिता । उतापि च प्रयाजार्थानामनूयाजार्थानां चाऽऽज्यानां धारयिता । अत एव स प्रस्तर आज्यधारणद्वारा विश्वरूपा नानाविधरूपयुक्ताः समिधः समिदाद्याः प्रयाजदेवता दाधार धारयति । तस्मिन्नेवंविधे प्रस्तरे स्रुचो जुह्वादिका अध्यासादयाम्युपरि स्थापयामि ।

अथ प्रस्तरे साद्यमानाया जुह्वा अनुमन्त्रणे मन्त्रमाह—

आरोह पथो जुहु देवयानान् (८) । यत्रर्षयः प्रथमजा ये पुराणाः । हिरण्यपक्षाऽजिरा संभृ-

ताङ्गा । वहा॑सि मा सुकृतां यत्र॑ लोकाः, इति ।

हे जुहु देवयानान्देवानां गमनयोग्यान्पथो मार्गानारोह । ये महर्षयः पुराणा अनादिसिद्धा वसिष्ठादयस्ते प्रथमजा अस्मत्तः पूर्वजा यत्र येषु कर्मानुष्ठानमार्गेषु वर्तन्ते तानारोहेति पूर्वेणान्वयः । हिरण्यपक्षा हितरमणीयपार्श्वाऽजिरा होमस्थाने गमनशीला संभृताङ्गा संपूर्णावयवेदृशी त्वं सुकृतां पुण्यवतां लोका भोगभूमयो यत्र सन्ति तत्र मां वहासि प्रापय ।

अथ साद्यमानाया उपभृतोऽनुमन्त्रणे मन्त्रमाह—

अवाहं बा॑ध उपभृता॑ सपत्नान् ।
जातान्भ्रातृ॑व्यान्ये च॑ जनिष्यमा॑णाः ।
दोहे॑ यज्ञꣳ सुदुघा॑मिव धेनुम् । अहमु-
त्त॑रो भूयासम् । अध॑रे मत्सपत्ना॑ः, इति ।

अहमनयोपभृता सपत्नानवबाधे विनाशयामि । जातानित्यादि पूर्ववत् । सुदुघां सुष्ठु दोहनयोग्यां धेनुमिव यज्ञमहं दोहै यज्ञसाधनभूताया उपभृतो दोहनं करवाणि तज्जन्यं फलं संपादयामीत्यर्थः । ततोऽहमितरेषु यजमानेषूत्तर उत्कृष्टो भूयासम् । मत्सपत्ना अधरे निकृष्टाः सन्तु ।

अथ साद्यमानाया ध्रुवाया अनुमन्त्रणे मन्त्रमाह—

यो मा॑ वाचा मन॑सा दुर्मरायुः । हृदाऽ-
रा॑तीयाद॑भिदास॑दग्ने (९) । इदम॑स्य
चित्तमध॑रं ध्रुवाया॑ः । अहमुत्त॑रो भूयासम् ।
अध॑रे मत्सपत्ना॑ः, इति ।

यः शत्रुर्वाचा मनसा च मा मां दुर्मरायुर्दुर्मरणमिच्छन्हृदा स्वकीयेन मनसाऽरातीयाच्छत्रुत्वमिच्छेत् । हेऽग्नेऽभिदासदभितो हिंसां कुर्वदस्य शत्रोश्चित्तमिदं ध्रुवाया अधरमधस्तान्न्यग्भूतत्वेनावस्थितं विनष्टप्रायमेव भवत्विति शेषः । अहमुत्तर इत्यादि पूर्ववत् ।

---

१ क. पूर्वेणान्व° ।

अथ जुह्वा दक्षिणभागे स्रुवस्य सादने मन्त्रमाह-

ऋषभोऽसि शाक्वरः। घृताचीनाꣳ सूनुः।
प्रियेण नाम्ना प्रिये सदसि सीद, इति।

हे स्रुवर्षभः श्रेष्ठः शाक्वरः शक्तियुक्तो घृताचीनां घृतप्राप्तियुक्तानां जुह्वादीनां सूनुः पुत्रस्थानीयश्चासि। प्रियेण नाम्ना स्रुवाख्येन(ण) युक्तः प्रिये सदसि जुहूपार्श्वस्थाने सीद।

अथ तस्य साद्यमानस्य स्रुवस्यानुमन्त्रणे मन्त्रमाह-

स्योनो मे सीद सुषदः पृथिव्याम्। प्रथयि
प्रजया पशुभिः सुवर्गे लोके। दिवि सीद
पृथिव्यामन्तरिक्षे। अहमुत्तरो भूयासम्
(१०)। अधरे मत्सपत्नाः, इति।

हे स्रुव सुषदः सुखेन सादनीयस्त्वं मे स्योनः सुखहेतुरत्र स्थाने सीद। अहमपि पृथिव्यां प्रजया पशुभिश्च प्रथयि प्रथितः स्याम्। तथा सुवर्गे लोके च प्रथितः स्याम्। त्वं द्युलोकादिस्वरूपेऽस्मिन्स्थाने सीद। अहमित्यादि पूर्ववत्।

अथ साद्यमानाया आज्यस्थाल्या अनुमन्त्रणे मन्त्रमाह—

इयꣳ स्थाली घृतस्य पूर्णा।
अच्छिन्नपयाः शतधार उत्सः।
मारुतेन शर्मणा दैव्येन, इति।

इयमाज्यस्थाली घृतस्य पूर्णा घृतेन पूरिता वर्तते। तत्र दृष्टान्तो यथोत्सः प्रवाहस्तद्वत्। कीदृश उत्सो दैव्येन शर्मणा देवसंबन्धिना सुखहेतुना मारुतेन वायुनाऽच्छिन्नपया अक्षीणोदको वर्षर्तौ वायौ वाति सति प्रवाहजलमविच्छिन्नमत्स्यन्दते। अत एव शतधारोऽनेकधारायुक्तः।

अथाऽऽसन्नस्य पुरोडाशस्याऽऽग्नेयस्याभिमर्शने मन्त्रमाह—

यज्ञोऽसि सर्वतः श्रितः। सर्वतो मां भूतं

भविष्यच्छ्रूयताम् । शतं मे सन्त्वाशिषः ।
सहस्रं मे सन्तु सूनृताः । इरावतीः पशु-
मतीः । प्रजापतिरसि सर्वतः श्रितः (११) ।
सर्वतो मां भूतं भविष्यच्छ्रूयताम् । शतं
मे सन्त्वाशिषः । सहस्रं मे सन्तु सूनृताः ।
इरावतीः पशुमतीः, इति ।

हे आग्नेय पुरोडाश त्वमेव सर्वतः श्रितः सर्वेणापि प्रकारेण सेवितो यज्ञो यज्ञहेतुरसि । अतस्त्वादृशेन त्वया सह येन मामपि भूतं भविष्यच्च पुत्रपौत्रादि-रूपं फलं श्रयतां सेवताम् । किंच मे ममाऽऽशिषः प्रार्थनीयाः कामाः शतं सन्तु बहुतरा भवन्तु । तथा सूनृताः प्रिया वाचो मम सहस्रसंख्याकाः सन्तु । कीदृ-श्यः सूनृता या इरावतीरन्नवत्यः पशुमतीः पशुमत्यः । पश्वन्नादेर्दातारं पुरुषं बहुधा स्तुवन्ति ताः प्रिया वाचो भवन्ति । हे पुरोडाश त्वं वृष्ट्यादिना सर्वस्थि-तिहेतुत्वात्प्रजापतिरेवासि । सर्वतः श्रित इत्यादि पूर्ववत् ।

अथ पक्के पयसि सादिते सत्यभिमर्शने मन्त्रमाह—

इदमिन्द्रियममृतं वीर्यम् । अनेनेन्द्राय
पशवोऽचिकित्सन् । तेन देवा अवतोप
माम् । इहेषमूर्जं यशः सह ओजः सनेयम् ।
शृतं मयि श्रयताम् , इति ।

इदं क्षीरमिन्द्रियमिन्द्रेण जुष्टममृतं यागसाधनत्वेन विनाशरहितं वीर्यं वीर्य-प्रदम् । अनेन क्षीरेणेन्द्रार्थं पशवोऽचिकित्सन्नारोग्यमकुर्वन् । पशुभिः क्षीराख्ये हविषि संपादिते सति योऽयमिन्द्रस्य परितोषः सैवानिष्टस्य चिकित्सा । हे देवा-स्तेनानेन पयसेहास्मिन्कर्मणि वर्तमानं मामुपावतोपेत्य रक्षत । ततो युष्मत्प्रसादा-दहमिषमूर्जं क्षीरादिरसं यशः कीर्तिं सहो बलमोजो बलकारणधातुपोषं च सनेयं लभेय । शृतं चेदं क्षीरं मयि श्रयतां पुनः पुनर्मामेव भजताम् ।

---

१ क. 'हुधा भ' ।

अथाऽऽसन्नस्य दध्नोऽभिमर्शने मन्त्रमाह——

यत्पृथिवीमचरत्तत्प्रविष्टम् ( १२ )। येना-
सिञ्चद्बलमिन्द्रे प्रजापतिः। इदं तच्छुक्रं
मधु वाजिनीवत्। येनोपरिष्टादधिनो-
न्महेन्द्रम्। दधि मां धिनोतु, इति।

यत्प्रसिद्धं दधि पृथिवीं सांनाय्यकुम्भिरूपां प्रविष्टं सत्, अचरत्तत्रैवावस्थित-मासीत्। येन दध्ना प्रजापतिरिन्द्रे बलमसिञ्चत्स्थापितवान्। एतच्च प्रजापतिः पशूनब्रवीदेतदस्मै संनयतेत्यादिब्राह्मणे स्पष्टमुक्तम्। येन दध्नोपरिष्टाच्छृतावस्थाया अभ्यूर्ध्वं वर्तमानेन महेन्द्रदेवमधिनोत्प्रजापतिरप्रीणयत्। तदिदं दधि शुक्रं निर्मलं मधुररसोपेतं वाजिनीवद्विशिष्टगतिमत्कर्मप्रवृत्तिकारणमित्यर्थः। तद्दधि मामपि महेन्द्रमिव धिनोतु प्रीणयतु।

अथाग्रेणोत्तरेण वा ध्रुवां वेदस्य निधाने मन्त्रमाह——

अयं वेदः पृथिवीमन्वविन्दत्। गुहा सतीं गहने
गह्वरेषु। स विन्दतु यजमानाय लोकम्। अच्छिद्रं
यज्ञं भूरिकर्मा करोतु, इति।

अयं वेदः पृथिवीं वेदरूपामसुरेभ्योऽन्वविन्ददनुक्रमेणालभत। अत एव ब्राह्मणमाम्नायते—"वेदेन वै देवा असुराणां वित्तम्" इत्यादि। कीदृशीं पृथिवीं गुहा गोप्यस्थाने तत्रापि गहने द्रष्टुमशक्ये स्थाने तत्रापि गह्वरेषु दुष्प्रा-प्येषु प्रदेशेषु सतीं वर्तमानाम्। तथा च ब्राह्मणमाम्नातम्—"वराहोऽयं वाममोषः सप्तानां गिरीणां परस्तात्" इत्यादि। स तादृशो वेदो यजमानार्थं लोकं स्थान-विशेषं विन्दतु लभताम्। तत्सिद्ध्यर्थं भूरिकर्मा बहुव्यापारोऽयं वेदो यज्ञम-च्छिद्रमविकलं करोतु।

अथाऽऽसन्नानां सर्वेषां हविषामभिमर्शने मन्त्रमाह——

अयं यज्ञः समसदद्धविष्मान्। ऋचा साम्ना यजुषा
देवताभिः ( १३ )। तेन लोकान्त्सूर्यवतो जयेम।
इन्द्रस्य सख्यममृतत्वमश्याम्, इति।

अयं प्रवर्तमानो यज्ञो हविष्मान्बहुभिर्हविर्भिर्युक्त ऋगादिमन्त्रैर्देवताभिश्च युक्तः समसदत्सम्यगिह सीदति । यद्यपि दर्शपूर्णमासयोर्नास्ति साम तथाऽपि सामप्रतिनिधिरूपम् 'अग्न आयाहि' इत्यादिमन्त्रजातं विद्यते । तथा च ब्राह्मणमाम्नातम्—"अग्न आयाहि वीतय इत्याह । रथंतरस्यैष वर्णः" इत्यादि । तेन यज्ञेन वयं सूर्यवतः सूर्यकिरणापहततमस्कांल्लोकाञ्जयेम । तत इन्द्रस्य सख्यं सखिवत्स्नेहविषयत्वममृतत्वं कर्मभोगानुरूपं चाश्यां व्याप्नुयाम् ।

अथाऽऽसन्नस्यैन्द्राग्नपुरोडाशस्याभिमन्त्रणे मन्त्रमाह—

यो नः कनीय इह कामयातै । अस्मिन्यज्ञे यजमानाय मह्यम् । अप तमिन्द्राग्नी भुवनान्नुदेताम् । अहं प्रजां वीरवतीं विदेय, इति ।

यः शत्रुर्नोऽस्मदीय इह कर्मणि कनीयोऽतिशयेनाल्पत्वमनुष्ठानवैकल्यं कामयातै कामयेत, तथाऽस्मिन्यज्ञे वर्तमानाय मह्यं यजमानाय फलाघातं कामयेत तं शत्रुमिन्द्राग्नी देवौ भुवनात्सर्वलोकादपनुदेताम् । तयोः प्रसादादहं वीरवतीं वीरैर्भृत्यैर्युक्तां प्रजां पुत्रादिरूपां विदेय लभेय ।

अथाऽऽग्नीध्रस्येध्मसंनहनैरग्निसंमार्गे मन्त्रमाह—

अग्ने वाजजित् । वाजं त्वा सरिष्यन्तम् । वाजं जेष्यन्तम् । वाजिनं वाजजितम् (१४) । वाजजित्यायै संमार्ज्मि । अग्निमन्नादमन्नाद्याय, इति ।

हेऽग्ने वाजजिद्वाजस्यान्नस्य जेतस्त्वां वाजजित्याया अन्नजयार्थं संमार्ज्मि दर्भैः सम्यक्शोधयामि । कीदृशं त्वां वाजमन्नमुद्दिश्य सरिष्यन्तं प्रवर्तिष्यमाणं तथा वाजमन्नमुद्दिश्य शत्रूञ्जेष्यन्तं जित्वा च वाजिनं बह्वन्नयुक्तं वाजजितमनेन प्रकारेण सर्वस्यान्नस्य जेतारम् । किंचान्नाद्यायान्नभक्षणसामर्थ्यायान्नादमन्नभक्षणसमर्थमग्निं संमार्ज्मि ।

अथाऽऽग्नीध्रभागस्य विशेषे व्यूहने मन्त्रमाह—

उपहूतो द्यौः पिता । उप मां द्यौः पिता

ह्वयताम्। अग्निराग्नीध्रात्। आयुषे वर्चसे।
जीवात्वै पुण्याय । उपहूता पृथिवी
माता। उप मां माता पृथिवी
ह्वयताम्। अग्निराग्नीध्रात् (१५)।
आयुषे वर्चसे। जीवात्वै पुण्याय, इति।

द्यौः पिता द्युलोकदेवोऽस्मत्पितृस्थानीय उपहूतोऽनुज्ञातः सोऽपि द्युलोकाख्यः पिता मामुपह्वयतामनुजानातु। तथैवाग्निः स्वयमुपहूतो मामप्युपह्वयताम्। कुतो हेतोराग्नीध्रादाग्नीध्रभागनिमित्तम्। तदपि किमर्थमस्माकमायुषे चिरजीवनाय वर्चसे बलाय जीवात्वै जीवनौषधाय पुण्याय सुकृतसिद्धये च। एवमियं पृथिवी देवता मातृस्थानीयोपहूतोपमामित्यादि पूर्ववत्।

अथेडाभक्षणाङ्गमार्जने मन्त्रमाह——

मनो ज्योतिर्जुषतामाज्यम् । विच्छिन्नं
यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं
नः। विश्वे देवा इह मादयन्ताम्, इति।

मनोभिमानी देवो ज्योतिः प्रकाशात्मकमिदमाज्यं जुषतां सेवताम्। विच्छिन्नं केनापि वैकल्येन युक्तमिमं यज्ञं संदधातु वैकल्यरहितं करोतु। बृहस्पतिर्देवो नोऽस्माकमिमं वैकल्यपरिहारं तनुतां कुरुताम्। विश्वे देवाश्चेह कर्मणि मादयन्तामस्मान्हर्षयन्तु।

अथ समिध्यानुयाजिक्यामाहितायामग्न्यभिमन्त्रणे मन्त्रमाह——

यं ते अग्न आवृश्चामि। अहं वा क्षिपितश्चरन्।
प्रजां च तस्य मूलं च। नीचैर्देवा निवृश्चत
(१६)। अग्ने यो नोऽभिदासति। समानो
यश्च निष्ट्यः। इध्मस्येव प्रक्षायतः। मा
तस्योच्छेषि किंचन। यो मां द्वेष्टि जात-

वेदः। यं चाहं द्वेष्मि यश्च माम्। सर्वाꣳस्ता-
नग्ने संदह। याꣳश्चाहं द्वेष्मि ये च माम्, इति।

हेऽग्ने ते त्वदीयोऽहं यं रिपुमावृश्चामि सर्वतो नाशयितुं प्रवृत्तोऽस्मि। हे पितः पालकाग्ने चरंस्त्वां परिचरन्नहं वा तेन रिपुणा क्षिपितः क्षयं नेतुं विक्रियाकृतोऽस्मि। तस्य दुरात्मनः प्रजां पुत्रादिकां मूलं जीवनहेतुं धनं च हे देवाः संनिहिता नीचैर्निवृश्चत न्यग्भूतं यथा भवति तथा नाशयत। हेऽग्ने यः प्रबलः शत्रुर्नोऽस्मानभिदासति हिनस्ति यश्चान्यः समानबलो निष्टयो नित्यं शत्रुत्वेनावस्थितो हिनस्ति तस्य द्विविधस्य शत्रोः संबन्धि द्रव्यं किंचन किमपि मोच्छेष्यवशिष्टं मा कुरु। तत्र दृष्टान्तः- इध्मस्येव प्रक्षायतो यथाऽग्नौ प्रक्षिप्तस्य प्रदाहेन क्षीयमाणस्य न कोऽप्यंशोऽवशिष्यते तद्वत्। हे जातवेदो यः शत्रुर्मां द्वेष्टि, अहं च यं द्वेष्मि। द्विविधो द्वेषः प्रत्यक्षः परोक्षश्च। प्रत्यक्षश्चोभयकर्तृको द्वेष उदाहृतः। परोक्षमुभयकर्तृकं द्वेषं सूचयितुं यश्च मामिति पुनरुक्तम्। एवं च सति द्वेष्यो द्वेष्टा च द्वौ प्रत्यक्षौ द्वौ परोक्षौ च तांश्चतुर्विधान्सर्वान्हेऽग्ने संदह सम्यग्भस्मी कुरु। यौ मुख्यौ द्वेष्यद्वेष्टारौ तद्द्वारा तदीया अन्येऽपि द्वेष्या द्वेष्टारश्च ये सन्ति तान्संग्रहीतुं यानिति पुनरुक्तिः। तान्सर्वान्संदहेति पूर्वत्रान्वयः।

अस्मिन्कर्मणि द्वावग्निसंमार्गौ स्रुच्याघारात्पूर्वमेकः संमार्गस्तत्र मन्त्रः पूर्वमभिहितः। अनूयाजसमिदाधानादूर्ध्वं द्वितीयः संमार्गः। तत्राऽऽह--

अग्ने वाजजित्। वाजं त्वा ससृवाꣳ-
सम् (१७)। वाजं जिगिवाꣳसम्।
वाजिनं वाजजितम्। वाजजित्यायै
संमार्ज्मि। अग्निमन्नादमन्नाद्याय, इति।

पूर्ववद्व्याख्येयम्। तत्र कार्यस्य निष्पत्स्यमानत्वात्सरिष्यन्तमित्युक्तम्। अत्र तु निष्पन्नत्वात्ससृवांसमिति विशेषः।

अथ हुतानामग्निसंमार्गाणां दर्भाणामभिमन्त्रणे मन्त्रमाह—

वेदिर्बर्हिः श्रितꣳ हविः। इध्मः परिधयः

---

१ क विषया क्॰।

स्रुचः। आज्यं यज्ञ ऋचो यजुः। याज्याश्च
वषट्काराः। सं मे संनतयो नमन्ताम्।
इध्मसंनहने हुते (१८), इति।

भितमासादितं हविः। वेद्यादयो वषट्कारान्ताः सर्वे संनतयः संनमनशीलाः सन्तो मे मदर्थं संनमन्तां पुनः पुनर्विधेया भूयो वर्तन्ताम्। कस्मिन्काल इति तदुच्यते—इध्मसंनहन इध्मबन्धनहेतौ दर्भे हुते सति संनमन्तामित्यन्वयः।

अथ यत्प्रस्तरात्तृणमपात्तं तस्मिन्नग्नौ प्रहियमाणे सति जप्यं मन्त्रमाह—

दिवः खीलोऽवततः। पृथिव्या अध्युत्थितः।
तेन सहस्रकाण्डेन। द्विषन्तꣳ शोचयामसि।
द्विषन्मे बहु शोचतु। ओषधे मो अहꣳ शुचम्, इति।

हे प्रस्तरतृण त्वं दिवो द्युलोकादवततोऽधस्तात्प्रसारितः पृथिव्या अध्युपर्यु-त्थितः ऊर्ध्वत्वेन स्थापितः खीलः स्तम्भो लोकद्वयधारणहेतुस्तम्भोऽसीत्यर्थः। तेन त्वया सहस्रकाण्डेन बहुप्रकारेण द्विषन्तं शोचयामसि शत्रुं शोकयुक्तं कुरु। यथा मे द्विषञ्छत्रुर्बहु शोचत्वधिकं शोकयुक्तो भवतु। हे, ओषधे दर्भाहं त्वत्प्रसादान्मा शुचं शोकं मा प्रापवानि।

अथानूच्यमानस्य शंयुवाकस्यानुमन्त्रणे मन्त्रमाह—

यज्ञ नमस्ते यज्ञ। नमो नमश्च ते यज्ञ।
शिवेन मे संतिष्ठस्व। स्योनेन मे संति-
ष्ठस्व (१९)। सुभूतेन मे संतिष्ठस्व।
ब्रह्मवर्चसेन मे संतिष्ठस्व। यज्ञस्यर्द्धि-
मनु संतिष्ठस्व। उप ते यज्ञ नमः। उप
ते नमः। उप ते नमः, इति।

हे यज्ञ शंयुवाकरूपयज्ञाङ्ग ते नमोऽस्तु। किंच हे यज्ञ ते नमो नमः पुनः पुनर्नमस्कारोऽस्तु। आदरातिशयद्योतनार्थमेवमभिधानम्। हे यज्ञ मे शिवेन

सर्वोपद्रवोपशमनरूपेण संतिष्ठस्व समाप्तिं गच्छ । तथा स्योनेन सुखप्राप्तिरूपेण सुभूतेन सुष्ठु निष्पन्नत्वांकारेण ब्रह्मवर्चसेन मन्त्रबलेन च संतिष्ठस्व । तथा यज्ञस्य यजमानस्यर्द्धिं फलमनुलक्षीकृत्य संतिष्ठस्व । हे यज्ञ ते तवोप समीपे नमोऽस्तु । त्र्यभिधानमत्यादरार्थम् ।

अथ तण्डुलप्रक्षालनजलस्योत्करदेशे निनयनाय मन्त्रमाह—

त्रिष्फली क्रियमाणानाम् । यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयम् । आपस्तत्प्रवहतादितः (२०), इति ।

तण्डुलानां कणादिनिरसनेन शोधनं फलीकरणं तत्त्रिवारं कर्तव्यम् । तथा-क्रियमाणानां तण्डुलानां संबन्धी न्यङ्गो निकृष्टांशः कणादिरूपो यः स्वल्पोऽवशिष्यते रक्षसां भागधेयं तत्कणादिरूपमङ्गं हे आप इतोऽस्मात्स्थानात्प्रवहतात्प्रकर्षेणान्यत्र नयत ।

अथान्वाहार्यपचने पिष्टलेपस्य होमे मन्त्रमाह—

उलूखले मुसले यच्च शूर्पे । आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि । विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीः । अग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि, इति ।

उलूखलादौ कपालान्ते द्रव्ये यद्यत्पिष्टमाशिश्लेषाऽऽश्लिष्टमभूत्ते सर्वे पिष्टांशा अवप्रुषः प्रधानाहुतावनुपयुक्ता विप्रुषो लेपास्तान्सर्वान्संयजामि संभूय वह्नौ प्रक्षिपामि । इदं हविर्विश्वे देवाः सेवन्ताम् । किंचास्मिन्यज्ञ उलूखलादावनाश्लिष्टा विप्रुषो या बह्व्यः सन्ति ताः सर्वा अप्यग्नावेव स्विष्टाः सुष्ठु देवतोद्देशेन त्यक्ताः सुहुताः सुष्ठु प्रक्षिप्ताश्च यथा भवन्ति तथा जुहोमि ।

अथाऽऽदित्योपस्थानार्थाः षण्मन्त्राः । तत्र प्रथममाह—

उद्यन्नद्य मित्रमहः । सपत्नान्मे अनी-

१ क 'द्रवश' ।

नशः। दि॒वैनान्वि॒द्युता॑ जहि । नि॒म्रो-
च॒न्नधरान्कृधि (२१), इति।

हे मित्रमहोऽनुकूलतेजोयुक्ताऽऽदित्य त्वमुद्यन्नुदयं गच्छन्नद्यैवाह्नि मे सपत्ना-ञ्शत्रूनमीनशो नाशय। तत्प्रकार उच्यते—दिवा विद्युता विद्योतमानया तीक्ष्णया भासैनाञ्शत्रूञ्जहि नाशय। अथ निम्रोचन्नस्तं गच्छन्नधरान्निकृष्टान्कृधि कुरु रात्रौ तमसैव पीडितान्कुरु।

अथ द्वितीयमाह—

उ॒द्यन्नद्य वि नो॑ भज । पि॒ता पु॒त्रेभ्यो॑
यथा॑। दी॒र्घा॒यु॒त्वस्य॑ हेशिषे । तस्य॑ नो
देहि सूर्य, इति।

हे सूर्याद्यास्मिन्नेवाह्न्युद्यंस्त्वं नोऽस्मभ्यं विभज धनादिकं पृथक्पृथग्देहि। तत्र दृष्टान्तः—यथा लोके पिता पुत्रेभ्यो विभज्य ददाति तद्वत्। किंच दीर्घायुत्वस्य हेशिषे समर्थोऽसि। नोऽस्मभ्यं तस्य तद्दीर्घायुष्ट्वं देहि।

अथ तृतीयमाह—

उ॒द्यन्नद्य मित्रमहः। आ॒रो॒ह॒न्नुत्त॑रां॒ दिव॑म्।
हृ॒द्रो॒गं मम॑ सूर्य। ह॒रि॒माणं॑ च नाशय, इति।

मित्रमहोऽनुकूलतेजोयुक्त हे सूर्याद्यास्मिन्दिन उद्यन्नुदयं गच्छन्नुत्तरामतिशयेनोत्कृष्टां दिवमारोहन्मम हृद्रोगं मानसीं पीडां हरिमाणं च हरितता शोकप्रभवं वैवर्ण्यं व्याधिप्रभवं विरूपत्वं च नाशय।

अथ चतुर्थमाह—

शुके॑षु मे ह॒रि॒माण॑म्। रो॒प॒णाका॑सु दध्मसि (२२)।
अथो॑ हारि॒द्रवे॑षु मे। ह॒रि॒माणं॒ नि द॑ध्मसि, इति।

मे मदीयं हरिमाणं हरितवर्णं शुकेषु पक्षिविशेषेषु तत्रापि रोपणाकासु स्त्रीजातिषु दध्मसि स्थापयामः। ते हि हरिमाणं प्रार्थयन्ते। अथो अपि च हारिद्रवेषु हरितालद्रुमेषु मे मम हरिमाणं निदध्मसि नितरां स्थापयामः।

अथ पञ्चममाह—

उदगादयमादित्यः । विश्वेन सहसा सह ।
द्विषन्तं मम रन्धयन् । मो अहं द्विषतो रधम्, इति ।

अयमादित्यो विश्वेन सहसा सर्वेणापि बलेन सहोदगादुदयं प्राप्तवान् । किं कुर्वन्मम द्विषन्तं शत्रुं रन्धयन्हिंसयन् । यस्मादयमेवं कुर्वन्नुदेति तस्मादस्य प्रसादादहं द्विषतः सकाशान्मो रधं मैव हिंसां प्राप्नवानि ।

अथ षष्ठमाह—

यो नः शपादशपतः । यश्च नः शपतः
शपात् । उषाश्च तस्मै निम्रुक्च ।
सर्वं पापꣳ समूहताम्, इति ।

अशपतोऽनाक्रोशतो नोऽस्मान्यः शत्रुः शपाच्छपत्यधिक्षिपति यश्चान्यः शत्रुः शपतोऽधिक्षिपतो नोऽस्माञ्शपात्प्रत्यधिक्षिपति तस्मै तदर्थं तस्मिन्नवस्थापयितुमुषाश्च निम्रुक्चोदयास्तमयदेवावहोरात्रदेवौ सर्वं पापमस्मदीयं पापसमूहं समूहतां संगतं कृत्वा तस्मिन्नेव स्थापयताम् ।

अथ समिद्धो अग्न इत्युपसमिन्धनादूर्ध्वमाहवनीयस्योपस्थाने मन्त्रमाह—

यो नः सपत्नो यो रणः । मर्तोऽभि-
दासति देवाः । इध्मस्येव प्रक्षायतः ।
मा तस्योच्छेषि किंचन, इति ।

हे देवा यो मर्तो मनुष्यो नोऽस्माकं सपत्नः शत्रुः सन्ननर्थं चिन्तयति । यश्चास्माभिः सह रणो युद्धकारी सन्नभिदासत्युपक्षपयति तस्योभयविधस्य संबन्धि किंचन धनादिकं मोच्छेष्यवशिष्टं मा कुरुत । किंतु सर्वं विनाशय[त] । यथा प्रक्षायतः प्रकर्षेण क्षीयमाणस्य दह्यमानस्येध्मस्य काष्ठस्य न कोऽप्यंशोऽवशिष्यते तद्वत् ।

अथाभिचरत उपवेषोद्वासने विकल्पितं मन्त्रमाह—

अवसृष्टः परापत । शरो ब्रह्मसꣳ-

शितः। गच्छामित्रान्प्रविंश । मैषां
कंचनोच्छिषः ( २३ ), इति ।

पतिः प्रजापतये तपस्वी वाचा सौभंगाय पशून्मे॰ पिन्वस्व दुर्मरायंद्धदेवयाना-नग्नेऽन्तरिक्षेऽहमुत्तरो भूयासं प्रजापतिरासि सर्वतः श्रितः प्रविष्टं देवताभिर्वाज-जितं पृथिवी ह्वयतामग्निराग्नीध्रादवृषत ससृवाऽसः हुते स्योनेनं मे संतिष्ठस्वेतः कृधि दध्मस्यूहतामष्टौ चं ।

परिस्तृणीत भुवनस्य मध्ये मह्यं धुक्ष्व भुवनानि वस्ते सा मे धुक्ष्व ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

हे, उपवेषावसृष्टो मया क्षिप्तः, परापतापुनरावृत्तो भव । शरो बाणो हिंस-कस्त्वं ब्रह्मसंशितो मन्त्रेण तीक्ष्णीकृतः सन्नितः स्थानाद्गच्छ । गत्वा चामित्रा-ञ्शत्रून्प्रविश । प्रविश्य चैषाममित्राणां संबन्धि किंचिदपि गृहादिकं मोच्छिषोऽ-वशिष्टं मा कार्षीः ।

अत्र विनियोगसंग्रहः—

परि दोहो परिप्रैषो भूपते ब्रह्मणो वृतिः ।
अहं वृतो जपेद्बीदमुत्करं त्वनुमन्त्रयेत् ॥ १ ॥
चतुस्तु वेदिसंसृष्टिं भूमिर्वेदिकृतिं तथा ।
यो मा स्तम्बयजुश्चोर्णां बर्हिर्वेद्यास्तृतिं चतुः ॥ २ ॥
अस्मिंस्तु परिधीन्विच्छि विधृती प्रस्तरं त्वयम् ।
जुहूपभृद्ध्रुवास्तिस्रस्तिसृभी ऋषभः स्रुवम् ॥ ३ ॥
इयं स्थाली पुरोडाशं यज्ञोऽसीत्यभिसंस्पृशेत् ।
इदं क्षीरं यत्पृदध्ययं वेदं निदधाति हि ॥ ४ ॥
अयं सर्वहविःस्पर्शो यो न ऐन्द्राग्नमर्शनम् ।
अग्नेऽग्निं मार्ष्टि चोपाग्नीध्रभागमुपमन्त्रयेत् ॥ ५ ॥
मनोऽद्भिर्मार्जयेद्यं ते समिद्धाग्न्यभिमन्त्रणम् ।
अग्नेऽग्निं मार्ष्टि वेदिस्तु जपेत्संमार्गकाहुतिम् ॥ ६ ॥

---

१ क. चिह्नीकृतः ।

दिवः प्रस्तरसंहारं यज्ञेति शंयुवाककम् ।
त्रिस्तण्डुलक्षालनं तु निनयेदुत्करे स्रुचू ॥ ७ ॥
पिष्टलेपाहुतिश्चोद्यन्नादित्यमुपातिष्ठते ।
यो नः पूर्वाग्न्युपस्थानमुपवेषं त्यजेदव ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

चतुर्थपञ्चमषष्ठेष्वनुवाकेषु दर्शपूर्णमासेष्टिशेषा मन्त्रा उक्ताः । तेषु मन्त्रेषु याजमानत्वादिविभागः कल्पसूत्रादवगन्तव्यः । उत्तरेष्वनुवाकेषु सोमाङ्गभूता मन्त्रा उच्यन्ते । तत्रास्मिन्ननुवाके दीक्षाङ्गमन्त्राः । आदौ तावदेव यजनार्थं दैवतोपस्थानमुच्यते । यदुक्तं सूत्रकारेण—“अपि वा न देवयजनं याचेद्देवता एवोपतिष्ठेत ” इति । तत्रोपस्थाने मन्त्रमाह—

सक्षेदं पश्य । विधर्तरिदं पश्य । नाकेदं
पश्य । रमतिः पनिष्ठा । ऋतं वर्षिष्ठम् ।
अमृता यान्याहुः । सूर्यो वरिष्ठो अक्षभि-
र्विभाति । अनु द्यावापृथिवी देवपुत्रे, इति ।

हे सक्ष सहनशील शत्रूणामभिभावकाग्ने, इदं देवयजनं पश्यानुजानीहि । हे विधर्तः सर्वस्य विविधं धारक वायो त्वमपीदं पश्य । हे नाक सुखैकस्थानस्थिताऽऽदित्य त्वमपीदं पश्य । इयं च देवयजनभूमी रमतिः पनिष्ठा चास्तु । रमन्तेऽस्यां देवपितृमनुष्या इति रमतिः । अतिशयेन व्यवहारयोग्या पनिष्ठा । ऋतं यज्ञं वर्षिष्ठं प्रवृद्धतमं भवतु । यानि चान्यानि प्राग्वंशसदोहविर्धानादीन्यपेक्षितान्याहुस्तान्यप्यमृताऽमृतत्वस्य फलस्य साधनानि सन्तु । वरिष्ठोऽत्युत्तमः । सूर्यश्चाक्षभिरक्षिस्थानीयैरश्मिभिर्विभाति विविधं प्रकाशते । देवाः पुत्रा ययोस्ते देवपुत्रे तादृश्यौ द्यावापृथिव्यावप्यनुकूले भवताम् ।

---

१ ख. 'भिमारका' । २ क. ख. 'रिष्ठ उरुतमः ।

यदुक्तं सूत्रकारेण—" अथास्मै क्षौममहतं महद्वासः प्रयच्छति तत्परिगृह्णाति " इति। तत्र प्रतिग्रहे मन्त्रमाह——

दीक्षाऽसि तपसो योनिः । तपोऽसि
ब्रह्मणो योनिः ( १ ) । ब्रह्मासि
क्षत्रस्य योनिः । क्षत्रमस्यृतस्य योनिः ।
ऋतमसि भूरारभे श्रद्धां मनसा । दीक्षां
तपसा । विश्वस्य भुवनस्याधिपत्नीम् ।
सर्वे कामा यजमानस्य सन्तु, इति ।

हे क्षौम दीक्षाऽसि त्वं दीक्षासाधनमसि । तपस एकस्नानादिनियमरूपस्य योनिः कारणमसि । तच्च तपस्त्वमेवासि। तस्यापि कारणत्वात् । ब्रह्मणो ब्रह्मवर्चसस्य योनिः कारणमसि । कारणत्वादेव तच्च ब्रह्मापि त्वमेवासि । क्षत्रस्य बलस्य योनिरासि । अत एव तदपि क्षत्रं त्वमेवासि । ऋतस्य यज्ञस्य योनिरसि। अत एव तदप्यृतं त्वमेवासि । भूर्यज्ञद्वारा सर्वस्य भावयिताऽहं मनसा सह श्रद्धां कर्मानुष्ठाने विश्वासमारभे । तथा तपसा सह दीक्षां नियमविशेषमारभे । कीदृशीं दीक्षां विश्वस्य भुवनस्य सर्वस्य भूतजातस्याधिपत्नीं यज्ञद्वारेणाधिकं पालयित्रीम् । ततश्च यजमानस्य सर्वे कामाः सन्तु संपद्यन्ताम् ।

यदुक्तं सूत्रकारेण—" पूर्णाहुतिं हूयमानामनुमन्त्रयते " इति । तत्र मन्त्रमाह—

वातं प्राणं मनसाऽन्वारभामहे । प्रजापतिं यो
भुवनस्य गोपाः। स नो मृत्योस्त्रायतां पात्वꣳ-
हसः ( २ ) । ज्योग्जीवाजरामशीमहि, इति ।

यः प्रजापतिर्भुवनस्य गोपा रक्षकस्तं प्रजापतिं वातं देहाद्बहिर्वायुरूपं देहस्यान्तः प्राणरूपं मनसा भक्तियुक्तेनान्वारभामहेऽनुक्रमेण परिगृह्णीमः । स प्रजापतिर्नोऽस्मानपमृत्योस्त्रायतामंहसः पापाच्च पातु । ज्योग्जीवाश्चिरकालं जीवन्तो जरामशीमहि स्थविरत्वं प्राप्नुमः ।

अथ कृष्णाजिनस्य चतुर्दिक्षु मध्ये च स्पर्शे मन्त्रमाह—

इन्द्र शाक्कर गायत्रीं प्रपद्ये । तां ते युनज्मि ।
इन्द्र शाक्कर त्रिष्टुभं प्रपद्ये । तां ते युनज्मि ।
इन्द्र शाक्कर जगतीं प्रपद्ये । तां ते युनज्मि । इन्द्र
शाक्करानुष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्र शा-
क्कर पङ्क्तिं प्रपद्ये (३)। तां ते युनज्मि, इति ।

हे इन्द्र शाक्कर शक्करीछन्दःस्वामिन्शक्तिमत्त्वात्त्वदनुज्ञया गायत्रीं देवीं प्रपद्ये प्राप्नोमि । ते त्वदीयां तां गायत्रीं युनज्म्यस्मिन्कर्मणि युक्तां करोमि । एवमुत्तरत्रापि योज्यम् ।

अथ कृष्णाजिनमारूढस्य जप्यं मन्त्रमाह—

आऽहं दीक्षामरुहमृतस्य पत्नीम् । गायत्रेण
छन्दसा ब्रह्मणा च । ऋतꣳ सत्येऽधायि । सत्य-
मृतेऽधायि । ऋतं च मे सत्यं चाभूताम् । ज्योति-
रभूवꣳ सुवरगमम् । सुवर्गं लोकं नाकस्य पृष्ठम् ।
ब्रध्नस्य विष्टपमगमम्, इति ।

ऋतस्य यज्ञस्य पत्नीं पालयित्रीं दीक्षामहमरुहमारूढोऽस्मि । कीदृशोऽहं गायत्रेण च्छन्दसा छन्दोभिमानिदेवेन ब्रह्मणा मन्त्रेण चानुगृहीतः । तादृशस्य ममर्तं सत्ये स्थापितं सत्यमृते स्थापितम् । मानसमृतम् । वाचिकं सत्यम् । ऋतं च सत्यं चेत्येतदुभयं मे ममाभूतां सर्वदा मयि वर्तेताम् । तथा सत्यहं ज्योतिरभूवं परं ज्योतिरिव संपत्स्ये । ततश्च सुवः स्वर्गमगमं गमिष्यामि । ततश्च सर्व(सुवर्ग)मपि स्वर्गाख्यं लोकं गमिष्यामि । ततो नाकस्याविद्यमानदुःखस्याऽऽदित्यमण्डलस्य पृष्ठमुपरिभागं गमिष्यामि । ततो ब्रध्नस्य परिवृढस्य परमात्मनो विष्टपं स्थानमगमं गमिष्यामि ।

१ क. °नतं तथ्यम°। २ क. परिदृढस्य ।

सूत्रकारेण दीक्षितं प्रत्युक्तम्-"अथैनमध्वर्युरभिमन्त्रयते" इति । तत्र मन्त्रमाह-

पृथिवी दीक्षा (४) । तयाऽग्निर्दीक्षया दीक्षितः । ययाऽग्निर्दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । अन्तरिक्षं दीक्षा । तया वायुर्दीक्षया दीक्षितः । यया वायुर्दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । द्यौर्दीक्षा । तयाऽऽदित्यो दीक्षया दीक्षितः । ययाऽऽदित्यो दीक्षया दीक्षितः (५)। तया त्वा दीक्षया दीक्षयामि । दिशो दीक्षा । तया चन्द्रमा दीक्षया दीक्षितः । यया चन्द्रमा दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । आपो दीक्षा । तया वरुणो राजा दीक्षया दीक्षितः । यया वरुणो राजा दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । ओषधयो दीक्षा (६) । तया सोमो राजा दीक्षया दीक्षितः । यया सोमो राजा दीक्षया दीक्षितः । तया त्वा दीक्षया दक्षियामि । वाग्दीक्षा । तया प्राणो दीक्षया दीक्षितः । यया प्राणो दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । पृथिवी त्वा दीक्षमाणमनु दीक्षताम् ।

अन्तरिक्षं त्वा दीक्षमाणमनु दीक्षताम् । द्यौस्त्वा दीक्षमाणमनु दीक्षताम् (७)। दिशस्त्वा दीक्षमाणमनु दीक्षन्ताम्। आपस्त्वा दीक्षमाणमनु दीक्षन्ताम्। ओषधयस्त्वा दीक्षमाणमनु दीक्षन्ताम् । वाक्त्वा दीक्षमाणमनु दीक्षताम्। ऋचस्त्वा दीक्षमाणमनु दीक्षन्ताम्। सामानि त्वा दीक्षमाणमनु दीक्षन्ताम्। यजूꣳषि त्वा दीक्षमाणमनु दीक्षन्ताम्। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च (८)। आपश्चौषधयश्च। ऊर्क्च सूनृता च। तास्त्वा दीक्षमाणमनु दीक्षन्ताम्, इति।

येयं पृथिवी सा दीक्षया निष्पादकत्वाद्दीक्षा तया पृथिव्यात्मिकया दीक्षयाऽग्निर्दीक्षितः संस्कृतः। अग्नेः संस्कारिकया तया दीक्षया हे यजमान त्वां दीक्षयामि । एवमन्तरिक्षद्युदिगोषधिवाक्षु योज्यम् । हे यजमान दीक्षमाणं संस्कारभाजं त्वामनु पृथिवी देवता दीक्षतां संस्कारयुक्ता भवतु। एवमन्तरिक्षादिष्वपि योज्यम्। अहराद्यभिमानिनो देवाश्च दीक्षमाणं त्वामनु दीक्षन्ताम्।

यदुक्तं सूत्रकारेण—"पुरस्ताद्दीक्षणीयाया आहवनीयं यजमान उपतिष्ठते" इति। तत्र मन्त्रमाह—

स्वे दक्षे दक्षपितेह सीद। देवानाꣳ सुम्नो महते रणाय। स्वासस्थस्तनुवा संविशस्व। पितेवैधि सूनव आसुशेवः। शिवो मा शिवमाविश । सत्यं म आत्मा। श्रद्धा

१ क व्याख्या।

मे क्षितिः (९)। तपो मे प्रतिष्ठा। सवितृप्रसूता मा दिशो दीक्षयन्तु। सत्यमस्मि, इति।

हेऽग्ने त्वं स्वे स्वकीये दक्षे प्रवृद्धे स्थान इह कर्मदेशे महते रणायात्यन्तरमणार्थं सीदोपविश। कीदृशस्त्वं दक्षपिता दक्षस्य कुशलस्य यजमानस्य पालयिता देवानां सुम्नः सुखहेतुः स्वासस्थः शोभनासनस्थितस्तनुवा शरीरेण संविशस्व सम्यगिह प्रविश। सूनवे पितेव यथा पुत्राय पिता सुखहेतुस्तद्वदासुशेव एधि सर्वतः सुखेन सेवितुं योग्यो भव। शिवः शान्तोपद्रवस्त्वं शिवं शान्तोपद्रवं मामाविश। त्वत्प्रसादान्मे ममाऽऽत्मा स्वभावः सत्यमस्तु सत्यैकस्वभावो भूयासम्। तथा मे श्रद्धाऽक्षितिरक्षयाऽस्तु। तपो मे प्रतिष्ठा स्थैर्यहेतुरस्तु। सवितृप्रसूताः सवित्रैवानुज्ञाता दिशो मा दीक्षयन्तु सर्वत्रैव दीक्षितत्वेन मां स्थापयन्तु। इदानीमहं सत्यमेव परं ब्रह्मास्मि न तु मर्त्यः।

अथ प्रायणीयायाः पुरस्ताद्यदुक्तं सूत्रकारेण—"अहं त्वदस्म्याजुह्वान इत्येताभ्यामाहवनीयं यजमान उपतिष्ठते" इति। तत्र प्रथमं मन्त्रमाह—

अहं त्वदस्मि मदसि त्वमेतत्।
ममासि योनिस्तव योनिरस्मि।
ममैव सन्वह हव्यान्यग्ने। पुत्रः
पित्रे लोककृज्जातवेदः, इति।

हेऽग्नेऽहं त्वदस्मि त्वत्तः सकाशाद्यजमानोऽस्मि। त्वमप्येतद्रूपं मदसि मत्तः सकाशादेतदाहवनीयरूपं प्राप्नोषि। मया ह्याधीयमानस्य तवाऽऽहवनीयत्वम्। अतः कारणात्त्वं मम योनिरहं च तव योनिः कारणमस्मि। हेऽग्ने ममैव संस्त्वं मदीय एव भूत्वा हव्यानि वह। हे जातवेदः सर्वत्र पुत्रः पित्रे लोककृत्स्थानसंपादको भवति, अतो यथा मया तव स्थानं संपादितं तथा त्वयाऽपि मम पुण्यलोकः संपादनीयः।

अथ द्वितीयमाह—

आजुह्वानः सुप्रतीकः पुरस्तात्। अग्ने

स्वां योनिमासीद साध्या । अस्मिन्त्स-
धस्थे अध्युत्तरस्मिन् ( १० ) । विश्वे
देवा यजमानश्च सीदत, इति ।

हेऽग्न आजुह्वानो देवानाह्वयन्सुप्रतीकः शोभनाङ्गः सन्साध्या साधनीया मन्त्रैः संस्करणीयां स्वां योनिमासीद स्वकीये स्थाने तिष्ठ । हे विश्वे देवा यूयं यजमानश्चोत्तरस्मिन्नुत्कृष्टे सधस्थे सहावस्थानयोग्येऽस्मिन्स्थानेऽधिसीदताधिष्ठाय तिष्ठत ।

अथ सोमक्रयणीपदविषये यदुक्तं सूत्रकारेण—" निष्क्रम्यमाणेषु यजमानोऽनुवर्तयित्वा " ( ? ) इति । तत्र मन्त्रमाह—

एकमिषे विष्णुस्त्वाऽन्वेतु । द्वे ऊर्जे विष्णु-
स्त्वाऽन्वेतु । त्रीणि व्रताय विष्णुस्त्वाऽ-
न्वेतु । चत्वारि मायो भवाय विष्णुस्त्वाऽ-
न्वेतु । पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु ।
षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु । सप्त सप्तभ्यो
होत्राभ्यो विष्णुस्त्वाऽन्वेतु, इति ।

हे सोमक्रयणि त्वामन्विषेऽन्नार्थं विष्णुर्देव एकं प्रथमं पदमेतु प्राप्नोतु । तथा त्वामनु, ऊर्जे रसार्थं द्वे प्रथमद्वितीये पदे विष्णुरेतु प्राप्नोतु । एवमुत्तरत्रापि योज्यम् । व्रताय कर्मानुष्ठानसिद्ध्यर्थं मयोभूः सुखस्य भावयिता वायुः । ' मयोभूर्वातो अभिवातूस्राः ' इति मन्त्रान्तरात् । तस्य संबन्धी मायोभवः प्राणस्तदर्थं पशुभ्यः पश्वर्थं रायस्पोषाय धनपुष्ट्यर्थं सप्तभ्यो होत्राभ्यो होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाऽच्छावाक आग्नीध्र इत्येताभ्यः सप्तभ्यो होत्राभ्यस्तदीयसामर्थ्यसिद्ध्यर्थम्[1] ।

यदुक्तं सूत्रकारेण " सप्तमे पदे जपति " इति । तत्र मन्त्रमाह—
सखायः सप्तपदा अभूम । सख्यं ते

१ क. 'भ्यस्तृतीय' ।

गमेयम् ( ११ )। सख्यात्ते मा
योषम्। सख्यान्मे मा योष्ठाः, इति,

सप्तपदास्त्वया सह संचारवन्ति सप्तसंख्याकानि पदानि येषामस्माकं ते वयं तव सखायोऽभूम संपन्नास्ते त्वदीयं सख्यं गमेयं प्राप्नुयाम्। ते त्वदीयात्सख्यान्मा योषमहं पृथग्भूतो मा भूवम्। मे मदीयात्सख्यान्मा योष्ठास्त्वमपि पृथग्भूतो मा भव।

यदुक्तं सूत्रकारेण—"सर्वासु सुब्रह्मण्यासु सुब्रह्मण्यमन्वारभ्य यजमानो जपति" इति। तत्र मन्त्रमाह—

साऽसि सुब्रह्मण्ये। तस्यास्ते पृथिवी पादः।
साऽसि सुब्रह्मण्ये। तस्यास्तेऽन्तरिक्षं पादः।
साऽसि सुब्रह्मण्ये। तस्यास्ते द्यौः पादः।
साऽसि सुब्रह्मण्ये। तस्यास्ते दिशः पादः
( १२ )। परोरजास्ते पञ्चमः पादः। सा न
इषमूर्जं धुक्ष्व। तेज इन्द्रियम्। ब्रह्मवर्चसम-
न्नाद्यम्, इति।

हे सुब्रह्मण्याख्ये देवते त्वं सा प्रसिद्धाऽसि। तस्याः प्रसिद्धायास्तव पृथिव्येकः पादः। एवमुत्तरत्रापि योज्यम्। रजसः परस्ताद्वर्तमानः सात्त्विक आदित्यः परोरजास्तथाविधपञ्चमपादयुक्ता त्वं नोऽस्माकमिषमन्नमूर्जं रसं च धुक्ष्व संपादय। तथा तेजआदिकं च संपादय।

अथ सौमिक्या वेदेर्विमाने मन्त्रमाह—

विमिमे त्वा पयस्वतीम्। देवानां धेनुꣳ
सुदुघामनपस्फुरन्तीम्। इन्द्रः सोमं पिबतु।
क्षेमो अस्तु नः, इति।

---

१ ख. ग. 'यं भवत्सखा'। २ ग. 'सः पुर'।

हे वेदे त्वां विमिमे विशेषेण मितिं करोमि, इयती वेदिरिति निश्चिनोमि। कीदृशीं पयस्वतीं यागद्वारेण वृष्टिहेतुं देवानां धेनुं धेनुवत्प्रीणयित्रीं सुदुघां सुष्ठु कामानां दोग्ध्रीमनपस्फुरन्तीं प्रातिकूल्यमप्रतिपद्यमानाम्। ईदृश्यां वेद्यामिन्द्रोऽस्मदीयं सोमं पिबतु तेन चास्माकं क्षेमोऽरोगोऽस्तु।

अथ वेदिकर्तृन्प्रति प्रैषमन्त्रमाह—

इमां नराः कृणुत वेदिमेत्य। वसुमती रुद्रवतीमादित्यवतीम् (१३)। वर्ष्मन्दिवः। नाभा पृथिव्याः। यथाऽयं यजमानो न रिष्येत्। देवस्य सवितुः सवे, इति।

हे नरा वेदिकर्तारः पुरुषाः सवितुः प्रेरकस्य देवस्य सवेऽनुज्ञायां सत्यामयं यजमानो यथा न रिष्येन्न विनश्येत्तथा पृथिव्या नाभावुपरि दिवः स्वर्गस्य हेतौ वर्ष्मन्नुच्छ्रिते प्रदेशे यूयमागत्येमां वेदिं कृणुत। कीदृशीं वस्वादिमतीं तेषां प्रियामित्यर्थः।

अथ तस्या वेदेरभिमन्त्रणे मन्त्रमाह—

चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। तस्या सुपर्णावधि यौ निविष्टौ। तयोर्देवानामधि भागधेयम्, इति।

चत्वारि शिखण्डस्थानीयानि कोणानि यस्यासौ चतुःशिखण्डा युवतिर्यौवनोपेता योषेव देवानां प्रीतिहेतुः, अत एव सुपेशाः शोभनरूपोपेता घृतप्रतीका घृतं प्रतीकं प्रथममासाद्यते यस्यां सा घृतप्रतीका तादृशी वेदिरियं भुवनस्य लोकस्य मध्ये वर्तते। तस्यां वेद्यामध्युपरि सुपर्णौ पक्षिसदृशौ यावग्निवायू वर्तेते तत्राग्निर्देवेभ्यो हवींषि वहति वायुस्तत्फलभूतां वृष्टिमुत्पादयति। ततस्तयोरग्निवाय्वोरन्येषां च देवानां हे वेदे त्वं भागधेयमधिकभजनीयस्वरूपं भवसि।

अथ वेद्याः सकाशाल्लोष्टस्य बहिःक्षेपणे मन्त्रमाह—

अप जन्यं भयं नुद। अप चक्राणि

वर्तय । गृहꣳ सोमस्य गच्छतम्, इति ।

हे दक्षिणहविर्धानरूपशकट त्वं जन्यं जनेषु वर्तमानं भयमपनुद । हे उत्तरहविर्धान चक्राणि परबलान्यपवर्तय, एतल्लोष्टवदपगमय । हे हविर्धाने युवामुभे सोमस्य गृहं गच्छतं प्राप्नुतम् ।

अथ पशोः संज्ञप्यमानस्य परावृत्तौ मन्त्रमाह—

न वा उवेतन्म्रियसे न रिष्यसि ।
देवाꣳ इदेषि पथिभिः सुगेभिः ।
यत्र यन्ति सुकृतो नापि दुष्कृतः ।
तत्र त्वा देवः सविता दधातु, इति ।

ब्रह्मणो योनिरꣳहसः पङ्क्तिं प्रपद्ये दीक्षा ययाऽऽदित्यो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयान्योषधयो दीक्षा द्यौस्त्वा दीक्षमाणमनु दीक्षतामपपितिष्ठाक्षितिरुत्तरस्मिन्गमेयं दिशः पादे आदित्यवर्तीं वर्तय पश्चं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

हे पशो त्वमेतदेतेन संज्ञपनव्यापारेण न वा उ सर्वथा नैव म्रियसे । अत एव न रिष्यसि न विनश्यसि । किंतु सुगेभिः सुष्ठु गन्तुं शक्यैः पथिभिर्मार्गैर्देवानिदेषि देवानेव प्राप्नोषि । यत्र यस्मिन्नुत्तमलोके सुकृतः पुण्यकृत एव यन्ति गच्छन्ति दुष्कृतः पापिनो नापि नैव गच्छन्ति तत्र तस्मिन्नुत्तमलोके सविता देवस्त्वां दधातु स्थापयतु ।

अत्र विनियोगसंग्रहः—

अथ ज्योतिष्टोममन्त्रा देवान्सक्षोपतिष्ठते ।
दीक्षा क्षौमं प्रगृह्णाति वातं पूर्णाहुतिं जपेत् ॥ १ ॥
इन्द्राजिनं स्पृशेदाऽहं तदारूढो जपेत्पृथि ।
यजमानं मन्त्रयेत्स्वे स्वाम्यग्निमुपतिष्ठते ॥ २ ॥
अहमाजुह्वान इति द्वाभ्यां वह्नेरुपस्थितिः ।
एकमित्येकहायन्याः पदानित्यनुवर्तयेत् ॥ ३ ॥

सखा जपेदन्त्यपदे सुब्रह्मण्यमुपस्पृशेत्।
जपेत्साऽसीत्यमुं मन्त्रं विमि वेदिं विमाति हि ॥ ४ ॥
इमां नरास्तु संप्रेष्य चतुर्वेदिं तु मन्त्रयेत्।
अप लोष्टं क्षिपेन्नेति निवर्तेत पशोर्वधे ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः।

---

सप्तमे दीक्षामारभ्याग्नीषोमीयपशुपर्यन्ते प्रयोगे छिद्रपूरणार्था ये मन्त्रास्तेऽभिहिताः। अष्टमे पशुविषया मन्त्रा उच्यन्ते। यदुक्तं सूत्रकारेण—"यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्याहुतिं जुहुयात्" इति। तन्मन्त्रपाठस्तु—

यदस्य पारे रजसः। शुक्रं ज्योति-
रजायत। तन्नः पर्षदति द्विषः।
अग्ने वैश्वानर स्वाहा, इति।

हे वैश्वानर सर्वमनुष्यहितकारिन्नग्नेऽस्य रजसो रजोगुणयुक्तस्य संसारस्य पारे परतीरे रजोगुणास्पृष्टे स्थाने शुक्रं निर्मलं त्वदीयं यज्ज्योतिरजायत, तज्ज्योतिर्नोऽस्माकं द्विषः शत्रूनतिपर्षदतिशयेन विनाशयतु, स्वाहेदं च स्वाहुतमस्तु।

यत्पशोर्वाशनं शब्दनं तन्निमित्तहोमार्थ एको मन्त्र उक्तः। अथ तत्रैव मन्त्रान्तरमाह—

यस्माद्भीषाऽवाशिष्ठाः। ततो नो
अभयं कृधि। प्रजाभ्यः सर्वाभ्यो
मृड। नमो रुद्राय मीढुषे, इति।

हे पशो यस्मात्कारणाद्भीषा भीत्या त्वमवाशिष्ठाः शब्दं कृतवानसि ततो मरणात्पापान्नोऽस्माकमभयं कृधि यथा पापभीतिर्नास्ति तथा कुरु। किंच

---

१ क. स्वननं।

प्रजाभ्यः सर्वाभ्यः सर्वप्रजार्थं मृड सुखहेतुर्भव । मीढुषे सेक्त्रे त्वामुत्पादितवत रुद्राय नमोऽस्तु । पूर्वोक्तो यदस्य पारे इति मन्त्रो वाशनवेपनादिषु सर्वेषु निमित्तेषु साधारणः । अयं तु वाशन एवेति विशेषः ।

अथ पशोरुपवेशने होममन्त्रमाह—

यस्मात्क्षीषा न्यषदः । ततो नो अभयं
कृधि (१) । प्रजाभ्यः सर्वाभ्यो
मृड । नमो रुद्राय मीढुषे, इति ।

न्यषदो निषण्णवानासि । अन्यत्पूर्ववत् ।

यदुक्तं सूत्रकारेण—" तं मैत्रावरुणदण्डेनोत्थापयेत् " इति । तत्र मन्त्रमाह—

उदुस्र तिष्ठ प्रतितिष्ठ मा रिषः । मेमं यज्ञं यज-
मानं च रीरिषः । सुवर्गे लोके यजमानꣳ हि
धेहि । शं न एधि द्विपदे शं चतुष्पदे, इति ।

हे उस्र पशो, उत्तिष्ठोत्थाय च प्रतितिष्ठ स्थिरो भव । मा रिषो हिंसां माऽऽप्नुहि । इमं यज्ञं यजमानं च मा रीरिषो मा विनाशय । इमं यजमानं स्वर्गे लोके धेहि स्थापय । नोऽस्मदीये द्विपदे मनुष्याय शमेधि सुखहेतुर्भव । चतुष्पदे गवादिरूपाय च शमेधि सुखहेतुर्भव ।

अथ वेपनपलायनमरणेषु त्रिषु त्रीन्मन्त्रानाह—

यस्माद्भीषाऽवेपिष्ठाः पलायिष्ठाः समज्ञास्थाः ।
ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो
मृड । नमो रुद्राय मीढुषे (२), इति ।

अवेपिष्ठा अकम्पथाः । पलायिष्ठाः पलायनं कृतवानसि । समज्ञास्थाः संज्ञानं मरणं तत्प्राप्तोऽसि । अन्यत्पूर्ववत् । वेपनपलायनमन्त्रयोरपि ततो न इत्यादिकमनुषञ्जनीयम् ।

---

१ क. °शोर्निषीदननिमित्ते मन्त्र° । २ क. °षदनं कृतवान° । ३ क °ति । अथोत्थाननि° । मित्ते म° ।

अथ सर्वनिमित्तसाधारणं मन्त्रमाह—

य इदमकः । तस्मै नमः । तस्मै स्वाहा, इति ।

यः पशुरिदं वाशनं निषदनं वेपनं पलायनं संज्ञानं चैतेष्वन्यतममकः कृतवां-स्तस्मै पशवे नमोऽस्तु । तस्मै पशवे स्वाहेदं हविः स्वाहुतमस्तु । अत्र वाशना-दावेकैकस्मिन्निमित्ते तत्तदसाधारणः पुरस्तात्, यदस्य पारे इति होमः । पश्चात्तु य इदमक इति होमो द्रष्टव्यः ।

अथ पशौ स्वयमेव मृते सति । यदुक्तं सूत्रकारेण—“न वा उवेतन्म्रियस आशानां त्वा विश्वा आशा आपो हि ष्ठा मयोभुव इत्येताभिश्चतसृभिरपोऽभ्यवह-त्यान्यं तद्रूपवर्णवयसं तद्देवतमुपाकृत्य यजेत्” इति । तत्र मन्त्रत्रयस्य प्रती-कानि दर्शयति—

न वा उ वेतन्म्रियसे । आशानां

त्वा विश्वा आशाः, इति ।

न वा इति मन्त्रः पूर्वानुवाके व्याख्यातः । “आशानां त्वाऽऽशापालेभ्यः” इति मन्त्रो देवा देवेष्विवत्यनुवाके व्याख्यातः । “विश्वा आशा मधुना” इति मन्त्रः पुनर्न इन्द्र इत्यनुवाके व्याख्यातः ।

अथ ग्रहचमसयोर्हुते शेषो यः सोमो योऽप्यहुतस्तयोः संसर्गे होममन्त्रमाह—

यज्ञस्य हि स्थ ऋत्वियौ । इन्द्राग्नी चेतनस्य च ।

हुताहुतस्य तृप्यतम् । अहुतस्य हुतस्य च । हुतस्य

चाहुतस्य च । अहुतस्य हुतस्य च । इन्द्राग्नी अस्य

सोमस्य । वीतं पिबतं जुषेथाम्, इति ।

हे इन्द्राग्नी युवां हि यस्मात्कारणाद्यज्ञस्यर्त्विजौ स्थ ऋत्विक्सदृशौ निर्वा-हकौ भवथः, चेतनस्य यजमानस्य च स्वामिनौ भवथ इति शेषः । तादृशौ युवां हुताहुतस्योभयविधस्य सोमस्य सारेण तृप्यतम् । हुतस्येत्यादिरभ्यासोऽ-त्यन्तमादरार्थः । तादृशस्य सोमस्य सारं हे, इन्द्राग्नी वीतं युवां प्राप्नुतं प्राप्य च पिबतं पीत्वा च जुषेथां प्रीतियुक्तौ भवतम् ।

अथ सोमभक्षणे मन्त्रमाह—

मा यजमानं तमो विदत्। मर्त्विजो मो
इमाः प्रजाः। मा यः सोममिमं पिबात्।
सꣳसृष्टमुभयं कृतम् (३), इति।

कृधि मीढुषे हुतस्य च सप्त च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्यायेऽष्टमोऽनुवाकः॥ ८॥

---

यदज्ञानरूपं तमोऽस्ति तद्यजमानं मा विदन्मा लभतां तस्मिन्नज्ञानं मा प्रविशत्वित्यर्थः। ऋत्विजोऽपि मा विदत्। इमाः प्रजा अपि मा सर्वथैव मा प्राप्नोतु। एतेषु मध्ये यः कोऽपीमं सोमं पिबात्पिबति तं पातारं तमो मा विदत्। कीदृशं सोममुभयं हुताहुतरूपं संसृष्टं कृतं परस्परमिश्रणेनैकीकृतम्। तादृशसोमपानेऽपि तमो मा प्रविशतु।

अथ विनियोगसंग्रहः—

यदस्येति निमित्तेषु प्रायश्चित्ताहुतिः पशोः।
सर्वसाधारणं त्वेतद्यस्माद्भीषेति वाशने॥ १॥
शयनेऽपि तथा यस्मादुदुस्रोस्थापयेत्ततः।
कम्पे पलायने मृत्यौ यस्मान्मन्त्रत्रयं क्रमात्॥ २॥
वाशनादौ हि सर्वत्र य इदेत्यपि चाऽऽहुतिम्।
न वा आशेति विश्वेति स्वयमेव मृते सति॥ ३॥
अप्सु तं संपरित्यज्य तादृशं पशुमाहरेत्।
हुताहुतस्य होमस्य संसं जुहुयादिमम्॥
यज्ञस्येत्यथ मः येति शेषभक्षणमिष्यते॥ ४॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये सप्तमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

अथ नवमोऽनुवाकः ।

---

अष्टमे पशुविषया अच्छिद्रमन्त्रा उक्ताः । नवमेऽभिषवादिविषया मन्त्रा उच्यन्ते । तत्रोपांशुग्रहार्थाभिषवे मन्त्रमाह—

अनागसंस्त्वा वयम् । इन्द्रेण प्रेषिता उपं ।
वायुष्टे अस्त्वꣳशभूः । मित्रस्ते अस्त्वꣳ-
शभूः । वरुणस्ते अस्त्वꣳशभूः, इति ।

हे सोम, अनागसोऽपराधरहिता वयं त्वां प्रतीन्द्रेणोपप्रेषितास्तस्मान्नास्त्यस्माकमपराधः । वायुर्देवस्ते तवांशभूरस्तु कस्यचिदंशस्य भावयिता भवतु । तथा मित्रो वरुणश्च ।

अथ सप्तानां ग्राव्णामभिमन्त्रणे मन्त्रमाह—

अपां क्षया ऋतस्य गर्भाः । भुवनस्य गोपाः
श्येना अतिथयः । पर्वतानां ककुभः प्रयुतो
नपातारः । वग्नुनेन्द्रꣳ ह्वयत । घोषेणामी-
वाꣳश्चातयत (१) । युक्ता स्थ वहत, इति ।

एते ग्रावाणोऽपां क्षया जलस्य निवासहेतवः । यज्ञद्वारेण वृष्टिहेतुत्वात् । ऋतस्य गर्भा यज्ञस्य गर्भवदन्तर्वर्तिनः । भुवस्य गोपाः कर्मनिष्पादनेन लोकस्य पालकाः । श्येनाः श्येनवदतिप्रबलाः । अतिथयोऽतिथिवदिहाभिषवप्रदेशे समागताः । पर्वतानां ककुभः प्राच्यादिदिग्वत्परितो वर्तमानाः । ग्रावाणो हि पर्वतेषूत्पद्यन्ते । प्रयुतः प्रकर्षेण सोमं मिश्रयन्तः । नपातारः पालका न भवन्ति किंतु सोमस्य हिंसकाः । तादृशा हे ग्रावाणो यूयं वग्नुना वाचा भवदीयेन शब्देनेन्द्रं ह्वयत । इन्द्रो हि ग्रावध्वनिं श्रुत्वा तदानीमेवाऽऽगच्छति । घोषेण भवदीयेनोच्चध्वनिनाऽमीवान्रोगांश्चातयत विनाशयत । युक्ताः स्थ परस्परं संबद्धा भवत वहत, इममभिषवं निर्वहत ।

अथ माध्यंदिनसवनेऽभिषवादूर्ध्वं प्रतिस्थातुर्ग्राव्णामनुमोदने मन्त्रमाह—

देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः । ऐन्द्रमचु-

च्यवुः । परमस्याः परावतः । आऽस्मात्सध-
स्थात् । ओरोरन्तरिक्षात् । आ सुभूतमसुषवुः ।
ब्रह्मवर्चसं म आसुषवुः । समरे रक्षांस्यवधिषुः ।
अपहतं ब्रह्मज्यस्य, इति ।

ये ग्रावाणो देवा द्योतमानास्तदभिमानिनो देवाः सन्ति ते सर्वेऽप्ययमिन्द्र इन्दुश्चन्द्रवदाह्लादकारीत्यवादिषुः । स्वयमपि परमस्याः परावतोऽत्यन्तं दूराद्देशादिन्द्रं प्रति आचुच्यवुराभिमुख्येन प्राप्ताः । सधस्थात्सर्वेषां सहावस्थानप्रदेशादस्माद्भूलोकादागत्य तथोरोर्विस्तीर्णादन्तरिक्षादागत्य सुभूतं सुष्ठु निष्पन्नमिमं सोममासुषवुः साकल्येनाभिषुतं कृतवन्तः । मे मम यजमानस्य ब्रह्मवर्चसं यागानुष्ठानरूपमासुषवुः साकल्येन संपादितवन्तः । समरे संग्रामे रक्षांस्यवधिषुर्हतवन्तः । ब्रह्मज्यस्य ब्राह्मणानां मन्त्राणां वा क्षपयितुर्दुरात्मनो राक्षसस्यापहतमपघातं विनाशं कृतवन्त इति शेषः ।

अथ दधिघर्मे स्रुचि गृहीतस्याभिघारितस्य दध्न आग्नीध्रियाग्नावधिश्रयणे मन्त्रमाह—

वाक्चं त्वा मनश्च श्रीणीताम् ( २ ) । प्राणश्च
त्वाऽपानश्च श्रीणीताम् । चक्षुश्च त्वा श्रोत्रं च
श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् ।
ओजश्च त्वा सहश्च श्रीणीताम् । आयुश्च त्वा
जरा च श्रीणीताम् । आत्मा च त्वा तनूश्च
श्रीणीताम् । शृतोऽसि शृतं कृतः । शृताय त्वा
शृतेभ्यस्त्वा, इति ।

हे दधिद्रव्य वाक्च वाग्देवताऽपि त्वां श्रीणीतां तवाधिश्रयणं करोतु । एवं मनश्चेत्यादिषु योज्यम् । दक्ष उत्साहः । बलं शरीरशक्तिः । ओजः

१ क. वाऽपनयि° ।

कान्तिः। सहः शत्रूणामभिभवनम्। आयुर्दीर्घायुष्यम्। जरा तस्याऽऽयुषोऽन्तिमावस्था। आत्मा जीवः। तनूः शरीरम्। एतैर्देवैः शृतं कृतः पक्वं यथा भवति तथा कृतः सञ्शृतोऽसि त्वं पक्वोऽसि। हे दधिपदार्थ शृताय पाकाय त्वामहमत्र श्रपयामि, शृतेभ्यः पूर्वपक्वेभ्यो हविर्भ्यस्त्वामतिशयेन पक्वं करोमि।

अथ दधिघर्मस्य होमे मन्त्रमाह—

यमिन्द्रमाहुर्वरुणं यमाहुः। यं मित्रमाहुर्यमु
सत्यमाहुः (३)। यो देवानां देवतमस्त-
पोजाः। तस्मै त्वा तेभ्यस्त्वा, इति।

शास्त्राभिज्ञाः पुरुषा यमग्निमिन्द्रादिरूपमाहुः। सत्यं परं ब्रह्म। यश्चाग्निर्देवानां दीप्तिमतां मध्ये देवतमो दीप्तिमत्तमः। तपोजा नियमरूपेण तपसा जन्यः। तस्मै सर्वदेवसमष्टिरूपायाग्नये हे दधिद्रव्य त्वां जुहोमि तेभ्य इन्द्रादिभ्यस्त्वा जुहोमीति शेषः।

अथ भक्षणमन्त्रमाह—

मयि त्यदिन्द्रियं महत्। मयि दक्षो मयि
क्रतुः। मयि धायि सुवीर्यम्। त्रिशुग्घर्मो
विभातु मे। आकूत्या मनसा सह। विराजा
ज्योतिषा सह। यज्ञेन पयसा सह। तस्य दोह-
मशीमहि (४)। तस्य सुम्नमशीमहि। तस्य
भक्षमशीमहि। वागजुषाणा सोमस्य तृप्यतु, इति।

त्यत्प्रसिद्धं महदिन्द्रियं सामर्थ्यं मयि धीयतां स्थाप्यताम्। तथा दक्ष उत्साहः। क्रतुरनुष्ठानम्। सुवीर्यं सर्वेषु कार्येषु शोभनं सामर्थ्यम्। तत्सर्वं मयि स्थाप्यताम्। त्रिशुक्, अग्निविद्युदादित्यात्मना त्रिधाभिन्नदीप्तिर्घर्मोऽग्निर्मे मदर्थमाकूत्यादिभिः सह विविधं दीप्यताम्। आकूतिः संकल्पः। मनः संकल्पसाधनम्। विराडन्नम्। ज्योतिस्तेजः। यज्ञः क्रतुः। पयः क्षीरम्। तस्य तैराकूत्यादिभिर्युक्तस्याग्नेर्दोहं वृष्ट्यादिसमृद्धिं वयमशीमहि। तस्य सुम्नं तन्निमित्तं[1] सुखं व्याप्नु-

१ क. तज्जनितं।

महि। तस्याग्नेः प्रसादाद्भक्षं सोमं चाशीमहि व्याप्नुयाम। वाक्च मदीया जुषाणा प्रीयमाणा सोमस्य भक्षणेन तृप्यतु।

अथ नाभिदेशाभिमर्शने मन्त्रयोः प्रतीके दर्शयति—

मित्रो जनान्प्रसमित्र, इति।

मित्रो जनान्यातयतीत्येको मन्त्रः। प्रसमित्र मर्तो अस्त्वित्यपरो मन्त्रः। एतच्चोभयम्—"त्वमग्ने बृहद्वयः" इत्यत्र व्याख्यातम्।

अथ षोडशिग्रहस्याभिमन्त्रणे मन्त्रमाह—

यस्मान्न जातः परो अन्यो अस्ति। य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया संविदानः। त्रीणि ज्योतीꣳषि सचते स षोडशी, इति।

यस्मात्प्रजापतेरन्यः पुरुषः कश्चिदपि पर उत्कृष्टो जातो नास्ति। यश्च प्रजापतिर्विश्वा भुवनानि सर्वभूतजातान्याविवेश। अत एवोपनिषद्याम्नायते—"तत्सृष्ट्वा तदेवानुप्राविशत्" इति। स एव प्रजापतिः प्रजया स्वसृष्टया सह संविदान ऐकमत्यं गतः सर्वानुकूलस्वभावः सन्षोडश्येतन्नामकग्रहो भूत्वा त्रीणि ज्योतींष्यग्निविद्युदादित्यरूपाणि सवनत्रयरूपाणि वा सचते समवैति।

तस्मिन्नेवाभिमन्त्रणे द्वितीयं मन्त्रमाह—

एष ब्रह्मा य ऋत्वियः। इन्द्रो नाम श्रुतो गणे (५), इति।

एष षोडशी ग्रहः स्वयं ब्रह्मा प्रजापतिरूपो यो ग्रह ऋत्वियो वसन्ताद्यृतुकाले प्राप्तो गणे सर्वस्मिन्ग्रहसमूह इन्द्रो नामैश्वर्ययोगादिन्द्र इत्येवं नाम धृत्वा श्रुतो वेदेऽवगतः स एष ब्रह्मेति पूर्वत्रान्वयः।

अथ तत्रैव तृतीयं मन्त्रमाह—

प्र ते महे विदथे शꣳसिषꣳ हरी। य ऋत्वियः प्र ते वन्वे। वनुषो हर्यतं मदम्, इति।

१ क. ख. वा मन्त्रप्रकाशरूपाणि स°।

हे इन्द्र महे महतस्ते तव हरी अश्वौ विदथे यज्ञे प्रशंसिषं प्रशंसामि । यो मदो हर्ष ऋत्वियो वसन्ताद्यृतुकाले प्राप्तो वनुषः संभजनीयस्य ते तव हर्यतं प्रेप्सितं तादृशं मदं हर्षं प्रवन्वे प्रकर्षेण संभजामि ।

अथ तस्मिन्नेवाभिमन्त्रणे चतुर्थमन्त्रमाह—

इन्द्रो नाम॑ घृतं न यः । हरि॑भि-
श्चारु सेच॑ते । श्रुतो ग॒ण आ त्वा॑
विशन्त । हरि॑वर्पसं॒ गिर॑ः, इति ।

यो देव इन्द्रो नामेन्द्र इत्येतादृशं नाम धृत्वा घृतं न घृतमिव प्रियो भूत्वा हरिभिरश्वैश्चारु शोभनं सेचते समवैति । गणे देवतानां समूहे श्रुत प्रख्यातो यस्त्वमिन्द्रस्तं त्वामिन्द्रं हरिवर्पसं मनोहरवपुषं गिरोऽस्मदीया स्तुतय आविशन्तु प्राप्नुवन्तु ।

अथ षोडशिनो होमे मन्त्रमाह—

इन्द्राधि॑प॒तेऽधि॑प॒तिस्त्वं दे॒वाना॑मसि ।
अधि॑पतिं॒ माम् । आयु॑ष्मन्तं॒ वर्च॑-
स्वन्तं मनुष्ये॑षु कुरु ( ६ ), इति ।

हेऽधिपतेऽधिष्ठानपालकेन्द्र त्वं विशेषतो देवानामधिपतिरसि । अतो मामपि मनुष्येष्वधिपतिमधिष्ठानपालकमायुष्मन्तं दीर्घेणाऽऽयुषा युक्तं वर्चस्वन्तमधिकेन वर्चसा तेजसा युक्तं कुरु ।

अथ षोडशिनो भक्षणे मन्त्रमाह—

इन्द्र॑श्च स॒म्राड्वरु॑णश्च॒ राजा॑ । तौ ते॑ भ॒क्षं
चक्रतुरग्र॑ ए॒तम् । त॒योरनु॑ भ॒क्षं भ॑क्ष-
या॒मि । वाग्जु॑षा॒णा सोम॑स्य तृप्यतु, इति ।

सम्राट्साम्राज्ययुक्त इन्द्रश्च राजा वरुणश्च यौ देवौ विद्येते तावुभौ देवावग्रे प्रथमं हे षोडशिग्रह ते तवैतमंशं भक्षं चक्रतुस्तयोर्भक्षमन्वहमपि भक्षयामि । मदीया वाग्जुषाणा प्रीतियुक्ता सती सोमस्य भक्षणेन तृप्यतु ।

अथ विहारे बहिर्वा यदा भयमागच्छेत्तदा होमे मन्त्रमाह—

प्रजापतिर्विश्वकर्मा । तस्य मनो देवं यज्ञेन
राध्यासम् । अर्थे गा अस्य जहितः ।
अवसानपतेऽवसानं मे विन्द, इति ।

विश्वं सर्वमपि जगत्कर्म कर्तव्यं यस्यासौ विश्वकर्मा। तादृशः प्रजापतिर्योऽस्ति तस्य प्रजापतेर्देवं द्योतनात्मकं मनो यज्ञेनानेन राध्यासमाराधयिष्यामि । अर्थे गा अस्मद्रक्षणप्रयोजने निमित्तभूते सत्यस्मत्समीपं गतः प्रजापतिरस्य भयहेतोर्दुरात्मनः शरीरादिकं जहितः परित्यजतु विनाशयतु । हेऽवसानपते विघ्नमन्तरेणावसानस्य यागसमाप्तेः पालक प्रजापते मे ममावसानं कर्मसमाप्तिं विन्द लम्भस्व ।

अथावभृथगमनकाले होममन्त्रमाह—

नमो रुद्राय वास्तोष्पतये। आयने विद्रवणे
(७) । उद्याने यत्परायणे । आवर्तने
विवर्तने । यो गोपायति तꣳ हुवे, इति।

वास्तोष्पतये गृहग्रामादिभूमिस्वामिने रुद्राय नमोऽस्तु । आयने वास्तुं प्रत्यागमने प्रवेशावसरे विद्रवणे वास्तोः सकाशादन्यत्र गमनावसर उद्यानेऽन्यत्र वासार्थं वास्तोः परित्यागे परायणे मरणेन वास्तोः परित्यागे यत्र यो रुद्रो गोपायति । आवर्तनं कुत्रचिद्गत्वा पुनर्वास्तुं प्रत्यागमनमावर्तनम् । तस्मिन्नेव वास्तौ विविधं वर्तनं विवर्तनम् । तत्रोभयत्र च यो रुद्रो गोपायति तं रुद्रं हुवे, आराधयितुमाह्वयामि ।

अथ यस्त्रिविधः सक्तुहोमस्तत्र प्रथमो मन्त्रो "विश्वलोपविश्वदावस्य" इत्यसौ संहितायामेवाऽऽम्नातः । अत्र द्वितीयमन्त्रमाह—

यान्यपामित्यान्यप्रतीतान्यस्मिं । यमस्य बालिना चरामि । इहैव सन्तः प्रति तद्यातयामः ।
जीवा जीवेभ्यो निर्हराम एनत् , इति ।

अपामित्यान्यपाकर्तव्यान्यप्रतीतानि पूर्वमप्रत्यर्पितानि तादृशानि यान्यृणानि प्राप्येति शेषः। अहमस्मि वर्ते तेषां सर्वेषामपाकरणाय यमस्य देवस्य बलिना पूजया चरामि पूजां करोमीत्यर्थः। इहैव जन्मनि सन्तो वर्तमाना वयं तत्सर्वमृणं प्रतियातयामः+।

अथ तृतीयं मन्त्रमाह—

अनृणा अस्मिन्ननृणाः परस्मिन्। तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः (८)। सर्वान्पथो अनृणा आक्षीयेम, इति।

अस्मिन्वर्तमाने मनुष्यजन्मन्यनृणा ऋणरहिताः स्याम। परस्मिन्नेतदपेक्षया भविष्येऽपि मनुष्यजन्मन्यनृणाः स्याम। उभयापेक्षया तृतीये लोके त्रिसंख्यापूरके स्वर्गजन्मन्यनृणाः स्याम। ततश्च ये देवयाना देवगमनयोग्याः पन्थान उतापि च पितृयाणाः पितृगमनयोग्या ये पन्थानः सन्ति तान्सर्वान्पथो वयमनृणा एवाऽऽक्षीयेमाऽऽभिमुख्येन प्राप्य निवसाम। यद्वा मन्त्रद्वयमिदमवभृथादागमने द्रष्टव्यम्।

अथ सौमिकेवेदः प्राच्यामुदीच्यां वोदवसायेष्टेर्देवयजनाध्यवसाने मन्त्रमाह—

इदमूनु श्रेयोवसानमागन्म। शिवे नो द्यावापृथिवी उभे इमे। गोमद्धनवदश्ववदूर्जस्वत्। सुवीरा वीरैरनु संचरेम, इति।

इदमूनुरिदमेव परिदृश्यमानं श्रेयोऽतिशयेन प्रशस्तमवसानं देवयजनरूपं भूमेः प्रदेशं प्रत्यगन्माऽऽगताः स्मः। इमे द्यावापृथिवी उभे अपि नोऽस्मान्प्रति शिवे यागनिष्पादनेन सुखहेतू भवेताम्। अतस्तद्गोमद्बहुभिर्गोभिर्युक्तं धनवद्बहुधनोपेतमश्ववद्बह्वश्वमूर्जस्वद्बह्वन्नं जीवनं यथा भवति तथा सुवीराः शोभनापत्या वयं वीरैर्भृत्यादिभिः सहानुसंचरेमानुक्रमेण द्यावापृथिव्यौ वर्तेमहि।

---

+ अत्र किंचित्त्रुटितम्।

अथ महाव्रते फलकं कूर्चं वाऽधिरुह्याध्वर्युः शस्त्रं प्रतिगृणाति। तत्राऽऽरोहणे द्वौ मन्त्रौ। तयोः प्रथममन्त्रमाह—

अर्कः पवित्र॑ᳬ रज॑सो विमा॑नः । पुनाति॑ देवानां॑ भुव॑नानि विश्वा॑। द्यावा॑पृथिवी पय॑सा सं॑विदाने । घृतं॑ दु॑हाते अमृतं॑ प्रपी॑ने, इति ।

योऽयमर्क आदित्यः सोऽयं देवानां मध्ये पवित्रं पावनो रजसो रञ्जनात्मकस्यान्तरिक्षस्य विमानो विशेषेण परिच्छेत्ता तादृश आदित्यो विश्वा भुवनानि सर्वाणि भूतजातानि पुनाति शोधयति । ततस्तेनाऽऽदित्येन पूते द्यावापृथिव्यौ पयसा युक्ते सत्यौ संविदाने परस्परमैकमत्यं गते प्रपीने प्रकर्षेण वृद्धे सत्यौ घृतं भूलोके पातव्यमाज्यममृतं स्वर्गे पातव्यं पीयूषं च दुहाते संपादयतः[1]।

अथ द्वितीयमाह—

पवित्र॑मर्को रज॑सो विमा॑नः। पुनाति॑ देवानां॑ भुव॑नानि विश्वा॑ । सुव॑ज्योति॑र्यशो॑ महत्॑। अशी॑महि गाध॑मुत प्रति॑ष्ठाम् ( ९ ), इति ।

चातयतः श्रीणीताᳬ सत्यमाहुरशीमहि गणे कुरु विद्वर्णे पितृयाणा अर्को रजसो विमानस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अत्र विश्वेत्यन्तं पूर्ववत् । तस्याऽऽदित्यस्य प्रसादाज्ज्योतिः प्रकाशोपेतं यशः कीर्त्या युक्तं महत्प्रभूतं गाधं सुस्थितं सुवः स्वर्गमशीमहि व्याप्नुयाम । उतापि च प्रतिष्ठामिह लोके स्थैर्यं चाशीमहि ।

अत्र विनियोगसंग्रहः—

अनोपांशोरभिषवे अपां ग्राव्णोऽभिमन्त्रयेत् ।
देवाः पुनर्ग्रावमन्त्रो वाक्श्रयेद्दधिघर्मकम् ॥ १ ॥

---

१ क. संपादयेताम् ।

यं होमे दधिघर्मस्य मयीत्येतस्य भक्षणम् ।
मित्रो नाभिं स्पृशेदूद्वाभ्यां यस्मात्षोडशिमन्त्रणम् ॥ २ ॥
इन्द्राधि जुहुयादेतमिन्द्रश्चेति प्रभक्षयेत् ।
प्रजापतिर्भये होमो नमोऽवभृथहोमकः ॥ ३ ॥
यान्यागच्छेदवभृथादिदम् यागभूग्रहः ।
अर्को महाव्रते कूर्चे शस्त्रं प्रतिगृणञ्जपेत् ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ दशमोऽनुवाकः ।

---

नवमेऽनुवाक उपांश्वभिषवादिमन्त्रा उक्ताः । दशमे प्रायश्चित्तमन्त्रा उच्यन्ते । तत्र हविर्धानादिपाते होमादिमन्त्रानाह—

उदस्ताप्सीत्सविता मित्रो अर्यमा । सर्वानमित्रानवधीद्युगेन । बृहन्तं मामकरद्वीरवन्तम् । रथंतरे श्रयस्व स्वाहा पृथिव्याम् । वामदेव्ये श्रयस्व स्वाहाऽन्तरिक्षे । बृहति श्रयस्व स्वाहा दिवि । बृहता त्वोपस्तभ्नोमि, इति ।

योऽयं सविता सोऽयमुदस्ताप्सीत्पतितस्य हविर्धानादेरुत्तम्भनं करोतु । एवं मित्रोऽर्यमा चोत्तम्भनं कुरुताम् । सोऽयं देवतात्रयसमूहो युगेन योगेन युगपदेव सर्वानमित्रान्वैरिणोऽवधीत्, तथा मां यजमानं बृहन्तं धनादिसमृद्धियुक्तं वीरवन्तं कर्मशूरैः पुत्रैरुपेतमकरत्करोतु । रथंतरे साम्नि पृथिव्यां च श्रयस्व । हे देवतासमूह हविर्धानमिदं तत्रोभयत्राऽऽश्रितं कुरु । स्वाहा तुभ्यमिदं स्वाहुतमस्तु । तथा वामदेव्ये साम्न्यन्तरिक्षलोके चैतत्सदः श्रयस्वाऽऽश्रितं कुरु । तथा बृहति साम्नि दिवि द्युलोके च श्रयस्व । पतितमिदमाग्नीध्रीयमाश्रितं कुरु । तुभ्यमिदं स्वाहुतमस्तु । रथंतरादयस्त्रयो मन्त्रा हविर्धानादिषु त्रिषु व्यवस्थिताः । उदस्ताप्सीदिति सर्वशेषोऽनुषज्यते । हे हविर्धानदेव त्वां बृहता साम्ना तत्सामर्थ्येनो-

---

१ क. °विगृणात्यसौ ॥ ४ ॥ २ क. ख. °न्तं महान्तं ध° ।

पस्तम्भोम्युपेत्योत्तम्भितं करोति । सोऽयमुपस्तम्भनमन्त्रः ।

अथ यदि वपा हविरवदानं वा स्कन्देत्तदादाने मन्त्रमाह—

आ त्वां ददे यशसे वीर्याय च । अस्मा-
स्वंघ्निया यूयं दधाथेन्द्रियं पर्यः, इति ।

हे स्कन्नद्रव्य मम यशो वीर्यसिद्ध्यर्थं त्वां पुनराददे । हेऽघ्निया गावो यूय-मिन्द्रियं पय इन्द्रियाभिवृद्धिसाधनं क्षीरमस्मासु दधाथ संपादयत ।

अथ पूर्वमन्त्रेण स्कन्ने द्रव्ये स्रुच्यवस्थापिते सति स्कन्दनमायश्चित्तार्थहोममन्त्रमाह—

यस्ते द्रप्सो यस्त उदर्षः (१) । दैव्यः केतुर्विश्वं
भुवनमाविवेश । स नः पात्वरिष्टचै स्वाहा, इति ।

हे हविस्तव संबन्धी यो द्रप्सो लेशो यश्चोदर्ष उद्भूतावयवः स सर्वोऽपि दैव्यो देवयोग्यः केतुर्देवैः प्रज्ञातश्च सन्विश्वं भुवनं सर्वं जगदाविवेश न त्वसौ विनष्टः । स त्वमरिष्टचै हिंसाराहित्याय नोऽस्मान्पाहि रक्ष । तदर्थं स्वाहुतमिदं-मस्तु ।

यदुक्तं सूत्रकारेण—“ यद्येनमार्त्विज्याद्वृतः सन्तं निर्हरेरन्नाग्नीध्रे जुहुयात् ” इति । तत्र मन्त्रमाह—

अनु मा सर्वो यज्ञोऽयमेतु । विश्वे देवा मरुतः
सामार्कः । आप्रियश्छन्दांसि निविदो
यजूंषि । अस्यै पृथिव्यै यद्यज्ञियम्, इति ।

अयं यज्ञः सर्वः कृत्स्नावयवसंयुक्तो मामन्वेतु न त्वन्यमनुगच्छतु । सर्वश-ब्दार्थं एव स्पष्टी क्रियते—ये च विश्वे देवा यज्ञनिष्ठा ये च मरुतो देवा यच्च साम रथंतरादिकं यश्चार्क आदित्यो याश्चाऽऽप्रियः प्रयाजयाज्या यानि च गाय-त्र्यादीनि च्छन्दांसि याश्च निविदः शस्त्रावयवा यानि च यजूंषि च्छन्दोरहिता मन्त्रा यच्चान्यद्यज्ञियं यज्ञार्हमङ्गमस्यै पृथिव्या अस्यां पृथिव्यां वर्तते तत्सर्वं मामन्वेतु मदीयो यज्ञः सगुणो भवतु ।

---

१ क. संपादयथ ।

यदुक्तं सूत्रकारेण—"यद्येककपाल स्कन्देत्परि वा यथास्थानं कल्पयति" इति । तत्र मन्त्रमाह—

प्रजापतेर्वर्तनिमनुवर्तस्व । अनु वीरैरनुराध्याम गोभिः । अन्वश्वैरन सर्वैरु पुष्टैः । अनु प्रजयाऽन्विन्द्रियेण (२) । देवा नो यज्ञमृजुधा नयन्तु, इति ।

हे, एककपाल प्रजापतेर्वर्तनिं प्रजापतिना योऽयं मार्गस्तव सृष्टस्तमेव मार्गमनुवर्तस्वानुसर । ततो वयमपि वीरैः पुत्रादिभिरनुक्रमेण समृद्धा भूयास्म । तथा गोभिरश्वैः सर्वैरपि पुष्टैर्धनैः प्रजया भृत्यादिरूपयेन्द्रियेण चक्षुरादिपाटवेन च समृद्धा भूयास्म । देवाः सर्वे नोऽस्मदीयं यज्ञमृजुधा वैकल्यराहितेन मार्गेण नयन्तु ।

अथ तस्यैककपालस्य यजमानानुमन्त्रणे मन्त्रमाह—

प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रति प्रजायां प्रतितिष्ठामि भव्ये । विश्वमन्याऽभिवावृधे । तदन्यस्यामधिश्रितम् । दिवे च विश्वकर्मणे । पृथिव्यै चाकरं नमः, इति ।

क्षत्रे राष्ट्रस्वामिनि राजनि प्रतितिष्ठामि स्वतन्त्रो भवामि । तथा राष्ट्रेऽश्वेषु गोषु पुत्रादिरूपायां प्रजायां भव्ये प्रशस्ते स्वर्गे च प्रतितिष्ठामि स्वतन्त्रो भवामि। तथाऽन्या द्यावापृथिव्योर्मध्य एका द्यौर्विश्वं भूतजातमभिवावृधे वृष्टिद्वाराऽऽभिमुख्येन वर्धयति । तदभिवर्धितं विश्वमन्यस्यां पृथिव्यामधिश्रितमुपरि स्थितम् । विश्वकर्मणे कृत्स्नजगदभिवृद्धिकारिण्यै दिवे च जगतो धारयित्र्यै पृथिव्यै च नमो नमस्कारमकरं करोमि ।

अथैककपालस्कन्नप्रायश्चित्तहोमे मन्त्रमाह—

अस्कान्द्यौः पृथिवीम् । अस्कानृषभो युवा गाः (३) । स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः

१ क. °पालः स्क° ।

प्रजनयतु । अस्कानजनि प्राजनि । आस्कन्ना-
ज्जायते वृषा । स्कन्नात्प्रजनिषीमहि, इति ।

अत्र स्कन्दतिधातुः प्राप्त्यर्थो न तु शोषणार्थः। द्यौरियं वृष्टिद्वारेण पृथिवी-मस्कान्प्राप्नोति । युवा ऋषभश्च वत्सोत्पादनाय गा अस्कान्प्राप्नोति । इमा विश्वा भुवनानि दृश्यमानानि सर्वाणि भूतजातानि स्कन्ना परस्परं प्राप्नोति (प्राप्नुवन्ति)। स्कन्नः प्राप्तोऽयं यज्ञः प्रजनयतु प्रजामुत्पादयतु । यदिदं हविरस्कान्स्कन्दति स्म तदिदं न विनष्टं किंत्वजनि हविष्ट्वेनैव निष्पन्नम् । अत एव प्राजनि प्रजापशु-रूपेण प्रकर्षेण जायते । स्कन्नादस्माद्धविषो वृषा सेचनसमर्थ आजायते । अतो वयं च स्कन्नाद्धविषः प्रजनिषीमहि प्रजापशुसमृद्धा भूयास्म ।

यदा यज्ञस्य विघ्नकरं भयमुपस्थितं भवति तदा सर्वयागद्रव्याणि द्रोण-कलशे गृहीत्वा होममन्त्रमाह—

ये देवा येषामिदं भागधेयं बभूव । येषां
प्रयाजा उतानूयाजाः।इन्द्रज्येष्ठेभ्यो वरुण-
राजभ्यः।अग्निहोतृभ्यो देवेभ्यः स्वाहा, इति।

ये देवा द्युलोकवासिनः सन्ति, येषां देवानामिदं सर्वं पुरोडाशादिकं भागधेयं बभूव संकल्पितं भवति, येषां च प्रयाजा अनूयाजाश्च भागधेयं, तेभ्यो देवेभ्यः स्वाहुतमस्तु । कीदृशेभ्यो देवेभ्य इन्द्रज्येष्ठेभ्य इन्द्रो ज्येष्ठः प्रधानभूतो येषां तेभ्यः, वरुणो राजा येषां तेभ्यः, अग्निहोतृभ्योऽग्निर्होता येषां तेभ्यः ।

अथ यद्यभक्षिते चमसे स्तोत्रमुपाकुर्यात्तदा प्रायश्चित्तहोमार्थास्त्रयो मन्त्राः । तत्र प्रथममाह—

उत त्या नो दिवा मतिः (४) । अदितिरूत्याऽऽ-
गमत् । सा शन्ताची मयस्करत् । अप स्त्रिधः, इति ।

उतापि च त्या यैषा दिवा द्योतनवती, अदितिरखण्डनीया नोऽस्माकं मति-रूत्या रक्षणेन निमित्तेनाऽऽगमदागच्छेत्सा तादृशी मतिः शन्ताची, अनिष्टशम-नमापिका सती मयस्करत्सुखं करोतु । स्त्रिधः शोषणकर्मविस्मरणनिमित्तमस्मदीयं शरीरादिक्षयमपकरदपकरोत्वपगमयतु ।

१ क. ख. °भश्चापत्योत्पादनार्थं गा । २ क. °गच्छतु सा ता° ।

अथ द्वितीयं मन्त्रमाह--

उत त्या दैव्या भिषजा। शं नस्करतो अश्विना।
युयातामस्मद्रपः। अप स्रिधः, इति।

उतापि च त्या दैव्या भिषजा तौ देवसंबन्धिनौ चिकित्सकावश्विनौ नोऽस्माकं शं करतः सुखं कुरुताम्। किंच रपो विस्मरणनिमित्तं पापमस्मद्युयातामस्मत्तः पृथक्कुरुताम्। स्रिधः शोषणमपगमयताम्।

अथ तृतीयं मन्त्रमाह--

शमग्निरग्निभिस्करत्। शं नस्तपतु सूर्यः। शं
वातो वात्वरपाः (५)। अप स्रिधः इति।

अयमग्निराहवनीय इतरैरग्निभिः सह शं करदस्माकं सुखं करोतु। सूर्यश्चास्माकं शं सुखं यथा भवति तथा तपतु। अरपा अपापो दुःखमकुर्वन्वातो वायुर्वातु प्रवर्तताम्। स्रिधः शोषणमपगमयतु।

अथ तस्य चमसस्य प्रक्षालितस्येतरचमसेषु योजने मन्त्रमाह--

तदित्पदं न विचिकेत विद्वान्। यन्मृतः
पुनरप्येति जीवान्। त्रिवृद्यद्भुवनस्य रथ-
वृत्। जीवो गर्भो न मृतः स जीवात्, इति।

यद्यस्मिन्कर्मानुष्ठानरूपे पदे स्थितो मृतः पुरुषः पुनर्दे( र्जी )वानप्येति न तु नरकं प्राप्नोति, तदित्पदं तदेव कर्मानुष्ठानं मुख्यं पदं, तच्च शास्त्रतो विद्वानपि पुरुषो न विचिकेत विविच्य न जानाति। यद्यस्मात्कारणाद्भुवनस्य गर्भो लोकस्य मध्ये वर्तमानो जीवस्त्रिवृत्सात्त्विक्याद्यास्तिस्रो वृत्तयो यस्यासौ त्रिवृत्, रथवद्रथचक्रवत्पुनः पुनरावर्तमानः, अत एव लोकदृष्ट्या मृतोऽपि वस्तुतः स जीवो न मृतः किंतु जीवाज्जीवत्येव। सर्वात्मना तिरोहिते रथचक्रवत्पुनः पुनरावृत्तिर्न स्यात्। अतो देहस्यैव मरणम्। आत्मा तु जीवत्येव। अयमर्थः--यथा रथचक्रं पुनः पुनः पर्यावर्तते तथा जीवोऽपि संसारे पुनः पुनः परिभ्रमति। स च सत्त्वरजस्तमोगुणैरावृतत्वात्कदाचित्सत्त्वगुणाधिक्येन शास्त्रार्थं जानन्नपि कालान्तरे तमोगुणाधिक्ये सति तं शास्त्रार्थं न जानात्यतस्तमोगुणकृतं प्रमादिकं चमसभक्षणविस्मरणं नत्वयं पुरुषापराध इति।

यदुक्तं सूत्रकारेण—"अववृष्टं भक्षमभिमन्त्र्य" इति। तत्र मन्त्रमाह—

प्रत्यस्मै पिपीषते। विश्वानि विदुषे भर। अरं-
गमाय जग्मवे। अपश्चाद्दध्वने नरे, इति।

हे वृष्टिजलमिश्रितभक्षास्मै भक्षकाय प्रतिहर तदीयं स्वरूपं प्रत्यावर्तय। कीदृशाय पिपीषते पातुमिच्छते। विश्वानि कर्माणि विदुषे जानते। अरंगमाया-रमलमन्यूनं यथा भवति तथा प्राप्नुवते। जग्मवे पुनः पुनः कर्मसु गच्छते प्रवर्त-मानाय। अपश्चाद्दध्वने पश्चाद्भक्षोत्तरकालं दीप्तिरहिताय, भक्षितं जरयितुमस-मर्थाय। नरे ऋत्विगादिरूपाय मनुष्याय।

अथाववृष्टस्याभिमन्त्रितस्य सोमस्य भक्षणे मन्त्रमाह—

इन्दुरिन्दुमवागात्। इन्दोरिन्द्रोऽपात्।
तस्य त इन्दविन्द्रपीतस्य मधुमतः।
उपहूतस्योपहूतो भक्षयामि (६), इति।

उदर्षं इन्द्रियेण गामतिरंरपा अंगात्रीणि च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये
दशमोऽनुवाकः ॥ १० ॥

इन्दुर्देवतारूपः सोम इन्दुं लतारूपं सोममवागात्स्वकीयत्वेनावगच्छति। इन्द्रो देव इन्दोर्लतात्मकस्य सोमस्यांशमपात्पीतवान्। हे, इन्दो लतात्मसोम तस्य ते तादृशस्य तवांश उपहूतोऽन्यैरनुज्ञातोऽहं भक्षयामि। कीदृशस्य तव, इन्द्रपीतस्येन्द्रेण प्रथमं स्वीकृतस्य मधुमतो मधुरसोपेतस्योपहूतस्यान्यैरनुज्ञातस्य।

अत्र विनियोगसंग्रहः—

हविर्धाने सदसि चाऽऽग्नीध्रीये पतिते सति।
उदस्ता जुहुयाद्भेदो रथवामबृहत्त्रिभिः ॥ १ ॥
बृहोष्टयेन्मण्ठपांस्तान्यानास्कन्नहविर्ग्रहः।
यस्ते होमोऽनुमाऽऽर्त्विज्याल्लिहतावाहुतिर्भवेत् ॥ २ ॥
स्कन्देदेककपालश्चेत्स्वस्थानं कल्पयेत्प्रजा।
प्रति तं मन्त्रयेदस्कान्प्रायश्चित्तं जुहोति हि ॥ ३ ॥

ये द्वे भये यज्ञविघ्नकरे सर्वहविर्हुतिः ।
उत त्याऽभक्षिते सोमचमसे त्रिसृभिर्हुतिः ॥ ४ ॥
तदित्यक्षालितं पात्रं चमसेष्वपि संसृजेत् ।
प्रति वृष्टं मन्त्रयेत तमिन्दुरिति भक्षयेत् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथैकादशोऽनुवाकः ।

---

दशमे सौमिकप्रायश्चित्तमन्त्रा उक्ताः । एकादशे दार्शिकादौ प्रायश्चित्तमन्त्रा उच्यन्ते । तत्र प्रथमं मन्त्रमाह—

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः । ब्रह्म यज्ञानाᳪं हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताऽऽहुतिरेतु देवान्, इति ।

ब्रह्म सर्वजगदुपादानं यत् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युपनिषदि प्रोक्तं तदेव मनसो वाचो यज्ञानां दर्शपूर्णमासादीनां हविषां पुरोडाशादीनां विशेषत आज्यस्य च प्रतिष्ठा निर्वाहहेतुः । सृष्टिस्थित्यादिकारित्वात् । एवं सति यदतिरिक्तं मन्त्राद्याधिक्येन कृतं यच्च कर्मणः संबन्धि हीनं मन्त्रादिभिर्न्यूनं तत्सर्वं यज्ञो यष्टव्यं तदेव परब्रह्म कल्पयन्फलसाधनसमर्थं कुर्वन् । पर्वाणि यागकालांश्च प्रतिरन्वर्धयन् । यागैरशून्यं कुर्वन्नेत्यविच्छेदेन वर्तते । तस्मादियं स्वाहाकृता स्वाहाकारेण संस्कृताऽऽहुतिर्देवानेतु गच्छतु ।

अथ द्वितीयं मन्त्रमाह—

आश्रावितमत्याश्रावितम् । वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताऽऽहु-

---

१ क. °भिरूनं ।

तिरस्तु देवान् ( १ ), इति ।

अस्मिन्यज्ञे यदविराश्रावितं समीचीनाश्रावणयुक्तं यच्चात्याश्रावितमतिरिक्ताश्रावणयुक्तं यच्च वषट्कृतं सम्यग्वषट्कारेण दत्तं यच्चात्यनूक्तमतिक्रान्तानुवचनयुक्तं तत्सर्वं यज्ञः कल्पयत्वेतीत्यन्वयः । अतिरिक्तमित्यादि पूर्ववत् ।

अथ तृतीयं मन्त्रमाह—

यद्वो देवा अतिपादयानि । वाचाचित्प्रयतं देव हेडनम् । अरायो अस्मा२ अभिदुच्छुनायते । अन्यत्रास्मन्मरुतस्तन्निधेतन, इति ।

हे देवा मरुतो वो युष्माकं संबन्धि यत्कर्मातिपादयानि, अहमतिपन्नं करोमि । अकरणमन्यथाकरणं चातिपत्तिः । वाचाचिद्वाचा मनसाऽपि देवानां क्रोधकारणं यदस्माभिः प्रयतं प्रयत्नेन संपादितम् । अरायोऽरिः शत्रुर्यः कोऽप्यस्मानभिलक्ष्य दुच्छुनायते दारिद्र्ययुक्तान्करोति तत्सर्वमस्मत्तोऽन्यत्र निधेतन हे मरुतः स्थापयत । तत्फलमस्मासु मा भूत् ।

अथ चतुर्थं मन्त्रमाह—

तत्तं म आऽपस्तदु तायते पुनः । स्वादिष्ठा धीतिरुचथाय शस्यते । अयं२ समुद्र उत विश्वभेषजः । स्वाहाकृतस्य समुतृप्णुतर्भुवः, इति ।

मे मदीयमपः कर्माऽऽततं सर्वतो विस्तीर्णं यावज्जीवं संकल्पेन प्रवृत्तत्वात् । तदु तदेव कर्मेदानीं पुनस्तायते भूयो विस्तार्यते । किंच स्वादिष्ठा स्वादुतमा धीतिर्धारणहेतुराज्याहुतिरुचथाय कर्मणे शस्यते प्रशस्यतां भजते । 'उच' समवाय इति धातुः । हविःसमवायाधीनत्वादुचथः कर्म । यस्मादयं हविर्विशेषः प्रशस्तस्तस्मादयं समुद्रः समुद्रसमानः । 'यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते' इति श्रुतेः । उत विश्वभेषजोऽपि च सर्वानिष्टशमनहेतुः । हे ऋभुवो देवाः स्वाहाकृतस्य स्वाहाकारेण प्रत्यर्पितस्य हविषः स्वीकारेण समुतृप्णुत सम्यगेव तृप्ता भवत ।

---

१ क. "तिक्रान्ताभा" । २ क. "याधारत्वा" ।

अथ पञ्चममारभ्य त्रयोदशान्तानां नवानां मन्त्राणां प्रतीकानि दर्शयति—

उद्वयं तम॑सस्परि॑ । उदु त्यं चि॒त्रम् ( २ ) । इ॒मं मे॑ वरु॒ण तत्त्वा॑ यामि । त्वं नो॑ अ॒ग्ने स त्वं नो॑ अग्ने । त्वम॑ग्ने अ॒या॒सि प्रजा॑पते, इति ।

उद्वयं तमस इत्ययं मन्त्रः समास्त्वाऽग्न इत्यनुवाके व्याख्यातः। उदु त्यं जातवेदसं चित्रं देवानामित्येतौ मन्त्रौ तदु त्यमित्यनुवाके व्याख्यातौ । इमं मे वरुण श्रुधी हवं तत्त्वा यामि ब्रह्मणेत्येतौ मन्त्रौ, इन्द्रं वो विश्वतस्परीन्द्रं नर इत्यनुवाके व्याख्यातौ । त्वं नो अग्ने वरुणस्य विद्वान्स त्वं नो अग्नेऽवम इत्येतावायुष्ट आयुर्दा अग्न इत्यनुवाके व्याख्यातौ । त्वमग्ने अयास्ययासन्नित्ययं जुष्टो दमूना इत्यत्र व्याख्यातः । प्रजापते न त्वदेतानीत्ययं सोमस्य त्विषिरसीत्यनुवाके व्याख्यातः ।

अथ चतुर्दशमन्त्रमाह—

इ॒मं जी॒वेभ्यः॑ परि॒धिं द॑धामि । मैषां नु॑ गा॒द॒परो॒ अर्ध॒मेतम् । श॒तं जीव॑न्तु श॒रद॑ः पुरू॒चीः । ति॒रो मृ॒त्युं द॑धतां॒ पर्व॑तेन, इति ।

जीवेभ्यः सर्वेषां जीवानामर्थे, इमं होमं परिधिं परितो धारकं दधामि स्थापयामि । एषां जीवानां मध्येऽपरः कश्चिदप्येतमर्धं शतसंवत्सरसंख्याकस्याऽऽयुषोऽर्धं पञ्चाशद्वर्षरूपमेतं भागं मा गान्मा प्राप्नोतु । किंतु शतं शरदः शतसंख्याकान्संवत्सराञ्जीवन्तु । कीदृशीः शरदः पुरूचीः पुरून्बहून्भोगानञ्चन्ति प्राप्नुवन्तीति पुरूच्यस्तादृशीः । एषां जीवानां मृत्युं पर्वतेन पर्वतसदृशेनानेन होमेन तिरो दधतां व्यवहितं कुर्वताम् । यद्वा गोमायुपतनादिनिमित्ते सति "इमं मे वरुण" इत्यादिषड्भिरनेन मन्त्रेण वा दक्षिणतः पाषाणं स्थापयेत् । मन्त्रस्तत्परतया व्याख्येयः ।

अथ पञ्चदशमारभ्य द्वाविंशपर्यन्तानष्टौ मन्त्रानाह—

इ॒ष्टेभ्यः॒ स्वाहा॒ वष॒डनि॑ष्टेभ्य॒ः स्वाहा॑ । भे॒ष॒जं दु॒रि॑ष्ट्यै॒ स्वाहा॒ निष्कृ॑त्यै॒ स्वाहा॑ । दौरा॑ध्यै॒ स्वाहा॒

दैवीभ्यस्तनूभ्यः स्वाहा (३) । ऋद्ध्यै स्वाहा
समृद्ध्यै स्वाहा, इति ।

इष्टेभ्यः सम्यग्यागेनाऽऽराधितेभ्योऽग्न्यादिभ्यस्तृप्त्यतिशयार्थमिदं स्वाहुतमस्तु । ये त्वनिष्टा अनाराधितास्तेभ्य इदं वषट्‌ढविर्दत्तं तदर्थमिदं स्वाहुतमस्तु । दुरिष्टिरन्यथानुष्ठानं तस्य भेषजं समाधानहेतुरिदं स्वाहुतमस्तु । निष्कृत्यै प्रायश्चित्तार्थमिदं स्वाहुतमस्तु । आसमन्ताद्दृद्धिरार्द्धिर्दुष्टा चासावार्द्धिश्च दुरार्द्धिः फलवैकल्यं तत्समाधानार्थं स्वाहुतमिदमस्तु । याश्चान्या दैव्यस्तनवस्ताभ्यः स्वाहुतमिदमस्तु । ऋद्धिः फलप्राप्तिः समृद्धिस्तत्रैवातिशयस्तदुभयार्थं स्वाहुतमस्तु ।

अथ त्रयोविंशं मन्त्रमाह—

यतं इन्द्र भयामहे । ततो नो अभयं कृधि । मघवञ्छग्धि
तव तन्न ऊतये । वि द्विषो वि मृधो जहि, इति ।

हे इन्द्र यतो मृत्युरोगचोरादेर्भयामहे वयं भीतिं प्राप्नुमस्ततः सर्वस्मान्नोऽस्माकमभयं कृधि कुरु । हे मघवंस्तत्र भयस्थाने नोऽस्माकं तवोतये त्वदीयरक्षार्थं शक्तो वर्तस्व । किंचास्माकं द्विषः शत्रून्विजहि विनाशय, मृधः संग्रामांश्च विजहि ।

अथ चतुर्विंशमाह—

स्वस्तिदा विशस्पतिः । वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः । स्वस्तिदा अभयंकरः, इति ।

अयमिन्द्रो नोऽस्माकं पुर एत्वग्रतो रक्षकत्वेन वर्तताम् । कीदृशः स्वस्तिदाः क्षेमस्य दाता । विशस्पतिः प्रजायाः पालकः । वृत्रहा पापस्य हन्ता । विमृधो विनिवारितसंग्रामः । वशी जितेन्द्रियः । वृषा सेक्ता । स्वस्तिदाः शोभनं सद्भावमस्मभ्यं प्रयच्छन् । अभयंकरो भयनिवृत्तेः कर्ता ।

अथ पञ्चविंशमाह—

आभिर्गीर्भिर्यदतो न ऊनम् (४)। आप्यायय
हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा

रुजासिं। भूयिष्ठभाजो अधं ते स्याम, इति।

हे हरिवोऽश्वयुक्तेन्द्राऽऽभिर्गीर्भिरस्मदीयस्तुतिभिर्वर्धमानस्त्वमतोऽस्मात्कर्मण ऊनमङ्गं नोऽस्मदर्थमाप्याययाभिवर्धय। हे हरिवो यदा यस्मिन्काले स्तोतृभ्यः स्तोतॄननुग्रहार्थं महि गोत्रा महतः पर्वतान्मेघान्वा रुजासि भग्नान्करोषि, अध तदा वयं ते तवानुग्रहाद्भूयिष्ठभाजः स्याम प्रभूतधनानां लब्धारो भूयास्म।

अथ षड्विंशमाह—

अनाज्ञातं यदाज्ञातम्। यज्ञस्यं क्रियते मिथुं। अग्ने तदस्य कल्पय। त्वꣳ हि वेत्थं यथातथम्, इति।

यज्ञस्य संबन्धि कियदङ्गमनाज्ञातं शास्त्रक्रमेणास्माभिरज्ञातं यदप्याज्ञातं सम्यग्विज्ञातं सन्मिथु क्रियते मिथ्या क्रियते ज्ञानादज्ञानाद्वाऽन्यथाऽनुष्ठीयते। हेऽग्नेऽस्य कर्मणः संबन्धि तत्सर्वमङ्गं कल्पय फलप्रदानसमर्थं कुरु। हि यस्मात्कारणात्त्वं यथातथं कर्मणो वस्तुतत्त्वं वेत्थ।

अथ सप्तविंशमाह—

पुरुषसंमितो यज्ञः। यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय। त्वꣳ हि वेत्थं यथातथम्, इति।

यो यज्ञः सोऽयं पुरुषसंमितः पुरुषसदृशो यथा पुरुषोऽयमन्यूनातिरिक्तविशिष्टावयवस्तथा यज्ञोऽपि। किंचायं यज्ञः पुरुषसंमितः पुरुषेण सम्यङ्निर्मितश्च यस्मादेवं तस्माद्धेऽग्ने तदस्येत्यादि पूर्ववत्।

अष्टाविंशमाह—

यत्पाकत्रा मनसा दीनदक्षा न। यज्ञस्यं मन्वते मर्तासः। अग्निष्टद्धोता क्रतुविद्विजानन्। यजिष्ठो देवाꣳ ऋतुशो यजाति (५), इति।

देवाश्चित्रं तनूभ्यः स्वाहोनं पुरुषसंमितोऽग्ने तदस्य कल्पय पञ्च च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याय एकादशोऽनुवाकः॥ ११॥

पाको बालस्तद्वदन्यैस्त्रायन्ते रक्ष्यन्त इति पाकत्रा बालवदप्रबुद्धमतयो दीनदक्षाः क्षीणोत्साहा मर्तासो मनुष्या यजमाना यज्ञस्य यदङ्गं मनसा स्वकीयेन न मन्वते नावबुध्यन्ते तदङ्गं विजानन्क्रतुवित्कृत्स्नयागाभिज्ञो यजिष्ठोऽतिशयेन यष्टुं समर्थो होता देवानामाह्वाताऽग्निर्देवान्यष्टव्यानृतुशो यजाति तत्तदृतुकाले पूजयतु ।

अत्र विनियोगसंग्रहः—

ब्रह्म प्रतिष्ठा दर्शादौ प्रायश्चित्तार्थहोमकाः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ द्वादशोऽनुवाकः ।

---

एकादशे दर्शपूर्णमासप्रायश्चित्तमन्त्रा उक्ताः । द्वादशेऽग्निष्टोमादावेकविंशत्या दर्भपुञ्जीलैः पाव्यमानस्य यजमानस्य जपार्था मन्त्रा उच्यन्ते । तत्र प्रथममन्त्रमाह—

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चत । ऋतस्यर्तेन मामुत, इति ।

देवासो देवनशीला आदित्या अदितेः पुत्रा हे देवा देवहेडनं देवानां क्रोधकारणं यत्कर्म वयं चकृम तस्मादपराधान्मां यूयं मुञ्चत । उतापि चर्तस्य यज्ञस्य संबन्धिना, ऋतेन सत्येनानेन होमेन मा मां मुञ्चत ।

अथ द्वितीयमाह—

देवा जीवनकाम्या यत् । वाचाऽनृतमूदिम । अग्निर्मा तस्मादेनसः । गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम् ( १ ), इति ।

हे देवा वयं जीवनकाम्या जीवनमात्मन इच्छन्तो यदनृतं वाचोदिम राजसेवादौ तत्प्रियार्थमनृतमुक्तवन्तस्तस्मादनृतजन्यादेनसः पापाद्गार्हपत्योऽग्निर्मां प्रमुञ्चतु । यानि चान्यानि दुरितानि चकृम वयं सपुत्रपौत्रास्तत्र मामनेनसं पापरहितं करोतु । एतच्चोपलक्षणं, पुत्रादीनपि पापरहितान्करोतु ।

अथ तृतीयं मन्त्रमाह--

ऋतेन द्यावापृथिवी । ऋतेन त्वꣳ सरस्वति ।
ऋतान्मा मुञ्चताꣳहसः । यदन्यकृतमारिम, इति ।

हे द्यावापृथिव्यावृतेन यज्ञेन विगुणेन यत्पापं प्राप्तं तथा हे सरस्वति ऋतेन यत्पापं प्राप्तमृतात्प्राप्तात्तस्मादंहसस्त्वं द्यावापृथिव्यौ चेत्येता यूयं मां मुञ्चत मुक्तं कुरुत । यच्चान्यकृतमन्येन यज्ञव्यतिरिक्तेन निमित्तेन कृतं पापमारिम वयं प्राप्तवन्तस्तस्माच्च मां मुञ्चत ।

अथ चतुर्थं मन्त्रमाह—

सजातशꣳसादुत वा जामिशꣳसात् । ज्यायसः
शꣳसादुत वा कनीयसः । अनाज्ञातं देवकृतं
यदेनः । तस्मात्त्वमस्माज्जातवेदो मुमुग्धि, इति ।

सजाताः समानजन्मानो ज्ञातयः समानवयस्काः सखायो वा तैर्मयि कृतः शंसः प्रशंसा स्तुतिरुत वाऽथवा जामयो जाया भार्यास्ताभिर्मयि कृतः शंसः स्तुतिर्ज्यायाञ्ज्येष्ठभ्राता तस्य शंसस्तेन मयि कृता स्तुतिरुत वाऽथवा कनीयान्कनिष्ठभ्राता तस्य शंसस्तेन मयि कृता स्तुतिस्तस्मात्स्तुतिसंघान्मत्तेन मयाऽनाज्ञातं स्वचित्तेनापरामृष्टं देवकृतं देवविषये संपादितं यदेनः पापं हे जातवेदस्त्वमस्मात्पापान्मुमुग्धि मां मुक्तं कुरु ।

अथ पञ्चमं मन्त्रमाह—

यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्या-
मष्ठीवद्भ्याम् (२)। शिश्नैर्यदनृतं चकृमा
वयम् । अग्निर्मा तस्मादेनसः, इति ।

अष्ठीवद्भ्यां जानुभ्यां शिश्नैः शिश्नचापलप्रकारैर्वागादिभिः सर्वैर्यदनृतं लोकवेदविरुद्धं व्यापारं वयं चकृम । अग्निरित्यादिकं द्वितीयमन्त्रोक्तस्य वाक्यशेषस्य प्रतीकं स वाक्यशेषोऽत्राभ्याहृत्य योजनीयः ।

अथ षष्ठं मन्त्रमाह—

यद्धस्ताभ्यां चकर किल्बिषाणि । अक्षाणां

वग्नुमुपजिघ्नमानः । दूरेपश्या च राष्ट्र-
भृच्च । तान्यप्सरसावनुदत्तामृणानि, इति ।

यद्यानि किल्बिषाणि परद्रव्यापहरणादीनि हस्ताभ्यां वयं चक्रम । अक्षाणां चक्षुरादीन्द्रियाणां वग्नुं वर्जनीयं गन्तव्यं रूपादिविषयमित्यर्थः । तं विषयमुपजिघ्नमान उपहतं कुर्वन्, यत्पापं कृतवानस्मि तानि पापात्मकान्यृणानि दूरेपश्या च राष्ट्रभृच्चेत्येतन्नामधारिण्यावप्सरसावनुदत्तामानुकूल्येन प्रत्यर्पयताम् । पापरूपमृणं यथाऽस्माकं न भवति तथा कुरुतामित्यर्थः ।

अथ सप्तमं मन्त्रमाह--

अदीव्यन्नृणं यदहं चकार । यद्वाऽदास्यन्त्संजगारा जनेभ्यः । अग्निर्मा तस्मादेनसः, इति ।

अदीव्यन्समीचीनं व्यवहारमकुर्वन्नहं यादृशं चकार कपटेन परकीयं यद्वस्तु गृहीतवानस्मि, यद्वा यच्चान्यद्वस्तु, अदास्यन्नप्रत्यर्पयिष्यञ्जनेभ्यः सकाशादादाय सम्यग्भक्षितवानस्मि । अग्निरित्यादि पूर्ववत् ।

अथाष्टममन्त्रमाह-

यन्मयि माता गर्भे सति (३) । एनश्चकार
यत्पिता । अग्निर्मा तस्मादेनसः, इति ।

मयि गर्भरूपेणोदरं प्रविष्टे सति माता यदेनश्चकार परपुरुषसेवादिकं कृतवती । पिता यदेनः प्रतिषिद्धदिने मैथुनादि चकार । अग्निरित्यादि पूर्ववत् ।

अथ नवमं मन्त्रमाह-

यदा पिपेष मातरं पितरम् । पुत्रः प्रमुदितो
धयन् । अहिंसितौ पितरौ मया तत् ।
तदग्ने अनृणो भवामि, इति ।

यदा बालः[1] पुत्रः शिशुरहं प्रमुदितः प्रकर्षेण हृष्टो धयन्स्तनं पिबन्मातरं पिपेष पीडितवानस्मि तथा पितरं च हस्तपादोपघातेन पीडितवानस्मि तत्तदानीं पितरौ मातापितरावुभौ मयाऽहिंसितावनुपद्रुतौ भवताम् । यत्तन्माता-

---

१ क. बाल्ये ।

पित्रोर्विषये हेऽग्नेऽहमनृणो भवामि प्रत्युपकाररहित्यरूपं यत्पापं तेन मुक्तो भूयासम् ।

अथ दशमं मन्त्रमाह—

यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसः, इति ।

अन्तरिक्षादिकं लोकत्रयं जिहिंसिम वयं हिंसितवन्त इति यच्च तथा मातरं पितरं च जिहिंसिमेति यत् । लोकत्रयवर्तिनां मातापित्रोश्चानिष्टाचरणमेव हिंसा । अग्निरित्यादि पूर्ववत् ।

अथैकादशं मन्त्रमाह—

यदाशसा निशसा यत्पराशसा (४) । यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मा तस्मादेनसः, इति ।

शसु हिंसायामिति धातुः । आशसाऽभिमुख्येन कृतया हिंसया यत्पापं निशसा नितरां कृतया हिंसया यत्पापं पराशसा परावृत्तेन कृतया हिंसया यत्पापमन्यदपि नूतनमिदानींतनं यदेनश्चकृम पुराणं चिरकालव्यवहितं यदेनश्चकृम । अग्निरित्यादि पूर्ववत् ।

अथ द्वादशं मन्त्रमाह—

अतिक्रामामि दुरितं यदेनः । जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतां नु लोकम्, इति ।

दुरितं दुर्गतिकारणं यदेनस्तादृशमग्नेः प्रसादादतिक्रामामि । किंच परम उत्कृष्टे सधस्थे सहस्थाने विद्वत्सभादौ कृतं रिप्रं पापं जहाम्यग्नेः प्रसादात्परित्यजामि । ततश्च यत्र यस्मिँल्लोके सुकृतः पुण्यकृतो यन्ति न कदाचिदपि दुष्कृतो यन्ति तं सुकृतां पुण्यकृतां लोकं नु क्षिप्रमारोहामि ।

अथ त्रयोदशं मन्त्रमाह—

त्रिते देवा अमृजतैतदेनः । त्रित एतन्मनुष्येषु मामृजे । ततो मा यदि किंचिदानशे । अग्निर्मा

तस्मादेनसः (५)। गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम्, इति ।

एकतद्वितत्रिताख्यानां पुरुषाणामुत्पत्तिः पौरोडाशिककाण्ड उक्ता । योऽयं त्रितस्तत्रोक्तस्तस्मिन्देवा एतदेनः पापममृजत । अत एव ब्राह्मणमाम्नायते— 'ते देवा आप्त्येष्वमृजत' इति । अद्भ्यो जाता एकतद्वितत्रिता आप्त्या देवलेपितपापापराधाः । सोऽयं त्रित एतत्पापं मनुष्येषु ममृजे मृष्टवाँल्लेपितवानित्यर्थः। एतदपि तत्रैवाऽऽम्नातम्—"आप्त्या अमृजत सूर्याभ्युदिते सूर्याभ्युदितः सूर्याभिनिम्रुक्ते" इत्यादि । तत्र सूर्याभ्युदितादिमनुष्येष्ववस्थितात्पापात्सकाशात्किंचित्पापं यदि मामानशे प्राप्नुयात् । अग्निरित्यादि पूर्ववत् ।

अथ चतुर्दशमन्त्रमाह—

दिवि जाता अप्सु जाताः। या जाता ओषधीभ्यः। अथो या अग्निजा आपः । ता नः शुन्धतु शुन्धनीः, इति ।

या आपो दिविजाता द्युलोके प्रादुर्भूता नित्या वर्तन्ते याश्चाप्सु कर्मसु जाताः कर्मजन्या आपः कूपादिष्वाविर्भूता याश्चौषधिभ्यो रसात्मिका आविर्भूता आपोऽथो अपि च याश्चाऽऽपोऽग्निजा विद्युतो जाता वर्ष्यास्ताः सर्वा अपि शुन्धनीः सर्वस्य लोकस्य शोधयित्र्यो नोऽस्माञ्शुन्धन्तु शोधयन्तु ।

अथ पञ्चदशं मन्त्रमाह—

यदापो नक्तं दुरितं चराम । यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीत नः, इति ।

नक्तं रात्रौ यद्दुरितं चराम यद्वा दिवा यच्च दुरितमहानि चराम यत्पापं नूतनमिदानींतनं यत्पुराणं चिरकालव्यवहितं हे, आपो हिरण्यवर्णाः सुवर्णवत्तेजस्विन्यो यूयं ततः सर्वस्मात्पापान्नोऽस्मानुत्पुनीतोत्कर्षेण शुद्धान्कुरुत ।

अथ षोडशादीनां विंशान्तानां पञ्चानां मन्त्रणां प्रतीकानि दर्शयति—

इमं मे वरुण तत्त्वा यामि । त्वं नो अग्ने स त्वं नो अग्ने । त्वमग्ने अयासि (६), इति ।

अनेनसमष्टीवद्भ्यार्ं सति यत्पराशसा नशेऽग्निर्मा तस्मादेनसः पुनीत नस्त्रीणि च ।

गार्हपत्य ऋतेन यद्धस्ताभ्यां यन्मयि माता यदा पिपेष यदन्तरिक्षं यदाशसाऽतिक्रामामि त्रिते देवा गार्हपत्यो दिवि जाता यदाप इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

एतानि प्रतीकानि पूर्वानुवाकवद्व्याख्येयानि ।

अत्र विनियोगसंग्रहः—

यद्देवा दर्भपुञ्जीलैः पूतो जपति मन्त्रकान् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥१२॥

---

अथ त्रयोदशोऽनुवाकः ।

---

द्वादशे यजमानेन जप्या मन्त्रा उक्ताः । त्रयोदशे त्ववभृथकर्मण्यृजीषस्य दध्ना पयसा वा मधुमिश्रेण प्रोक्षणे मन्त्रा उच्यन्ते । तत्र प्रथमं मन्त्रमाह—

यत्ते ग्राव्णा चिच्छिदुः सोमराजन् । प्रियाण्यङ्गानि स्वधिता परूꣳषि । तत्संधत्स्वाऽऽज्येनोत वर्धयस्व । अनागसो अघमित्संक्षयेम, इति ।

हे सोमराजंस्ते तव यानि प्रियाण्यङ्गानि प्रिया अवयवाः स्वधिता परूंषि स्वास्थ्येनावस्थितानि पर्वाणि च ग्राव्णा पाषाणेन चिच्छिदुश्छिन्नवन्तस्तदङ्गजातमाज्येनाऽऽज्यसदृशेन दध्ना पयसा वा संधत्स्व संधानप्राप्तानि प्रकृतिस्थानि यथा भवन्ति तथा कुरु । उतापि च वर्धयस्व भूयो वृद्धतराणि कुरु । ततो वयमनागसोऽपराधरहिता अघमिदनन्तरमेव संक्षयेम सम्यङ्निवसेम ।

अथ द्वितीयं मन्त्रमाह—

यत्ते ग्रावा बाहुच्युतो अचुच्यवुः । नरो यत्ते दुदुहुर्दक्षिणेन । तत्त आप्यायतां

तत्ते । निष्ठ्यायतां देव सोम, इति ।

बाहुच्युत ऋत्विजो बाहुना प्रेरितो ग्रावा ते तव यदङ्गमचुच्यवुरच्यावयत् । नरः पुरुषा ऋत्विजो दक्षिणेन हस्तेन ते यदङ्गं दुदुहू रसस्वीकारेण रिक्तीकृतवन्तस्ते तव तदङ्गमाप्यायतामनेन प्रोक्षणेन वर्धताम् । हे देव सोम ते तदङ्गं निष्ठ्यायतां पूर्वं पीडनेन विश्लिष्टं सत्पुनः संधी भवतु ।

अथ तृतीयं मन्त्रमाह—

यत्ते त्वचं बिभिदुर्यच्च योनिम् । यदास्थाना-
त्प्रच्युतो वेनसि त्मना (१) । त्वया तत्सोम गुप्त-
मस्तु नः । सा नः संधाऽसत्परमे व्योमन्, इति ।

हे सोम ते तव त्वचं बिभिदुर्ऋत्विजो भिन्नवन्त इति यद्योनिं च कारणं कन्दमूलमपि बिभिदुरुत्पाटितवन्त इति यत्, तथा त्वमास्थानादुत्पत्तिस्थानात्प्रच्युतः संस्त्मना वेनस्यात्मना स्वचित्तेनैव तत्स्थानं स्मरसि, इति यत्, हे सोम नोऽस्मदीयं तत्सर्वमपराधजातं त्वया गुप्तं रहस्येवावस्थापितमस्तु। नोऽस्माकं परम उत्कृष्टे व्योमन्विशेषेण रक्षके स्वर्गे निमित्तभूते सति त्वया सह सा संधा तत्संधानमपकारणविस्मृतिलक्षणमसदस्तु ।

अथ चतुर्थं मन्त्रमाह—

अहाच्छरीरं पयसा समेत्य । अन्योऽन्यो भवति
वर्णो अस्य । तस्मिन्वयमुपहूतास्तव स्मः ।
आ नो भज सदसि विश्वरूपे, इति ।

अस्यर्जीषरूपस्य सोमस्य पूर्वसिद्धो योऽन्यो वर्णो नीरसत्वाकारः स तु प्रोक्षणसाधनेनानेन पयसा समेत्य शरीरं पूर्वसिद्धं स्वरूपमहात्यक्तवान् । अन्यो वर्णो नूतनः सरसत्वाकारोऽस्य भवति । तस्मिन्नीरसत्वे गते सरसत्वे समागते सति हे सोम तादृशे त्वय्युपहूता अनुज्ञाता वयं तव स्मस्त्वत्संबन्धिनि कर्मणि समर्था भूयास्म । अतस्त्वं विश्वरूपे सर्वभोग्यफलसमृद्धे सदसि स्थाने नोऽस्मानाभज सर्वतः स्थापय ।

अथ पञ्चममन्त्रमाह—

नृचक्षाः सोम उत शुश्रुगस्तु । मा नो विहा-

सीद्गिरं आवृणानः । अनागास्तनुवो वावृ-
धानः । आ नो रूपं वहतु जायमानः, (२) इति ।

उतापि चायं सोमो नृचक्षा नृन्मध्यानतुग्रहदृशा पश्यञ्शुश्रुगस्त्वस्मद्गिरां श्रोता भवतु । गिरः स्तुतीरावृणानः संभजमानोऽयं सोमो नोऽस्मान्मा विहासीन्मा परित्यजतु । स्तुतिभिः प्रसन्नः सन्नभिषवाद्यपराधं क्षमतामित्यर्थः । ततोऽयमनागा विस्मृतास्मदीयापराधः संस्तनुवो निजशरीराणि वावृधानः प्रत्यङ्गं वर्धयन्नोऽस्माकमाजायमानः सर्वतः सर्वकार्येषु वर्तमानो रूपं तदनुकूलस्वरूपं वहतु स्वी करोतु ।

अथ षष्ठमन्त्रमाह—

उपक्षरन्ति जुह्वो घृतेन । प्रियाण्यङ्गानि तव
वर्धयन्तीः । तस्मै ते सोम नम इद्वषट्च ।
उप मा राजन्त्सुकृते ह्वयस्व, इति ।

जुहूप्रभृतयः स्रुचो घृतेन क्षरणात्मकेन पयोदध्यादिद्रव्येणोपक्षरन्ति हे सोम त्वामुपेत्य सिञ्चन्ति । कीदृश्यो जुह्वस्तव प्रियाण्यङ्गान्यवयवानाप्यायनेन वर्धयन्त्यः । हे सोम तस्मै ते तादृशाय तुभ्यं नम इन्नमस्कार एव । वषट्च वषट्कारो हविष्ट्वेन प्रदानं हे राजन्सुकृते शोभने कर्मफले मामुपह्वयस्वानुजानीहि ।

अथ सप्तममन्त्रमाह—

संप्राणापानाभ्याꣳ शमु चक्षुषा त्वम् ।
सꣳ श्रोत्रेण गच्छस्व सोम राजन् ।
यत्त आस्थितꣳ शमु तत्ते अस्तु ।
जानीतां नः संगमने पथीनाम्, इति ।

हे सोम राजंस्त्वं प्राणादिभिः संगच्छस्व पूर्वमभिषवादिना त्वत्तो वियुक्ताः प्राणादयः पुनस्त्वया संयुज्यन्ताम् । यत्तव शरीर आस्थितमस्माभिः कृतं निष्पीडनादिविकारजातमवस्थितं तत्सर्वं ते तव शमु सुखनिमित्तमेवास्तु । पथीनां स्वर्गाद्युत्तमलोकमार्गाणां संगमने सम्यक्प्राप्तौ जानीताद्धे सोम त्वं नोऽस्माञ्जानीह्यस्माभिः कथितमित्येवमनुस्मर ।

अथाष्टमं मन्त्रमाह—

एतं जानीतात्परमे व्योमन्। वृकाः सधस्था विद
रूपमस्य ( ३ )। यदा गच्छात्पथिभिर्देवयानैः।
इष्टापूर्ते कृणुतादाविरस्मै, इति।

हे हो(सो)म परमे व्योमन्नुत्कृष्टे विशेषेण रक्षके स्वर्ग एतं यजमानं जानीतात्त्वं जानीहि स्वर्गप्राप्त्यर्थमेतमनुगृहाण। हे सधस्था अनेन यजमानेन सहास्मिन्नवस्थिता हे देवा वृकाः पापनिवारकाः सन्तोऽस्य यजमानस्य रूपं कर्मानुष्ठाने वृत्तलक्षणं विद जानीतैतावत्पुण्यमनेन कृतमिति स्मरत। तत्र सतो यदाऽयं यजमानो देवयानैर्देवगमनार्हैः पथिभिर्मार्गैर्गच्छाद्गच्छेत्तदानीमस्मा अस्य यजमानस्येष्टापूर्ते श्रौतस्मार्ते कर्मणी दैविकपैतृककर्मणी वाऽऽविष्कृणुताद्धे सोम स्वर्गलोके प्रकटी कुरु।

अथ नवमं मन्त्रमाह—

अरिष्टो राजन्नगदः परेहि। नमस्ते अस्तु
चक्षसे रघूयते। नाकमारोह सह यजमा-
नेन। सूर्यं गच्छतात्परमे व्योमन्, इति।

हे सोम राजन्नरिष्टः केनचिदप्यहिंसितोऽगदो रोगरहितश्च सन्परेहि परावृत्य स्वस्थाने[1] गच्छ। चक्षसे दर्शने कुशलाय रघूयते लघ्वीं शीघ्रां गतिमात्मन इच्छते ते तुभ्यं नमोऽस्तु। त्वं यजमानेन सह नाकं स्वर्गमारोह। परमे व्योमन्नुत्कृष्टे विशेषेण रक्षके स्वर्गस्थाने स्थितं सूर्यं गच्छतादयं यजमानो गच्छतु।

अथ दशमं मन्त्रमाह—

अभूद्देवः सविता वन्द्यो नु नः। इदानीमह्न
उपवाच्यो नृभिः। वि यो रत्ना भजति मान-
वेभ्यः। श्रेष्ठं नो अत्र द्रविणं यथा दधत्, इति।

सविता देवो नोऽस्माकं नु क्षिप्रमेव वन्द्यो नमस्कार्योऽभूत्। इदानीमस्मि-

---

१ क. °स्थानं ग°।

न्युदयकालेऽह्नो निमित्तभूतान्नृभिर्मनुष्यैरवं सविशेषवाच्य उपेत्य वक्तव्यः स्वस्वव्यापारसिद्ध्यर्थं प्रकाशं कुर्वीति प्रार्थनीयः सविता मानवेभ्यो रत्ना श्रेष्ठानि धनानि भजत्यस्येदमिति विभागं करोति । सोऽयं सविताऽत्रास्मिन्कर्मणि नोऽस्माकं श्रेष्ठं द्रविणमतिप्रशस्तं धनं यथा दधद्यथावत्संपादयतु ।

अथैकादशं मन्त्रमाह—

उप॑ नो मित्रावरुणावि॒हाव॑तम् । अन्वा-
दी॑ध्याथामि॒ह नः॑ सखाया । आ॒दि॒त्याना॑ं
प्रसि॑तिर्हे॒तिः । उ॒ग्रा श॒तापा॑ष्ठा घ॒ वि॒षा
परि॑ णो वृणक्तु, इति ।

हे मित्रावरुणौ नोऽस्मान्सोमापराधरहितानिह कर्मण्युपावतमुपेत्य रक्षतम् । हे सखाया सखिवदत्यन्तास्निग्धौ युवामिह कर्मणि नोऽस्मानन्वादीध्याथामनुक्रमेण सर्वतो दीप्तान्कुरुतम् । आदित्यानां संबन्धिनी हेतिः पापिषु हिंसाकरणसाधन-मायुधं नोऽस्मान्परिवृणक्तु सर्वतो वर्जयतु । कीदृशी हेतिः प्रसितिः प्रकृष्टबन्ध-नोग्रा तीक्ष्णा शतापाष्ठा बहुभिरवयवैः प्रहर्तुं समर्थेत्यर्थः । विषा व्यापिनी । घशब्दो यथोक्तविशेषणसमुच्चयार्थः ।

अथ द्वादशत्रयोदशमन्त्रयोः प्रतीके दर्शयति—

आप्या॑यस्व॒ सं ते॑ (४), इति ।

त्मना॒ जाय॑मानोऽस्य॒ दधत्सर्वं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये त्रयोदशोऽनुवाकः ॥ १३ ॥

---

'आप्यायस्व समेतु ते, सं ते पयांसि' इत्येतौ मन्त्रौ मा नो हिंसीज्जनिते-त्यनुवाके व्याख्यातौ ।

अत्र विनियोगसंग्रहः—

यत्ते ग्राव्णा ऋजीषांस्तु प्रोक्षेद्दध्ना च शाखया ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतै-त्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥१३॥

---

अथ चतुर्दशोऽनुवाकः ।

---

त्रयोदश ऋजीषमोक्षणमन्त्रा उक्ताः । चतुर्दशे त्ववभृथादिसेचनादिमन्त्रा उच्यन्ते । अत्र यजमानोऽवभृथे स्नात्वा त्रिभिर्मन्त्रैरञ्जलिनाऽपो विषिञ्चति । तत्र प्रथमं मन्त्रमाह—

यद्दिदीक्षे मनसा यच्च वाचा । यद्वा प्राणैश्च-
क्षुषा यच्च श्रोत्रेण । यद्रेतसा मिथुनेनाप्या-
त्मना । अद्भ्यो लोका दधिरे तेज इन्द्रियम् ।
शुक्रा दीक्षायै तपसो विमोचनीः । आपो
विमोक्त्रीर्मयि तेज इन्द्रियम् , इति ।

अहं यजमानो मनसा यद्दिदीक्षे यां दीक्षां प्राप्तवानस्मि । मनसो नियमनमेव मानसी दीक्षा । एवं वागादिषु द्रष्टव्यम् । ब्रह्मचर्यं रेतसो दीक्षा । स्त्रिया सह विनोदाभावो मिथुनेन दीक्षा । प्रकृतकर्मव्यतिरिक्तात्पुरुषार्थान्निवृत्तिरात्मनो दीक्षा । तस्याः सर्वस्या मदीयदीक्षाया एता आपो विमोक्त्रीर्विमोचनकर्त्र्योऽतस्ताभिर्दीक्षाभिर्विमोचिते मयि तेज इन्द्रियं च संपद्यताम् । अपां विमोचनहेतुत्वं तेजआदिहेतुत्वं च स्पष्टी क्रियते । लोकाः सर्वेऽप्यन्द्भ्यः सकाशात्तेज इन्द्रियं च दधिरे । अप्सु स्नानेन शरीरमलाभावात्कान्तिर्भवति । अपां पानेन चेन्द्रियं वर्धते । तथा शुक्रा निर्मला आपो दीक्षायै तपसो विमोचनीः सर्वस्य दीक्षादिरूपस्य तपसो विमोचनहेतवः । स्नानादिना नियमसमाप्तिर्भवति । तस्मान्ममापि आप एव दीक्षाया विमोचनं कृत्वेन्द्रियादिकं प्रयच्छन्तु ।

अथ द्वितीयं मन्त्रमाह—

यदृचा साम्ना यजुषा । पशूनां चर्मन्हविषा
दिदीक्षे । यच्छन्दोभिरोषधीभिर्वनस्पतौ ।
अद्भ्यो लोका दधिरे तेज इन्द्रियम् (१)।

---

१ क. °क्षाजाते विमो° । २ क. °न्तिर्वर्धते । अ° । ३ क. ख. °हेतुः । स्ना° ।

शुक्रा दीक्षायै तपसो विमोचनीः। आपो
विमोक्त्रीर्मयि तेज इन्द्रियम्, इति।

अहमृगादिभिर्दिदीक्षे यां दीक्षामृगादिदेवतानुग्रहार्थं दीक्षानियमं प्राप्तोऽस्मि तथा पशूनां चर्मणि कृष्णाजिनादौ यद्दिदीक्षे यच्च हविषा पयआदिना दिदीक्षे यच्च च्छन्दोभिर्मन्त्रगतैर्दिदीक्षे यच्चौषधीभिर्दर्भपुञ्जीलादिभिर्दिदीक्षे यच्च वनस्पतौ दण्डादौ दिदीक्षे। अद्भ्य इत्यादि पूर्ववत्।

अथ तृतीयं मन्त्रमाह—

येन ब्रह्म येन क्षत्रम्। येनेन्द्राग्नी प्रजापतिः
सोमो वरुणो येन राजा। विश्वे देवा ऋषयो
येन प्राणाः। अद्भ्यो लोका दधिरे तेज इन्द्रि-
यम्। शुक्रा दीक्षायै तपसो विमोचनीः।
आपो विमोक्त्रीर्मयि तेज इन्द्रियम्, इति।

येन दीक्षाकर्मणा ब्रह्मक्षत्रादीनि स्वस्वमहिमानं प्रतिपेदिरे। प्राणाश्च यजमानानुष्ठितदीक्षाकर्मणैव स्वकीयोच्छ्वासनिःश्वासादिव्यापारक्षमत्वं प्रतिपेदिरे। अद्भ्य इत्यादि पूर्ववत्।

य आहिताग्निरसोमयाज्यन्यदीये याग आर्त्विज्यं कृत्वा सोमं भक्षयेत्तस्य होमार्थास्त्रयो मन्त्राः। तत्र प्रथमं मन्त्रमाह—

अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं
धाम (२)। अग्नेः प्रियतमꣳ हविः स्वाहा, इति।

हे, आज्य त्वमपां पुष्पं कार्यमसि। अप्सु गोभिः पीतासु क्षीरद्वारेणाऽऽज्यनिष्पत्तेः। तथौषधीनां रसः सारभूतमासि[1]। गोभिर्भक्षिताभ्य ओषधीभ्यो निष्पन्नत्वात्। तथा सोमस्य प्रियं धाम स्थानमसि। सोमो हि देवतात्माऽऽज्येन हुतेन परितुष्यति। किंचाग्नेः प्रियतमं हविरसि। तादृशं त्वां स्वाहुतं करोमि।

---

१ ख. ग. "रम्य"।

अथ द्वितीयतृतीयौ मन्त्रावाह—

अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। इन्द्रस्य प्रियतमꣳ हविः स्वाहा। अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। विश्वेषां देवानां प्रियतमꣳ हविः स्वाहा, इति।

पूर्ववद्व्याख्येयम्।

तथाऽऽज्यशेषस्य भक्षणमन्त्रमाह—

वयꣳ सोम व्रते तव। मनस्तनूषु पिप्रतः। प्रजावन्तो अशीमहि (३), इति।

हे सोम वयं व्रतेऽस्मिन्कर्मणि वर्तमाना मनश्च तनूषु शरीरेषु पिप्रतः पूरयन्तः प्रजावन्तः पुत्रपौत्रादियुक्ता अशीमहि हविःशेषं भक्षयामः।

अथ ये दक्षिणाग्नौ होममन्त्रास्तानाह—

देवेभ्यः पितृभ्यः स्वाहा। सोम्येभ्यः पितृभ्यः स्वाहा। कव्येभ्यः पितृभ्यः स्वाहा, इति।

ये पितरो देवा दीप्तिमन्तो ये च सोम्याः सोमार्हाः कव्या हविर्भुजस्तेभ्यः पितृभ्यः स्वाहुतमस्तु।

यदुक्तं सूत्रकारेण—"तं जघनेन दक्षिणाग्नेः प्रागग्रान्दर्भान्सꣳस्तीर्य दधि दधाति" इति। तत्र मन्त्रत्रयमाह—

देवास इह मादयध्वम्। सोम्यास इह मादयध्वम्। कव्यास इह मादयध्वम्, इति।

देवसोम्यकव्यशब्दवाच्याः पूर्वोक्तास्त्रिविधाः पितर इहास्मिन्नहनि स्वयं हृष्टा अस्मानपि हर्षयध्वम्।

अथोपस्थाने मन्त्रमाह—

अनन्तरिताः पितरः सोम्याः सोमपीथात्, इति।

सोम्याः सोमयोग्याः पितरः सोमपीथात्सोमपानादनन्तरिता अन्तरायरहिता भवन्तु ।

अथ द्वादशाहे दीक्षितेषु समन्वारब्धेषु गार्हपत्ये होममन्त्रमाह—

अपैतु मृत्युरमृतं न आगन् । वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पतेरिव (४) । अभि नः शीयताꣳ रयिः । सचतां नः शचीपतिः, इति ।

योऽयं मृत्युः सोऽयमपैतु । अमृतं मरणराहित्यं नोऽस्मान्प्रत्यागन्नागच्छतु । वैवस्वतो यमोऽस्माकमभयं कृणोतु मरणभीतिराहित्यं करोतु । किंच यथा वनस्पतेः पक्वं पर्णमयत्नेनैव पतति तथा रयिर्धनं नोऽभ्यस्मानभिलक्ष्य शीयतां पततु स्वयमेवाऽऽगच्छत्वित्यर्थः । अपि च शचीपतिरिन्द्रो नोऽस्मान्सचतां समवैतु ।

अथ दक्षिणाग्नौ होममन्त्रमाह—

परं मृत्यो अनुपरेहि पन्थाम् । यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजाꣳ रीरिषो मोत वीरान्, इति ।

हे मृत्यो परं पन्थामस्मान्मार्गादन्यं मार्गमनुपरेहि, अनुक्रमेण पुनरावृत्तिरहितो गच्छ । देवयानात्स्वर्गलोकमार्गादितरो यो मार्गस्ते तव स्वः स्वकीयस्तमनुपरेहीति पूर्वत्रान्वयः । चक्षुष्मतेऽस्मास्वनुग्रहकारिदृष्टियुक्ताय शृण्वतेऽस्मद्विज्ञापनमादरेण स्वीकुर्वते ते तुभ्यमिदं ब्रवीमि । नोऽस्माकं प्रजां पुत्रादिकां मा रीरिषो मा हिंसीः, उतापि च वीरान्भृत्यानपि मा रीरिषः ।

अथाऽऽहवनीये होममन्त्रमाह—

इदमू नु श्रेयोऽवसानमागन्म । यद्गोजिद्धनजिदश्वजिद्यत् । पर्णं वनस्पतेरिव । अभि नः शीयताꣳ रयिः । सचतां नः शचीपतिः (५), इति ।

वनस्पताववन्नचो लोकार्दधिरे तेजं इन्द्रियं धामाशीमहीवाभि नंः श्रीयताः रयिं-रेकं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये चतुर्दशोऽनुवाकः ॥ १४ ॥

सर्वान्यद्विष्वण्णेन वि वै याः पुरस्ताद्देवा देवेषु परिस्तृणीत सक्षेदं यदस्य पारेऽनागस उदस्ताप्सीद्ब्रह्म प्रतिष्ठा यद्देवा यत्ते ग्राव्णा यद्दिदीक्षे चतुर्दश।

सर्वान्भूतिमिव यामेवाप्स्वाहुतिं व्रतानां व्रतपतेँ पर्णवल्कः सोम्यानामस्मिन्य-ज्ञेऽग्ने यो नो ज्योग्जीवाः परोरजास्ते प्रतेमहे ब्रह्म प्रतिष्ठा गार्हपत्यमिश्शदुत्त-रशतम्।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

यद्यागगृहं गोधनाश्वजयकारणमिदमु, इदमेव श्रेयः प्र[illegible]नरम्। अवसाने यागगृहं नु क्षिप्रमागम्माऽऽगताः स्मः। पर्णमित्यादि पूर्ववत्।

अत्र विनियोगसंग्रहः—

यद्दीत्यवभृथे स्नात्वा त्रिभिर्नीरं विषिञ्चति।
अपां पुष्पेत्याहिताग्निरार्त्विज्ये सोमभक्षणे ॥ १ ॥
वयं सोम भक्षयेत देहो मे दक्षिणानले।
देवा दर्भे दधि क्षिप्त्वा ह्यनमित्युपतिष्ठते ॥ २ ॥
अपे होमो द्वादशाहे क्रमादग्निरधे त्रिभिः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ४ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

